C. 3. 12616
B. 3. 183. 59
K. 3. 186. 7

कथं संयुज्यते प्रेत्य इह वा द्विजसत्तम ॥ ७
ऐहलौकिकमेवैतदुताहो पारलौकिकम् ।
क्व च कर्माणि तिष्ठन्ति जन्तोः प्रेतस्य भार्गव ॥ ८

मार्कण्डेय उवाच ।

त्वद्युक्तोऽयमनुप्रश्नो यथावद्वदतां वर ।
विदितं वेदितव्यं ते स्थित्यर्थमनुपृच्छसि ॥ ९
अत्र ते वर्तयिष्यामि तदिहैकमनाः शृणु ।
यथेहामुत्र च नरः सुखदुःखमुपाश्नुते ॥ १०
निर्मलानि शरीराणि विशुद्धानि शरीरिणाम् ।
ससर्ज धर्मतन्त्राणि पूर्वोत्पन्नः प्रजापतिः ॥ ११
अमोघबलसंकल्पाः सुव्रताः सत्यवादिनः ।
ब्रह्मभूता नराः पुण्याः पुराणाः कुरुनन्दन ॥ १२
सर्वे देवैः समायान्ति स्वच्छन्देन नभस्तलम् ।
ततश्च पुनरायान्ति सर्वे स्वच्छन्दचारिणः ॥ १३
स्वच्छन्दमरणाश्चासन्नराः स्वच्छन्दजीविनः ।
अल्पबाधा निरातङ्का सिद्धार्था निरुपद्रवाः ॥ १४
द्रष्टारो देवसंघानामृषीणां च महात्मनाम् ।
प्रत्यक्षाः सर्वधर्माणां दान्ता विगतमत्सराः ॥ १५
आसन्वर्षसहस्राणि तथा पुत्रसहस्रिणः ।
ततः कालान्तरेऽन्यस्मिन्पृथिवीतलचारिणः ॥ १६
कामक्रोधाभिभूतास्ते मायाव्याजोपजीविनः ।
लोभमोहाभिभूताश्च त्यक्ता देवैस्ततो नराः ॥ १७
अशुभैः कर्मभिः पापास्तिर्यङ्नरकगामिनः ।
संसारेषु विचित्रेषु पच्यमानाः पुनः पुनः ॥ १८
मोघेष्टा मोघसंकल्पा मोघज्ञाना विचेतसः ।
सर्वातिशङ्किनश्चैव संवृत्ताः क्लेशभागिनः ।

---

$T_1$ $G_1$ $M_1$ तु ($K_4$ ह) (for च). — $^{b}$) Ś$_1$ $K_2$ मृष्य° (for मृग्य°). — $^{c}$) $D_5$ उभौ (for कथं). Ś$_1$ $K_{1-3}$ $D_{1-3.5}$ संसृज्यते; $B_4$ वियुज्यते. — $^{d}$) Ś$_1$ $K_{1-3}$ $D_{1-3.5}$ देहवान् (for इह वा). $T_1$ इह वापि द्विजोत्तम.

**8** $^{a}$) $K_1$ $D_{1-3}$ $T_2$ (after corr.) इह° (for ऐह°). Ś$_1$ $K_{1.2}$ $D_1$ एतावद्; $K_4$ B Dc Dn $D_{4.6}$ एवेह (for एवैतद्). — $^{c}$) S वा (for च). $G_{1.2}$ कर्मणि. $D_5$ कृतकर्माणि तिष्ठंति. — After 8, $G_1$ ins.:

897* एतत्सर्वं यथावृत्तं मुने वक्तुमिहार्हसि ।

**9** $^{a}$) Ś$_1$ $K_{1.2}$ यदुक्तो; $D_5$ त्वयोक्तो; T $G_{2-4}$ त्वदुक्तो; $M_2$ तद्युक्तो. — $^{c}$) $D_5$ $T_1$ च (for ते). — $^{d}$) $T_2$ $G_{2-4}$ स्मृत्यर्थम्. $K_{1-3}$ $D_5$ त्वनु-; B Dn $D_{4.6}$ त्वं तु; Dc त्वत्र (for अनु-).

**10** $^{a}$) Ś$_1$ $K_{1.2}$ अहं; $B_1$ तात; $T_1$ तत्र (for अत्र). Ś$_1$ $K_{1.2}$ $G_2$ वर्णं°; $K_4$ B D (except $D_{1-3.5}$) कथ° (for वर्तं°). — $^{c}$) $K_2$ अथे°; Dc यत्रे° (for यथे°).

**11** $^{ab}$) S transp. शरीराणि and विशुद्धानि. — $^{c}$) Ś$_1$ $K_2$ शशंस (for ससर्ज). $T_2$ $G_{3.4}$ सर्व° (for धर्म°).

**12** $^{a}$) N °फल° (for °बल°). — $^{b}$) $T_1$ सद्वृत्ताः; $T_2$ $G_{2-4}$ सुवृत्ताः (for सुव्रताः). $B_4$ सिद्धार्था निरुपद्रवाः. — $^{d}$) B D (except $D_{1-3.5}$) कुरुसत्तम; $G_1$ पुरुषर्षभ.

**13** $^{a}$) Ś$_1$ $T_1$ $G_1$ $M_2$ सर्वदेवैः. Ś$_1$ $K_{1-3}$ $D_{2.3.5}$ $T_1$ $G_1$ $M_1$ समं यांति. — $^{b}$) $G_{1.4}$ नभस्थलं. — $^{d}$) S सर्वे ($T_1$ $G_1$ $M_2$ स्वर्गे) छंदविहारिणः.

**14** $^{b}$) Ś$_1$ $K_{1.2}$ सर्वे (for नराः). $K_4$ Dn स्वच्छंदचारिणः. — $^{c}$) $K_3$ $D_2$ अल्पाबाधा; $T_1$ स्वल्पायासा; $T_2$ $G_{2-4}$ निराबाधा; $G_1$ M स्वल्पा($G_1$ °ल्प)बाधा. Ś$_1$ निरी**; $Dc_{1.2}$ (by corr.) $G_1$ M निरीति($G_1$ $M_2$ °ती)काः. — $^{d}$) $T_2$ $G_{2-4}$ नीरुजा; $G_1$ स्वल्पार्था (for सिद्धार्था). $K_3$ निरुपस्कृताः.

**15** $^{a}$) $K_{1.2}$ स्रष्टारो. — $^{c}$) $T_1$ $G_1$ M प्रत्यक्ष($G_1$ °क्षं)-सर्वधर्माणः; $T_2$ (by corr.) $G_3$ प्रत्यक्षं सर्वधर्माणां; $G_{2.4}$ प्रकृत्या सर्वधर्माणः. — $^{d}$) Ś$_1$ $K_{1.2}$ $D_{1-3}$ शांता (for दान्ता).

**16** $^{a}$) $D_5$ आयुर् (for आसन्). $K_4$ $B_{1m.2.4}$ Dn $D_{2.4.6}$ °सहस्रीयाः; M °सहस्रेण. — $^{b}$) $K_2$ वर्ष° (for पुत्र°). — $^{c}$) S (except $T_2$ $G_3$ $M_1$) तस्मिन् (for ऽन्यस्मिन्). — $^{d}$) $B_1$ (m as in text) तथा क्षत्रसहस्रिणः (cf. $^{b}$); $B_4$ पृथिंवीतलवासिनः.

**17** $^{b}$) $D_5$ धर्मव्याजोप°; $T_1$ मायाव्यामोह°. — $^{c}$) S मोहलोभाभिभूताश्. Dc ते (for च). — $^{d}$) $K_4$ B Dn $D_{4.6}$ त्यक्ता देहैस् ($B_4$ त्यक्तदेहास्); Dc त्यक्तदेहैस्. Ś$_1$ $K_{1.2}$ $D_5$ सदा; $K_{3.4}$ $D_{1-3}$ तदा (for ततो).

**18** $^{a}$) $K_2$ अशुभिः; $M_1$ आशुभिः (for अशुभैः). $K_2$ पापैस् (for पापास्). — $^{b}$) $K_1$ °निरयभागिनः; $K_{3.4}$ B D °निरयगामिनः; $K_2$ °गामिनभागिनः; $T_2$ (by corr.) G $M_2$ °नरकभा($M_2$ °भो)गिनः. — $^{c}$) $K_2$ विचित्येषु (for विचि°). — $^{d}$) $K_2$ $D_5$ पश्य°; $D_{1-3}$ पात्य° (for पच्य°).

**19** $^{a}$) $D_{1.5.6}$ मोघेच्छा. — $^{b}$) = Gītā (Vulg.) 9. 12$^{b}$. $T_2$ $G_{2-4}$ विबुद्धयः (for विचे°). $K_3$ $D_3$ मोघ($D_3$ °ह)ज्ञानविचेतसः; $T_1$ $G_1$ M °ज्ञानविबुद्धयः. — After 19$^{ab}$, $T_1$ $G_1$ $M_1$ read 20$^{ef}$;

अशुभैः कर्मभिश्चापि प्रायशः परिचिह्निताः ॥ १९
दौष्कुल्या व्याधिबहुला दुरात्मानोऽप्रतापिनः ।
भवन्त्यल्पायुषः पापा रौद्रकर्मफलोदयाः ।
नाथन्तः सर्वकामानां नास्तिका भिन्नसेतवः ॥ २०
जन्तोः प्रेतस्य कौन्तेय गतिः स्वैरिह कर्मभिः ।
प्राज्ञस्य हीनबुद्धेश्च कर्मकोशः क्व तिष्ठति ॥ २१
क्वस्थस्तत्समुपाश्नाति सुकृतं यदि वेतरत् ।
इति ते दर्शनं यच्च तत्राप्यनुनयं शृणु ॥ २२
अयमादिशरीरेण देवसृष्टेन मानवः ।
शुभानामशुभानां च कुरुते संचयं महत् ॥ २३
आयुषोऽन्ते प्रहायेदं क्षीणप्रायं कलेवरम् ।
संभवत्येव युगपद्योनौ नास्त्यन्तराभवः ॥ २४
तत्रास्य स्वकृतं कर्म छायेवानुगतं सदा ।
फलत्यथ सुखार्हो वा दुःखार्हो वापि जायते ॥ २५
कृतान्तविधिसंयुक्तः स जन्तुर्लक्षणैः शुभैः ।
अशुभैर्वा निरादानो लक्ष्यते ज्ञानदृष्टिभिः ॥ २६
एषा तावदबुद्धीनां गतिरुक्ता युधिष्ठिर ।
अतः परं ज्ञानवतां निबोध गतिमुत्तमाम् ॥ २७
मनुष्यास्तप्ततपसः सर्वागमपरायणाः ।
स्थिरव्रताः सत्यपरा गुरुशुश्रूषणे रताः ॥ २८
सुशीलाः शुक्लजातीयाः क्षान्ता दान्ताः सुतेजसः ।
शुभयोन्यन्तरगताः प्रायशः शुभलक्षणाः ॥ २९

C. 3. 12639
B. 3. 183. 82
K. 3. 186. 30

---

while $G_{2.4}$ ins.:

898* काङ्क्षिणः सर्वकामानां नास्तिका भिन्नसेतवः ।

— $T_2$ $G_3$ om. 19$^b$–20$^d$. — $^c$) $K_2$ B D (except $D_{1-3.5}$) सर्वाभि°. — $^d$) $Ś_1$ $K_{1.2}$ क्लेशभाजनाः; $K_4$ $B_{1.2}$ (m as in text). $_3$ Dn $D_{4.6}$ °दायिनः. — $^e$) $D_5$ S ($T_2$ $G_3$ om.) चैव (for चापि).

**20** $T_2$ $G_3$ om. 20$^{abcd}$ (cf. v.l. 19). — $^a$) $K_3$ $D_{1-3}$ दौःकुला; $T_1$ दुर्बला. — $^b$) $Ś_1$ $K_{1.2}$ $B_1$ $G_4$ M °प्रतापिनः; $K_3$ °पि तापिनः; $D_{1.2.5}$ $T_1$ $G_2$ °भिमानिनः; $D_3$ °नुतापिनः. — $^c$) $D_5$ एवं तु (for भवन्ति). $D_5$ पापाद्; $T_1$ प्राणा — $^d$) $Ś_1$ $K_{1.2}$ °फलोपगाः. — $T_1$ $G_1$ $M_1$ read 20$^{ef}$ after 19$^{ab}$. — $^e$) $Ś_1$ K $D_{1-3.5}$ ईहंतः ($K_3$ अभाग्याः); $T_1$ तथातः; $T_2$ $G_3$ कांक्षिणः (for नाथन्तः). $K_4$ सर्वकार्याणां; T $G_3$ °भूतानां; $G_{2.4}$ °कामान्वै. $M_2$ नाथवंतः सर्वकामान्. — $^f$) $K_4$ B D (except $D_5$) $G_{2.4}$ भिन्नचेतसः.

**21** $M_2$ om. 21$^a$–23$^b$. — $^b$) $T_2$ G गतिं (for गतिः). $Ś_1$ K $D_{1-3.5}$ एव (for इह). — Before 21$^{cd}$, $K_2$ $B_{1-3}$ $Dc_1$ $D_5$ ins. युधिष्ठिर उ°. — $^c$) S ($M_2$ om.) प्राप्त° (for प्राज्ञ°). $Ś_1$ $K_{1.2}$ °बुद्धेषु; $D_5$ °बुद्धेर्वा. $K_4$ प्रज्ञाविहीनबुद्धेस्तु.

**22** $M_2$ om. 22 (cf. v.l. 21). — $^a$) $M_1$ क्वाथ (for क्वस्थस्). $Ś_1$ $K_2$ च तमुपा°; $K_1$ तं समुपा°; $K_4$ तत्तदुपा°; $D_3$ तु तमुपा°; $D_5$ सन्समुपा°. — $^b$) $K_{1.3}$ $M_1$ वेतरं; $D_2$ $T_2$ $G_{2.3}$ चेतरत्. — After 22$^{ab}$, B Dc ins.:

899*　　मार्कण्डेय उवाच ।
त्वद्युक्तोऽयमनुप्रश्नः शृणु भारत तत्त्वतः ।

— $B_4$ om. 22$^{cd}$. — Before 22$^{cd}$, $K_2$ $D_5$ ins. मार्कंडेय उ°. — $^d$) Dc (*sup. lin.* as in text) तथा; $T_1$ $M_1$ तस्य; $G_{2.4}$ तच्च (for तत्र). $G_1$ [अ]प्यनुनीयं शृणुष्व मे.

**23** $M_2$ om. 23$^{ab}$ (cf. v.l. 21). — $^b$) $Ś_1$ $K_2$ $D_{2.5}$ दैवसृष्टेन; $K_{1.4}$ देवैः सृष्टेन; $K_3$ देवदृष्टेन. — $^d$) $Ś_1$ $K_{1.2}$ $D_{1.2.5}$ मुहुः (for महत्). $B_1$ कुरुते कोषसंचयं.

**24** $^a$) $M_1$ वि- (for प्र-). — $^b$) $G_4$ $M_1$ क्षीणप्राणं. — $^d$) $D_3$ [अ]त्र संभवं; $D_5$ [अ]त्र संशयः (for [अ]न्तराभवः).

**25** $^a$) $T_1$ तस्य (for तत्र). $T_2$ $G_{2-4}$ [अ]पि (for [अ]स्य). $K_3$ $B_{2-4}$ सुकृतं; $D_5$ तत्कृतं. — After 25$^{ab}$, $D_1$ ins.:

900* अनुशेते शयानं च तिष्ठन्तं चानुतिष्ठति ।
अनुधावति धावन्तं पूर्वकर्म कृतं नरम् ।

— $^c$) $D_5$ भव° (for फल°). $Ś_1$ $K_{1.2}$ [अ]त्र (for [अ]थ). $Ś_1$ $K_1$ सुखार्हे. — $^d$) $Ś_1$ Dc दुःखार्हे. $B_{2.3}$ Dn $D_{4.6}$ $T_2$ $G_{2-4}$ अथ; Dc उप-; $D_{1.2.5}$ अभि- (for अपि).

**26** $^d$) $T_1$ स्थानदृष्टिभिः; $G_{1.4}$ ज्ञानवृष्टिभिः; $G_2$ °वृत्तिभिः. $T_2$ (before corr.) लक्षणैर्ज्ञानवृत्तिभिः.

**27** $^a$) $Ś_1$ K $G_1$ $M_1$ अबुद्धानां. — $^b$) $D_1$ नराधिप (for युधि°). — $^d$) $Ś_1$ $K_{1.2}$ $M_1$ गतिर्.

**28** After 28$^{ab}$, S (except $T_1$) reads 30$^{ab}$. — $T_1$ om. 28$^c$–30$^b$. — $^c$) $K_2$ $D_3$ स्थिरवृत्ताः; $K_3$ $M_2$ स्थितव्रताः. — 28$^d$ = (var.) 1. 2. 213$^d$; 57. 98$^d$; 173. 11$^d$; etc.

**29** $T_1$ om. 29 (cf. v.l. 28). — $^b$) $T_2$ (before corr.) कांता; $G_{2.4}$ क्लांता (for क्षान्ता). $B_4$ $M_2$ सुचेतसः. — $G_2$ om. 29$^{cd}$. — $^c$) $K_4$ B D (except $D_{1-3.5}$) शुचि°.

C. 3. 12639
B. 3. 183. 83
K. 3. 186. 31

जितेन्द्रियत्वाद्वशिनः शुक्लत्वान्मन्दरोगिणः ।
अल्पबाधपरित्रासाद्भवन्ति निरुपद्रवाः ॥ ३०
च्यवन्तं जायमानं च गर्भस्थं चैव सर्वशः ।
स्वमात्मानं परं चैव बुध्यन्ते ज्ञानचक्षुषः ।
कर्मभूमिमिमां प्राप्य पुनर्यान्ति सुरालयम् ॥ ३१
किंचिद्दैवाद्धठात्किंचित्किंचिदेव स्वकर्मभिः ।
प्राप्नुवन्ति नरा राजन्मा तेऽस्त्वन्या विचारणा ॥ ३२
इमामत्रोपमां चापि निबोध वदतां वर ।
मनुष्यलोके यच्छ्रेयः परं मन्ये युधिष्ठिर ॥ ३३
इह वैकस्य नामुत्र अमुत्रैकस्य नो इह ।
इह चामुत्र चैकस्य नामुत्रैकस्य नो इह ॥ ३४
　धनानि येषां विपुलानि सन्ति
　　नित्यं रमन्ते सुविभूषिताङ्गाः ।
तेषामयं शत्रुवरघ्न लोको
　नासौ सदा देहसुखे रतानाम् ॥ ३५
ये योगयुक्तास्तपसि प्रसक्ताः
　स्वाध्यायशीला जरयन्ति देहान् ।
जितेन्द्रिया भूतहिते निविष्टा-
　स्तेषामसौ नायमरिघ्न लोकः ॥ ३६
ये धर्ममेव प्रथमं चरन्ति
　धर्मेण लब्ध्वा च धनानि काले ।
दारानवाप्य क्रतुभिर्यजन्ते
　तेषामयं चैव परश्च लोकः ॥ ३७
ये नैव विद्यां न तपो न दानं
　न चापि मूढाः प्रजने यतन्ते ।
न चाधिगच्छन्ति सुखान्यभाग्या-

---

**30** $T_1$ om. $30^{ab}$. S (except $T_1$) reads $30^{ab}$ after $28^{ab}$. — $^{b}$) $T_2$ (before corr.) $G_{2.4}$ सत्कृत्यान्; $T_2$ (after corr.) $G_{1.3}$ शुद्धत्वान्. $D_1$ $G_{1.2.4}$ मंदरागिणः. — $^{c}$) $K_{1.4}$ $B_{1-3}$ Dn $D_{4.6}$ अल्पाबाधपरित्रासाद्; $K_2$ $D_5$ $G_{2.4}$ $M_2$ अल्पबाधपरित्रासा; $K_3$ $D_{1.2}$ $M_1$ अल्पाबाधापरित्रासा; $B_4$ Dc अल्पाबाधा निरातंका; $D_3$ $T_2$ $G_{1.3}$ अल्पबाधापरित्रासा; $T_1$ अबाधा अपरित्रासा.

**31** $^{a}$) $K_{1.2}$ श्रयंतं; $T_2$ (before corr.) $G_{2.4}$ भवंतं (for च्यवन्तं). $T_1$ भवंति ज्ञानमानाश्च. — $^{b}$) $K_2$ गतस्थं चैव; $D_5$ स्वगर्भस्थं च; $T_1$ स्वर्गस्थाश्चैव. $Ś_1$ $K_1$ सर्वदा; $K_2$ सर्वथा. — $^{c}$) $D_3$ स्वमात्मजं. — $^{d}$) $B_{1-3}$ D (except $D_{1-3.5}$) $T_2$ $G_3$ °चक्षुषा. — After $31^{cd}$, N ins.:

901* ऋषयस्ते महात्मानः प्रत्यक्षागमबुद्धयः ।
[$Ś_1$ $K_{1.2}$ °दृष्टयः (for °बुद्धयः).]

— $^{f}$) $Ś_1$ $K_{1.2}$ प्रयास्यंति पुनर्दिवं. — After 31, S ins.:

902* कृत्वा शुभानि कर्माणि ज्ञानेन भरतर्षभ ।

**32** $32^{ab}$ = (var.) 3. 33. $32^{ab}$. — $^{a}$) $G_1$ देवात् (for दैवात्). $T_2$ $G_{2-4}$ दै($G_{2.4}$ दे)ववशात् (for दैवाद्धठात्). $K_3$ $B_1$ वधात्; $B_{2-4}$ $Dc_1$ $D_4$ हतात् (for हठात्). — $^{b}$) $D_{1.2}$ स्वभावतः (cf. v.l. 3. 33. $32^{b}$). — $^{c}$) $Ś_1$ $K_{1-3}$ $D_{1.3.5}$ महाराज; $D_2$ महात्मानो (for नरा राजन्). — $^{d}$) $Ś_1$ तेस्त्वत्र; $K_2$ °स्त्वनु-; $K_3$ °स्त्यन्या; $B_4$ $T_1$ $G_1$ M °न्याभूद् (for तेऽस्त्वन्या). $T_2$ (before corr.) $G_{2.4}$ जातेत्यागूढवारणा ($G_4$ °चारिणः).

**33** $^{a}$) $K_2$ अन्योपमां (for अत्रो°). $Ś_1$ $K_{1-3}$ $D_{1-3.5}$ चैव (for चापि). — $^{c}$) $T_1$ ज्ञेयः (for श्रेयः).

**34** $^{a}$) $Ś_1$ $K_{1-3}$ $D_{3.5}$ $G_{1.2.4}$ इहैवै($K_1$ °व)कस्य; $B_3$ Dc $Dn_1$ $D_{1.2.6}$ $M_1$ इह चैकस्य. — $^{b}$) $Ś_1$ $K_{1.2}$ कस्य (for [ए]कस्य). — $K_{1.2}$ $B_2$ $D_5$ $T_1$ om. (hapl.) $34^{cd}$. — $^{c}$) $B_{1.4}$ D (except $Dn_1$ $D_{2.3}$; $D_5$ om.) वा° (for चा°).

**35** $^{a}$) $T_2$ (before corr.) $G_{2.4}$ चैषां (for येषां). — $^{b}$) $D_{2.3}$ भुवि भूषितांगाः; S सु($T_2$ $G_3$ च)विभूषिताश्च. — $^{d}$) S ग्राम्य° (for देह°).

**36** $^{a}$) $K_{3.4}$ $B_4$ $D_{1.2}$ S युक्तयोगास् (for योगयुक्तास्). $K_3$ $D_{1.3}$ $G_1$ प्रयुक्ताः; $G_4$ प्रसिक्ताः. — $^{b}$) $Ś_1$ $K_{1-3}$ $D_{1-3.5}$ स्वाध्यायवंतो. $K_2$ $G_4$ जनयंति. $K_{1.2}$ $B_{1-3}$ $D_5$ $T_1$ $G_1$ $M_1$ देहं. — $^{c}$) $B_4$ भूतिपथे (for भूतहिते). $Ś_1$ $K_{1.2}$ नियुक्तास्. $K_4$ $B_{1-3}$ D (except $D_{1-3.5}$) जितेंद्रियाः प्राणिवधे निवृत्तास्.

**37** $^{b}$) $K_4$ $Dc_1$ Dn $D_{1.4.6}$ नि- (for च). $B_4$ लोके (for काले). — $^{c}$) $K_{1.2}$ धनानि (for दारान्). $D_2$ यजंति.

**38** $^{a}$) $D_{1.2}$ येषां न (for ये नैव). $K_3$ $D_{1.2}$ विद्या. — $^{b}$) $K_3$ यजंते; $B_{1-3}$ Dn $D_6$ यतंति; Dc यजस्ते. — $^{c}$) $B_4$ $Dc_1$ Dn $D_{1.2.4.6}$ चानु-; $Dc_2$ $T_2$ G $M_2$ चापि; $T_1$ चाभि- (for चाधि-). $K_4$ सुखानि भोगास्; $B_{2.3m.4}$ सुखानु($B_3m$ °नि)भोगान्; Dn $D_{1.4.6}$ सुखान्न($D_1$ °न्य) भोगान्; $D_2$ सुखानुभाग्यास्; $T_1$ धनानि भार्यास्; $T_2$ (before corr.) $G_{2.4}$ M शुभान्यभागास् ($M_1$ °ग्यास्); $T_2$ (after

स्तेषामयं चैव परश्च नास्ति ॥ ३८
सर्वे भवन्तस्त्वतिवीर्यसत्त्वा
दिव्यौजसः संहननोपपन्नाः ।
लोकादमुष्मादवनिं प्रपन्नाः
स्वधीतविद्याः सुरकार्यहेतोः ॥ ३९
कृत्वैव कर्माणि महान्ति शूरा-
स्तपोदमाचारविहारशीलाः ।
देवानृषीन्प्रेतगणांश्च सर्वा-
न्संतर्पयित्वा विधिना परेण ॥ ४०
स्वर्गं परं पुण्यकृतां निवासं
क्रमेण संप्राप्स्यथ कर्मभिः स्वैः ।
मा भूद्विशङ्का तव कौरवेन्द्र
दृष्ट्वात्मनः क्लेशमिमं सुखार्ह ॥ ४१

इति श्रीमहाभारते आरण्यकपर्वणि एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

## १८२

वैशंपायन उवाच ।
मार्कण्डेयं महात्मानमूचुः पाण्डुसुतास्तदा ।
माहात्म्यं द्विजमुख्यानां श्रोतुमिच्छाम कथ्यताम् ॥१
एवमुक्तः स भगवान्मार्कण्डेयो महातपाः ।
उवाच सुमहातेजाः सर्वशास्त्रविशारदः ॥ २
हैहयानां कुलकरो राजा परपुरंजयः ।
कुमारो रूपसंपन्नो मृगयामचरद्बली ॥ ३
चरमाणस्तु सोऽरण्ये तृणवीरुत्समावृते ।
कृष्णाजिनोत्तरासङ्गं ददर्श मुनिमन्तिके ।
स तेन निहतोऽरण्ये मन्यमानेन वै मृगम् ॥ ४
व्यथितः कर्म तत्कृत्वा शोकोपहतचेतनः ।
जगाम हैहयानां वै सकाशं प्रथितात्मनाम् ॥ ५

C. 3. 12657
B. 3. 184. 6
K. 3. 187. 6

corr.) $G_{3}$ शुभान्नभोगान्; $G_{1}$ धनान्यभाग्यास्. — [d]) Dc $Dn_{1. n2}$ $D_{6}$ न (for च). $K_{4}$ B D (except $D_{1-3. 5}$) लोकः (for नास्ति).

**39** [a]) $B_{4}$ °वीर्यवंतो. — [c]) $D_{5}$ च दिवं (for अवनिं). — [d]) $K_{3}$ स्वधीतवेदाः; $T_{1}$ स्वधीत्य विद्याः; $G_{1. 2. 4}$ $M_{2}$ स्वा($G_{1}$ त्व)धीतविद्याः.

**40** [a]) $Ś_{1}$ $K_{1-3}$ $D_{1-3}$ [इ]ह (for [ए]व). — [b]) T G °हार° (for °चार°). — [c]) $K_{2}$ भूतगणांश्च; S (except T $G_{3}$) प्रेतगतांश्च. S (except $T_{2}$ $M_{2}$) पूर्वान् (for सर्वान्).

**41** [a]) $Ś_{1}$ $K_{1. 2}$ $D_{1. 3}$ स्वर्गं. $K_{4}$ $B_{2-4}$ $Dc_{1}$ Dn $D_{4}$ पुण्यकृतो. — [d]) $T_{1}$ दृष्ट्वात्मानं; $T_{2}$ G दृष्ट्वा महा- ($G_{1}$ मनः-). $K_{1}$ सुखार्हः; $K_{3}$ °र्हां; $K_{4}$ $B_{2. 3}$ Dc Dn $D_{4. 6}$ °र्हे; $B_{1. 4}$ $D_{1-3}$ $T_{1}$ $G_{1}$ $M_{2}$ °र्हाः; $T_{2}$ $G_{2-4}$ °र्थैः.

Colophon. — *Major parvan:* $Ś_{1}$ $K_{2}$ $T_{2}$ $G_{2-4}$ आरण्य. — *Sub-parvan:* $K_{4}$ Dc Dn $D_{4. 6}$ $G_{1}$ मार्कंडेयसमा($Dn_{2}$ $D_{6}$ $G_{1}$ °म)स्या; $B_{1. 3}$ मार्कंडेय; $D_{1. 2. 5}$ मार्कंडेयवाक्य. — *Adhy. name:* $Ś_{1}$ $K_{1. 2}$ धर्मनिर्णयः; $D_{1}$ वासुदेवसमागमः; $D_{2}$ वासुदेवाभिगमनं. — *Adhy. no.* (figures, words or both): Dn 182 ($Dn_{3}$ 183); $D_{1}$ 190; S ($M_{2}$ *inf. lin.*) 185 ($M_{2}$ orig. 187). — *Śloka no.:* Dn 96; $D_{1}$ 44 and 46.

## 182

**1** [ab]) $T_{1}$ $G_{1}$ $M_{1}$ ततो युधिष्ठिरो राजा मार्कंडेयमुवाच ह. — [d]) $K_{1-3}$ $Dn_{2}$ $D_{2}$ T $G_{1. 3}$ $M_{1}$ इच्छामि.

**2** [b]) $D_{5}$ महानृषिः (for °तपाः). — [cd]) $K_{3. 4}$ $B_{4}$ $D_{5}$ $T_{2}$ $G_{3}$ कथयामास माहात्म्यं ब्राह्मणानां महात्मनां; $T_{1}$ $G_{1}$ $M_{1}$ उवाच सुमहात्मानं राजानं सर्वशास्त्रवित्.

**3** Before 3, all MSS. except $T_{2}$ $G_{3. 4}$ ins. मार्कं($Ś_{1}$ $K_{1}$ °र्कां)डेय उ° ($Ś_{1}$ S om. उ°). — [a]) $Ś_{1}$ $K_{1}$ S हेहयानां. $Ś_{1}$ K $D_{1-3. 5}$ कुले जातो (for कुल°). — [d]) $K_{4}$ B D (except $D_{2. 3. 5}$) व्यचरद् (for अच°).

**4** [a]) $B_{3. 4}$ S च (for तु). $Ś_{1}$ $K_{1. 2}$ ततो; $K_{3}$ तदा; $B_{2}$ तु यो (for तु सो). — [b]) $Ś_{1}$ $K_{1. 2}$ $D_{2}$ °समाकुले. — [d]) $T_{1}$ मुनिसत्तमं. — [e]) S हिंसितो (for निहतो).

**5** [c]) $Ś_{1}$ $K_{1}$ S हेहयानां. $Ś_{1}$ K $D_{2. 3. 5}$ स (for वै).

C. 3. 12657
B. 3. 184. 6
K. 3. 187. 6

राज्ञां राजीवनेत्रोऽसौ कुमारः पृथिवीपते ।
तेषां च तद्यथावृत्तं कथयामास वै तदा ॥ ६
तं चापि हिंसितं तात मुनिं मूलफलाशिनम् ।
श्रुत्वा दृष्ट्वा च ते तत्र बभूवुर्दीनमानसाः ॥ ७
कस्यायमिति ते सर्वे मार्गमाणास्ततस्ततः ।
जग्मुश्चारिष्टनेमेस्ते तार्क्ष्यस्याश्रममञ्जसा ॥ ८
तेऽभिवाद्य महात्मानं तं मुनिं संशितव्रतम् ।
तस्थुः सर्वे स तु मुनिस्तेषां पूजामथाहरत् ॥ ९
ते तमूचुर्महात्मानं न वयं सत्क्रियां मुने ।
त्वत्तोऽर्हाः कर्मदोषेण ब्राह्मणो हिंसितो हि नः ॥ १०
तानब्रवीत्स विप्रर्षिः कथं वो ब्राह्मणो हतः ।
क्व चासौ ब्रूत सहिताः पश्यध्वं मे तपोबलम् ॥ ११
ते तु तत्सर्वमखिलमाख्यायास्मै यथातथम् ।
नापश्यंस्तमृषिं तत्र गतासुं ते समागताः ।
अन्वेषमाणाः सव्रीडाः स्वप्नवद्गतमानसाः ॥ १२
तानब्रवीत्तत्र मुनिस्तार्क्ष्यः परपुरंजयः ।
स्यादयं ब्राह्मणः सोऽथ यो युष्माभिर्विनाशितः ।
पुत्रो ह्ययं मम नृपास्तपोबलसमन्वितः ॥ १३
ते तु दृष्ट्वैव तमृषिं विस्मयं परमं गताः ।
महदाश्चर्यमिति वै विब्रुवाणा महीपते ॥ १४
मृतो ह्ययमतो दृष्टः कथं जीवितमाप्तवान् ।
किमेतत्तपसो वीर्यं येनायं जीवितः पुनः ।
श्रोतुमिच्छाम विप्रर्षे यदि श्रोतव्यमित्युत ॥ १५
स तानुवाच नास्माकं मृत्युः प्रभवते नृपाः ।
कारणं वः प्रवक्ष्यामि हेतुयोगं समासतः ॥ १६
सत्यमेवाभिजानीमो नानृते कुर्महे मनः ।

---

**6** [b]) $K_{3.4}$ $B_2$ $Dc_1$ Dn $D_{1.4.6}$ $M_2$ पृथिवीपतिः. — [c]) $Ś_1$ $K_2$ तथावृत्तं. — [d]) $K_{1.2}$ कौरव (for वै तदा). — After 6, S ins.:

903* सुकुमारो महीपालो हेहयानां महीभृताम् ।

**7** [a]) $D_{1.2}$ ते; $M_2$ तच् (for तं). — [b]) $K_{3.4}$ $B_4$ Dc $D_{2.3}$ S (except $T_2$ $G_3$) °फलाशनं. — [c]) $Ś_1$ $K_{1-3}$ $B_4$ $D_{2.3}$ transp. श्रुत्वा and दृष्ट्वा. $G_1$ तत्रैव (for ते तत्र).

**8** [a]) $B_4$ क्वासौ स; $T_2$ $G_{2-4}$ क्व चायम्. — [c]) $K_4$ B D (except $D_{1.4.6}$) $M_2$ °नेम्नोथ; $T_1$ °नाशाय; $T_2$ $G_3$ °नेमिश्च; $G_1$ $M_1$ °नेमेस्तु; $G_{2.4}$ °नेमेश्च. — [d]) $Ś_1$ $K_{1.2}$ उत्तमं (for अञ्जसा).

**9** [b]) $T_1$ $G_1$ ऋषिं (for मुनिं). $Ś_1$ $K_{2-4}$ $D_{1-3.5}$ $T_2$ $G_3$ शंसितव्रतं; $B_{2-4}$ Dc Dn $D_{4.6}$ नियतव्रतं. $B_1$ मुनिं सुनियतव्रतं. — [c]) $K_{1.2}$ च (for तु). — [d]) $K_4$ $D_{1-3}$ अथाकरोत्; $D_5$ समाहरत्; $M_1$ समारभेत्.

**11** Before 10, Dc ins. मार्कंडेय उ°. — [a]) $K_3$ ब्रह्मर्षिः; $K_4$ राजर्षिः. — [b]) $Ś_1$ $K_{1.2}$ केन (for कथं). $K_2$ $Dn_{2}$. $n_3$ वा; $M_2$ भो (for वो). — [c]) $K_2$ च मां (for चासौ). $K_1$ $G_2$ ब्रूहि.

**12** $T_1$ om. $12^{ab}$. — [a]) Dc ते तत्र; $D_5$ तच्च ते (for ते तु तत्). — [c]) $M_1$ मुनिं (for ऋषिं). — [d]) $M_2$ गतायुस्. $D_3$ वै (for ते). $T_1$ समाहताः; $G_{1.2}$ समाहिताः. — [e]) $B_{1.2.4}$ अन्विष्य°. $B_1$ $M_2$ व्रीडिताः; $D_2$ सुव्रीडाः. — [f]) $B_{1-3}$ सुप्तवद्; $D_1$ स्वदुःख-. $K_4$ $B_2$ Dc Dn $D_{4.6}$ गतचेतनाः; $B_{1.3}$ गतचेतसः. $T_2$ $G_{2-4}$ तं विप्रं दीनमानसाः.

**13** [c]) $T_{1.2}$ (before corr.) $G_{2.4}$ सोत्र (for सोऽथ). — [d]) $K_4$ B D (except $D_{1-3.5}$) transp. यो and युष्माभिर्. $T_{1.2}$ (after corr.) $G_{1.3}$ समाहतः (for विना°). — $Ś_1$ $K_{1.2}$ om. $13^{ef}$.

**14** [a]) $B_{1-3}$ D (except $D_{1-3.5}$) च (for तु). — [c]) $D_5$ सहसा° (for महदा°). $T_1$ $G_1$ $M_1$ ते (for वै). — [d]) $K_4$ B D (except $D_{1-3.5}$) ते (for वि-).

**15** [a]) $Ś_1$ $K_{1.2}$ $D_{1.2}$ [ऽ]पि (for हि). $Ś_1$ $K_{1-3}$ $D_{1-3.5}$ अथो दृष्टः; $K_4$ B Dc Dn $D_{4.6}$ उपानीतः; $T_1$ $G_{1.2}$ $M_1$ इतो दृष्टः. — [b]) $Ś_1$ $K_{1.2}$ कथं जीवति त्वात्मवान्. — [c]) $K_{1.2}$ ते तत्; $D_3$ तु तत् (for एतत्). $Ś_1$ $K_{1.2}$ तपसां. — [d]) $Ś_1$ $K_{1.2}$ [अ]सौ (for [अ]यं). — [e]) $K_{1.3}$ $B_4$ $D_{2.5}$ S (except $G_4$) इच्छामि. $K_{3.4}$ ब्रह्मर्षे (for विप्र°). $B_{1-3}$ Dc Dn $D_{4.6}$ श्रोतुमिच्छामहे विप्र.

**16** [c]) $K_4$ S च; $D_1$ तत् (for वः). — [d]) $Ś_1$ K $D_{1-3.5}$ हेतुयुक्तं. $Ś_1$ $K_{1.2}$ सनातनं; $K_3$ समागतः. $B_{2.4}$ $Dc_2$ Dn $D_{4.6}$ हेतुयोगसमासतः. — After 16, $D_1$ reads 19; while $T_1$ $G_1$ $M_1$ ins.:

904* शुद्धाचारा अनलसाः संध्योपासनतत्पराः ।
सुशुद्धान्नाः शुद्धधना ब्रह्मचर्यव्रतान्विताः ।;

and finally, $T_2$ $G_{2-4}$ $M_2$ ins.:

905* मृत्युः प्रभवते येन नास्माकं नृपसत्तमाः ।

**17** [b]) $T_1$ $G_1$ जपयज्ञपरायणाः. — [c]) $G_1$ कारणं च न तिष्ठामस्. — [d]) = $18^d$, $19^d$. $Ś_1$ $K_2$ मृत्युरयं.

**18** $Ś_1$ $K_{1.2}$ $M_2$ om. (? hapl.) 18. — [c]) S ($M_2$

स्वधर्ममनुतिष्ठामस्तस्मान्मृत्युभयं न नः ॥ १७
यद्ब्राह्मणानां कुशलं तदेषां कथयामहे ।
नैषां दुश्चरितं ब्रूमस्तस्मान्मृत्युभयं न नः ॥ १८
अतिथीनन्नपानेन भृत्यानत्यशनेन च ।
तेजस्विदेशवासाच्च तस्मान्मृत्युभयं न नः ॥ १९
एतद्वै लेशमात्रं वः समाख्यातं विमत्सराः ।
गच्छध्वं सहिताः सर्वे न पापाद्भयमस्ति वः ॥ २०
एवमस्त्विति ते सर्वे प्रतिपूज्य महामुनिम् ।
स्वदेशमगमन्हृष्टा राजानो भरतर्षभ ॥ २१

इति श्रीमहाभारते आरण्यकपर्वणि द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥

## १८३

मार्कण्डेय उवाच ।
भूय एव तु माहात्म्यं ब्राह्मणानां निबोध मे ।
वैन्यो नामेह राजर्षिरश्वमेधाय दीक्षितः ।
तमत्रिर्गन्तुमारेभे वित्तार्थमिति नः श्रुतम् ॥ १
भूयोऽथ नानुरुध्यत्स धर्मव्यक्तिनिदर्शनात् ।
संचिंत्य स महातेजा वनमेवान्वरोचयत् ।
धर्मपत्नीं समाहूय पुत्रांश्चेदमुवाच ह ॥ २
प्राप्स्यामः फलमत्यन्तं बहुलं निरुपद्रवम् ।
अरण्यगमनं क्षिप्रं रोचतां वो गुणाधिकम् ॥ ३
तं भार्या प्रत्युवाचेदं धर्ममेवानुरुध्यती ।

C. 3. 12681
B. 3. 185. 5
K. 3. 188. 5

om. ) तेषां हि (T1 G1 नैषां वि- ) चरितं ब्रूमः. — $18^{d} = 17^{d}$, $19^{d}$.

**19** D2 om. (hapl.) 19. D1 reads 19 after 16. — $^{a}$) D5 आतिथ्येन ; S (except M2) अतिथिषु (for अतिथीन्). D1. 5 T1 G1 M1 [अ]न्नदानेन. — $^{b}$) B1 G1 भृत्यानप्य° ; Dc2 °नन्व° ; T1 °नत्या° ; M1 °न्नात्य° (for °नत्य°). D1 भृत्यानां भरणेन च ; D5 तथा भृत्याशनेन च ; T2 G2–4 भृत्यानामशनेन च. — After $19^{ab}$, K4 Dc1 Dn D4. 6 ins. :

906* संभोज्य शेषमश्नीमस्तस्मान्मृत्युभयं न नः ।
क्षान्ता दान्ताः क्षमाशीलास्तीर्थदानपरायणाः ।
पुण्यदेशनिवासाच्च तस्मान्मृत्युभयं न नः ।

— D6 om. $19^{cd}$. K1. 2 B1 देशे (B1 देश-) वासश्च. — $19^{d} = 17^{d}, 18^{d}$.

**20** $^{a}$) S उद्देशमात्रं (for वै लेश°). Ś1 K1–3 D2. 3. 5 °मात्रेण (for °मात्रं वः). — B2 om. (hapl.) $20^{d}$–$21^{a}$.

**21** B2 om. $21^{a}$ (cf. v.l. 20). — $^{c}$) Ś1 स्वं देशम् ; K1. 2 स्वां दिशम् ; B1 स्वदेशान्. — $^{d}$) D2. 3 भरतर्षभाः ; T1 G1 M1 राजसत्तम.

Colophon. — *Major parvan :* Ś1 K1. 2 T2 G2–4 आरण्य. — *Sub-parvan :* B2. 4 D4 मार्कंडेय ; Dn2 D6 G1 मार्कंडेयसम(Dn2 °मा)स्या ; D1. 2 मार्कंडेयवाक्य. — *Adhy. name :* K3. 4 Dc D3. 5 ब्राह्मणमाहात्म्यं ; G1 ब्राह्मणमाहात्म्यकथनं. — *Adhy. no.* (figures, words or both) : Dn 183 (Dn3 184) ; D1 190 ; S (M2 *inf. lin.*) 186 (M2 orig. 188). — *Śloka no. :* Dn 24.

## 183

**1** $^{a}$) B1–3 Dn D4. 6 महाभाग्यं (for तु माहात्म्यं). — $^{c}$) B4 Dc D6 वैण्यो. T2 G2–4 [अ]त्र (for [इ]ह). — $^{d}$) B4 अश्वमेधेन. — $^{e}$) Ś1 K1. 2 चात्रिर् (for अत्रिर्). T2 G2–4 अत्रिर्गंतुं तमारेभे. — $^{f}$) S (except M1) धनार्थं° (for वित्तार्थं°).

**2** $^{a}$) B1 Dc Dn D6 भूयोर्थं (Dc °थैं). B2 M1 नान्वरुध्यत्. Ś1 K1. 2 भूयो यथा नान्वरुध्यद् ; K3 D5 भूय एवानुरु(D5 °न्वबु)ध्यत्स ; K4 D1–3 भूयो धनार्थितां (D1 °र्मार्थिनो) नैच्छद् ; T1 G1 भूयो धनानुरुंध्यन्स ; T2 G2–4 भूयो (G4 ध्रुवो) धनानुरोधाच्च. — $^{b}$) T2 G धर्मव्यय° (G1 °वृत्ति°). — $^{c}$) B1–3 Dc Dn D4. 6 स वि(B1 सं)चिंत्य (for संचिन्त्य स). Ś1 K1. 2 च ; B4 T1 G1 सु- (for स). — $^{d}$) K2 [अ]नुरोदयत् ; B1. 2 [अ]न्वरोचत ; D1 [अ]न्वचिंतयन् ; D2 [अ]न्वरोचयेत्. — $^{e}$) B4 स आनाय्य (for समा°).

**3** $^{a}$) K2 T1 प्राप्स्याम ; T2 G2–4 प्राप्स्यामि. G1 अत्यर्थं. — $^{b}$) M2 बहु तन् (for बहुलं). — $^{d}$) B3 D5 वै ; Dc2 वा (for वो).

C. 3. 12681
B. 3. 185. 5
K. 3. 188. 5

वैन्यं गत्वा महात्मानमर्थयस्व धनं बहु ।
स ते दास्यति राजर्षिर्यजमानोऽर्थिने धनम् ॥ ४
तत आदाय विप्रर्षे प्रतिगृह्य धनं बहु ।
भृत्यान्सुतान्संविभज्य ततो व्रज यथेप्सितम् ।
एष वै परमो धर्मो धर्मविद्भिरुदाहृतः ॥ ५

अत्रिरुवाच ।

कथितो मे महाभागे गौतमेन महात्मना ।
वैन्यो धर्मार्थसंयुक्तः सत्यव्रतसमन्वितः ॥ ६
किं त्वस्ति तत्र द्वेष्टारो निवसन्ति हि मे द्विजाः ।
यथा मे गौतमः प्राह ततो न व्यवसाम्यहम् ॥ ७
तत्र स्म वाचं कल्याणीं धर्मकामार्थसंहिताम् ।
मयोक्तामन्यथा ब्रूयुस्ततस्ते वै निरर्थकाम् ॥ ८
गमिष्यामि महाप्राज्ञे रोचते मे वचस्तव ।
गाश्च मे दास्यते वैन्यः प्रभूतं चार्थसंचयम् ॥ ९

मार्कण्डेय उवाच ।

एवमुक्त्वा जगामाशु वैन्ययज्ञं महातपाः ।
गत्वा च यज्ञायतनमत्रिस्तुष्टाव तं नृपम् ॥ १०
राजन्वैन्य त्वमीशश्च भुवि त्वं प्रथमो नृपः ।
स्तुवन्ति त्वां मुनिगणास्त्वदन्यो नास्ति धर्मवित् ॥ ११
तमब्रवीदृषिस्तत्र वचः क्रुद्धो महातपाः ।
मैवमत्रे पुनर्ब्रूया न ते प्रज्ञा समाहिता ।
अत्र नः प्रथमं स्थाता महेन्द्रो वै प्रजापतिः ॥ १२

---

**4** $^{a}$) M1 ता (for तं). B2–4 D (except D1–3. 5) [अ]थ (for [इ]दं). — $^{b}$) S (except M2) धनम् (for धर्मम्). Ś1 अ]न्वरुध्यती; K2. 3 [अ]नुरुध्यते (K3 °तां); B Dc D1. 2. 5 T2 G2–4 [अ]नु(B1–3 °व)रुंधती; Dn D4. 6 [अ]नुतन्वती. — $^{c}$) Dc D6 वैण्यं. Ś1 K2–4 D1–3. 5 महाबाहुम्. — $^{d}$) B1 (m as in text) आनयस्व (for अर्थ°). — Ś1 Dc2 G1 om. (hapl.) $4^{e}$–$5^{b}$. — $^{f}$) K1 महा°; K2 B1. 3 Dc1 Dn D1. 2. 4. 6 [ऽ]र्थितो (D1 °तं). T1 भृशं (for धनम्).

**5** Ś1 Dc2 G1 om. $5^{ab}$ (cf. v.l. 4). — $^{a}$) B1 (m as in text) तच्चादाय तु विप्रर्षे. — $^{b}$) K1. 4 D1–3 प्रतिग्रहधनं. — $^{c}$) K1. 2 धनान्; K3. 4 D1 वृत्त्या; D2. 3 M2 वृत्त्यान् (for भृत्यान्). G1 द्रव्यं संपाद्य बहुशस्. — $^{e}$) Ś1 K1. 2 ते (for वै). D5 प्रथमो (for परमो). — $^{f}$) S विद्वद्भिः समु(T1 सुह)दाहृतः (G1 विचरत्समुदाहृतः).

**6** $^{a}$) K3. 4 D1–3. 5 वै (for मे). Ś1 D1 T1 महाभागो (T1 °ग). — $^{c}$) B3. 4 Dc D6 वैण्यो. Ś1 K1. 2 धर्मसमायुक्तः. — $^{d}$) B4 M2 °परायणः.

**7** $^{ab}$) B4 T1 G1 M त्व(B4 त-; T1 चा)त्र संति (for त्वस्ति तत्र). T1 निवत्स्यंति. B1 च; T G2–4 [इ]ह (for हि). Ś1 K D1–3. 5 द्वेष्टारः किं तु नः संति वसंतस्तत्र वै द्विजाः. — $^{c}$) Ś1 K D1–3. 5 स (for मे). — $^{d}$) T1 G1 M2 यतो (for ततो). K4 D2. 3 (before corr.). 5 न व्यवस्याम्यहं ततः (D5 पुनः); D3 (after corr.) तथा वक्ष्याम्यहं तव; T2 (before corr.) G2. 4 ततो वर्णामि साध्वहं; T2 (after corr.) व्यवस्यामि तथा त्वहं.

**8** $^{a}$) Ś1 K1. 2 ततः स (Ś1 स्म); T2 G2–4 तत्रापि (for तत्र स्म). K2 कल्याणि. — $^{b}$) K4 D5 धर्मकार्या(D5 °मा)-र्थसंयुतां. — K2 om. (hapl.) $8^{c}$–$9^{d}$. — $^{d}$) D1. 2 सर्वे (for ते वै). Ś1 K (K2 om.) D3. 5 निरर्थकं; B1 D1 T1 °र्थकाः; B2. 3 Dc Dn D4. 6 °र्थिकां; B4 निदर्शकाः; M1 निरर्थतां.

**9** K2 om. 9 (cf. v.l. 8). — $^{a}$) K1 महाप्रज्ञे; B4 महाभागे; Dc2 [अ]थवा भद्रे; T1 महाप्राज्ञ. — $^{b}$) T2 G2–4 रोचतां. — K1 om. $9^{cd}$. — $^{c}$) T2 G2–4 नैव (for गाश्च). B3. 4 Dc D6 वैण्यः. — $^{d}$) Ś1 च धनं महत्; K3 चार्थसंहितं; K4 धनसंचयं.

**10** $^{a}$) Dc [अ]थ; D3 [ए]व (for [आ]शु). — $^{b}$) A few MSS. वैण्य°. — $^{d}$) T2 G2–4 इति (for अत्रिस्). D5 मुनिः (for नृपम्). — After 10, B D (except D1–3. 5) G2 M2 ins.:

907* वाक्यैर्मङ्गलसंयुक्तैः पूजयानोऽब्रवीद्वचः ।

**11** Before 11, B D (except D1–3. 5) G2 M2 ins. अत्रिरु°. — $^{a}$) Ś1 K2. 3 D1. 2 T1 G2 वैन्यस्त्वम्; K4 B (B1 m as in text) Dc Dn D4–6 M2 धन्यस्त्वम्; G1 विधिस्त्वम्; M1 इंद्रस्त्वम्. K1 राजन्वन्यविरिंचश्च. — $^{b}$) T1 G1 M1 विभुस्त्वं; T2 G2–4 प्रभुश्च (for भुवि त्वं). — $^{c}$) G2 स्तुवंतु. K2. 3 M1 त्वा (for त्वां). — $^{d}$) T2 G2–4 transp. त्वदन्यो and न. K3. 4 D5 वाग्भिर्मंत्रपरायणाः.

**12** $^{a}$) T2 G2. 3 ततो°; G4 तत्रा° (for तम°). M2 ऋषिं. B D (except D1–3. 5) G2. 4 क्रुद्धो (for तत्र). — $^{b}$) B D (except D1–3. 5) वचनं वै; T2 G2–4 वचस्तत्र. — Before $12^{cd}$, D (except D1–3. 5) T2 G2. 3 M2 ins. गौतम उ°. — $^{c}$) B1. 3. 4 नैवम् (for मैवम्). K2 अन्यं; B4 आशु; T1 अत्र (for अत्रे). — $^{d}$) T1 समन्विता (for समाहिता). — $^{e}$) T1 अत्रे (for अत्र). Ś1 K1. 2 ते; D5 वै (for नः). D3 प्रथमः स्थाता; S प्रथमो धाता.

अथात्रिरपि राजेन्द्र गौतमं प्रत्यभाषत ।
अयमेव विधाता च यथैवेन्द्रः प्रजापतिः ।
त्वमेव मुह्यसे मोहान्न प्रज्ञानं तवास्ति ह ॥ १३

गौतम उवाच ।

जानामि नाहं मुह्यामि त्वं विवक्षुर्विमुह्यसे ।
स्तोष्यसेऽभ्युदयप्रेप्सुस्तस्य दर्शनसंश्रयात् ॥ १४
न वेत्थ परमं धर्मं न चावैषि प्रयोजनम् ।
बालस्त्वमसि मूढश्च वृद्धः केनापि हेतुना ॥ १५

मार्कण्डेय उवाच ।

विवदन्तौ तथा तौ तु मुनीनां दर्शने स्थितौ ।
ये तस्य यज्ञे संवृत्तास्तेऽपृच्छन्त कथं त्विमौ ॥ १६
प्रवेशः केन दत्तोऽयमनयोर्वैन्यसंसदि ।
उच्चैः समभिभाषन्तौ केन कार्येण विष्ठितौ ॥ १७
ततः परमधर्मात्मा काश्यपः सर्वधर्मवित् ।
विवादिनावनुप्राप्तौ तावुभौ प्रत्यवेदयत् ॥ १८
अथाब्रवीत्सदस्यांस्तु गौतमो मुनिसत्तमान् ।
आवयोर्व्याहृतं प्रश्नं शृणुत द्विजपुंगवाः ।
वैन्यो विधातेत्याहात्रिरत्र नः संशयो महान् ॥ १९
श्रुत्वैव तु महात्मानो मुनयोऽभ्यद्रवन्द्रुतम् ।
सनत्कुमारं धर्मज्ञं संशयच्छेदनाय वै ॥ २०
स च तेषां वचः श्रुत्वा यथातत्त्वं महातपाः ।
प्रत्युवाचाथ तानेवं धर्मार्थसहितं वचः ॥ २१

सनत्कुमार उवाच ।

ब्रह्म क्षत्रेण सहितं क्षत्रं च ब्रह्मणा सह ।

C. 3. 12702
B. 3. 185. 25
K. 3. 188. 26

---

**13** Ś$_1$ K$_{1.2}$ om. (hapl.) 13$^{abcd}$. — $^{a}$) S एष (for अपि). — $^{c}$) M$_1$ अलम् (for अयम्). T$_2$ (before corr.) G$_{2.4}$ एष (for एव). B D (except D$_{1-3.5}$) हि (for च). — $^{d}$) D$_6$ यथा चेंद्रः; T$_2$ G M$_2$ तथैवेंद्रः (G$_4$ महेंद्रो वै). — $^{f}$) Ś$_1$ K$_{1.2}$ प्रज्ञा न (for प्रज्ञानं). D$_5$ न च (for तव). Ś$_1$ K$_{1-3}$ B$_1$ D$_{3.5}$ वै; K$_4$ मे; S च (for ह). D$_{1.2}$ न प्रज्ञा विद्यते तव.

**14** $^{a}$) M$_1$ नैव; M$_2$ त्वां न (for नाहं). Ś$_1$ K D$_{1-3.5}$ नावमुह्येहं (Ś$_1$ K$_1$ °यं; K$_2$ °त). — $^{b}$) K$_4$ विवित्सुस्त्वं; B Dc Dn D$_{4.6}$ त्वमेवात्र; D$_{1-3}$ त्वं विवित्सुर्. Ś$_1$ K$_{1.3}$ D$_5$ त्वं विवित्सुर् (D$_5$ किंकथस्त्वं) विमुह्यसि; K$_3$ त्वं विकत्थन्न लज्जसे. — $^{c}$) K$_{2.3}$ तुष्यते; K$_4$ स्तुष्यसि; B$_{1.2}$ (both marg.). $_3$ तुष्यति; Dc$_2$ G$_1$ तुष्यसे; D$_{1-3.5}$ तुष्यसि; T$_1$ M इष्यते (for स्तोष्यसे). Ś$_1$ K$_1$ तुष्यतेभ्युदये प्रेप्सुः; B$_{1.2.4}$ Dc$_1$ Dn D$_{4.6}$ स्तौषि त्वं दर्शनप्रेप्सुः. — $^{d}$) B$_{1.2}$ (both m as in text). $_4$ Dc$_1$ Dn D$_{4.6}$ राजानं जनसंसदि.

**15** D$_4$ om. 15$^{a}$–16$^{b}$. — $^{a}$) K$_4$ D$_{1.3}$ वेत्सि (for वेत्थ). D$_5$ T$_2$ G$_{2.3.4}$ (*sup. lin.*) ब्रह्म (for धर्मं). — $^{b}$) Ś$_1$ चावैमि; K$_2$ च वै वि-; T G चा(T$_1$ वा)स्त्यत्र; M$_1$ तेस्त्यत्र; M$_2$ वास्त्वृषि- (for चावैषि). T$_2$ G$_{2.3.4}$ (*inf. lin.* as in text) प्रदर्शनं (for प्रयो°). — $^{c}$) T$_1$ अति- (for असि). — $^{d}$) Ś$_1$ K$_1$ B$_2$ D$_{1.2.5}$ T$_2$ G$_{2-4}$ [अ]सि (for [अ]पि).

**16** D$_4$ om. 16$^{ab}$ (cf. v.l. 15). Most MSS. om. मार्कण्डेय उ°. — $^{c}$) D$_{1.2}$ M$_1$ ये तत्र; D$_5$ ते तत्र; G$_{3.4}$ एतस्य. M$_2$ येस्य यज्ञे सुसद्वृत्तास्. — $^{d}$) B$_{1.3}$ Dc D$_2$ पृच्छंति; M$_1$ पृच्छंतः.

**17** $^{b}$) B D (except D$_{1-3.5}$) उभयोर् (for अनयोर्). A few MSS. वैण्य°. — $^{d}$) Ś$_1$ वष्ठितौ; K$_1$ वेष्टितौ; K$_{2-4}$ B D (except Dc) धिष्ठितौ.

**18** $^{a}$) Ś$_1$ K$_{1.2}$ D$_{1-3}$ परमधर्मज्ञः. — $^{b}$) Ś$_1$ K D$_{1-3.5}$ कश्यपः. T$_2$ G$_{2-4}$ स ह (for सर्व-). — $^{c}$) S विवदंतावनु°. — $^{d}$) B$_1$m प्रत्यषेधयत्; M$_1$ °षेधत.

**19** $^{a}$) K$_4$ B$_1$ D$_5$ तान् (for तु). — $^{b}$) Ś$_1$ K$_{1.2}$ मुनिसत्तमः; T$_2$ G$_{2-4}$ तापसोत्तमान्. — $^{c}$) K$_3$ T$_2$ (before corr.) G$_{2.3}$ व्याहृतं. T$_1$ पुण्यं (for प्रश्नं). — $^{d}$) K$_1$ शृणुतो; B$_{1.4}$ शृणुध्वं; B$_3$ शृण्वतो; D$_1$ शृणु तद्. B D (except D$_{1.2}$) G$_4$ द्विजसत्तमाः. — $^{e}$) B$_{1.3}$ Dn D$_{4.6}$ वैन्यं. D$_5$ [अ]त्राह (for [आ]हात्रिर्). — $^{f}$) D$_{1-3}$ तत्र. B$_1$ न चात्र (m अत्र नौ). B$_{2-4}$ D (except D$_{1-3}$) नौ (for नः). — After 19, S ins.:

908* ततस्तद्गौतमेनोक्तं वाक्यं वैन्यस्य संसदि ।

**20** $^{a}$) B$_4$ तु ते (for [ए]व तु). — $^{b}$) Ś$_1$ K D$_{1-3.5}$ [ऽ]भ्य(Ś$_1$ °प्या-; K$_{1.2}$ °भ्या)गमन्; S (except G$_1$) प्राद्रवन्. B$_4$ मुनयः समभिब्रुवन्. — $^{c}$) T$_1$ सर्वज्ञं (for धर्मज्ञं). — After 20, S (except M$_2$) ins.:

909* पप्रच्छुः प्रणताः सर्वे ब्रह्माणमिव सोमपाः ।

**21** T$_2$ G$_{2-4}$ om. 21$^{ab}$. — $^{a}$) Ś$_1$ K D$_{1-3.5}$ तु; B$_4$ वै (for च). — $^{c}$) D$_1$ च; D$_{2.3}$ स (for [अ]थ). K$_{1.2.4}$ D$_5$ G$_1$ M$_2$ एव (for एवं).

**22** Cf. 1. 76. 18$^{ab}$. — $^{b}$) Ś$_1$ K D$_{1-3.5}$ ब्रह्मसंहितं (for ब्रह्मणा सह). — After 22$^{ab}$, N (except B$_2$ D$_{4.6}$) ins.:

3.12703
3.185.26
3.188.27

राजा वै प्रथमो धर्मः प्रजानां पतिरेव च ।
स एव शक्रः शुक्रश्च स धाता स बृहस्पतिः ॥ २२
प्रजापतिर्विराट् सम्राट् क्षत्रियो भूपतिर्नृपः ।
य एभिः स्तूयते शब्दैः कस्तं नार्चितुमर्हति ॥ २३
पुरायोनिर्युधाजिच्च अभिया मुदितो भवः ।
स्वर्णेता सहजिद्बभ्रुरिति राजाभिधीयते ॥ २४
सत्यमन्युर्युधाजीवः सत्यधर्मप्रवर्तकः ।
अधर्मादृषयो भीता बलं क्षत्रे समादधन् ॥ २५
आदित्यो दिवि देवेषु तमो नुदति तेजसा ।
तथैव नृपतिर्भूमावधर्मं नुदते भृशम् ॥ २६
अतो राज्ञः प्रधानत्वं शास्त्रप्रामाण्यदर्शनात् ।
उत्तरः सिध्यते पक्षो येन राजेति भाषितम् ॥ २७
मार्कण्डेय उवाच ।
ततः स राजा संहृष्टः सिद्धे पक्षे महामनाः ।
तमत्रिमब्रवीत्प्रीतः पूर्वं येनाभिसंस्तुतः ॥ २८
यस्मात्सर्वमनुष्येषु ज्यायांसं मामिहाब्रवीः ।
सर्वदेवैश्च विप्रर्षे संमितं श्रेष्ठमेव च ।
तस्मात्तेऽहं प्रदास्यामि विविधं वसु भूरि च ॥ २९
दासीसहस्रं श्यामानां सुवस्त्राणामलंकृतम् ।
दश कोट्यो हिरण्यस्य रुक्मभारांस्तथा दश ।

910* संयुक्तौ दहतः शत्रून्वनानीवाग्निमारुतौ ।
Thereafter $D_1$ reads 24–25. — $^c$) B D (except $D_{1-3.5}$) $T_2$ $G_{3.4}$ $M_2$ प्रथितो (for प्रथमो). — $^d$) $B_3$ गति° (for पति°). — $^e$) $D_{1.2}$ S (except $T_2$ $G_3$) एष (for एव). $K_{3.4}$ Dc $D_{1-3}$ $G_4$ transp. शक्रः and शुक्रः. $T_1$ एष शक्रश्च शुक्रश्च. — $^f$) $T_2$ $G_{2-4}$ सविता (for स धाता). $B_{1.2.4}$ Dn $D_{1.3.4.6}$ $G_1$ च (for the second स). $K_2$ धाता सह- (for स धाता स).

**23** $^a$) $K_3$ $D_{3.5}$ राजा भोजो; $D_{1.2}$ राज्यभाक्स (for प्रजापतिर्). — $^b$) $B_1$ नृपतिर् (for भूपतिर्). $B_4$ स हि गोप्ता पतिर्नृपः. — $^c$) $K_4$ $D_3$ श्रूयते; $G_1$ ज्ञा° (for स्तू°).

**24** $D_1$ reads 24–25 after 910*. — $^b$) $Ś_1$ K $D_{1-3}$ अभियादुदि($D_{1.3}$ °चि)तो; $G_1$ $M_1$ सुभिक्षानुचितो; $M_2$ प्रभावाभ्युचितो (for अभिया मुदितो). $Ś_1$ भवेत्; $K_{1.2}$ [ऽ]भवत् (for भवः). T $G_{2-4}$ सुभिक्षानुचितोद्भवः. — $^c$) $Ś_1$ $K_{1.2}$ $D_5$ अन्ते($K_1$ °न्ये)ता; $K_4$ Dc $D_1$ $G_1$ $M_1$ स्वर्नेता; $D_3$m $T_1$ $G_2$ $M_2$ सं($T_1$ स्वं)नेता (for स्वर्णेता). $K_1$ सत्य°; $B_1$ विश्व° (for सह°). — $^d$) $K_4$ $B_1$ $D_5$ $G_2$ विधी° (for [अ]भिधी°).

**25** For $D_1$ cf. v.l. 24. — $^a$) $K_4$ सत्यमृत्युर्; $B_1$m. $_2$ Dn $D_{4.6}$ सत्ययोनिर्. $B_{1.3}$ Dc युधाजिच्च (cf. 24$^a$); $B_2$ Dn $D_{4.6}$ पुराविच्च; T $G_{2-4}$ यथा जीवः. — $^c$) $T_2$ $G_{3.4}$ अकर्माद्. — $^d$) $Ś_1$ K $D_{1-3.5}$ $T_1$ $G_1$ समादधुः. — $D_2$ ins. after 25: $D_1$ (which reads 24–25 after 910*) ins. after 23:

911* पुरा यो ब्रह्मणा सृष्टः प्रजानां परिपालने ।
दुष्टानां निग्रहं कर्ता स च राजाभिधीयते ।
सत्यं मन्युर्दया रक्षा धर्माधर्मविलोकनम् ।
विद्यन्ते यस्य चाराश्च स राजेत्यभिधीयते ।

On the other hand, S ins. after 25:

912* अस्माभिर्ब्राह्मणैः क्षत्रं क्षत्रेण ब्रह्म चाव्ययम् ।
[ $T_1$ $G_1$ M तस्माद्धि ब्रह्मणा क्षत्रं (for the prior half). ]

**26** $^d$) B D (except $D_{1-3.5}$) $T_2$ $G_{3.4}$ [अ]धर्मान्. $B_2$ $T_1$ नृपते (for नुदते).

**27** $^a$) $Ś_1$ $K_{1.2}$ एवं; B D (except $D_{1-3.5}$) $T_1$ ततो; $G_2$ अथो (for अतो). $T_2$ $G_{2-4}$ प्रमाणत्वं (for प्रधान°). — $^b$) $Ś_1$ $K_{1.2}$ शास्त्रे प्रामाण्यदर्शनम् ($Ś_1$ °नात्). — After 27$^{ab}$, $D_3$ (marg. *sec. m.*) ins.:

913* अत्रिणा व्याहृतं पूर्वं तत्तथैव न चान्यथा ।
— $^c$) $K_{1.2}$ उत्तरं. $Ś_1$ $K_{1.2}$ पक्षे. — $^d$) $K_2$ $T_2$ $G_{2-4}$ भाषितः.

**28** $T_2$ $G_{2-4}$ om. the ref. — $^b$) $K_4$ $D_5$ $M_1$ महात्मना ($D_5$ °नः); $G_4$ महाबलाः. — $^c$) $T_2$ $G_{2-4}$ ब्रह्मवित् (for अब्रवीत्). $T_1$ तमब्रवीत्ततः प्रीतः. — $^d$) $G_{2.4}$ यो न (for येन). $K_1$ [अ]भि मे स्तुतं; $T_1$ [अ]पि संस्तुतं; $T_2$ $G_{2-4}$ [अ]भि($G_2$ हि)सत्कृतः; $G_1$ [अ]भिसंस्कृतः.

**29** $^a$) $K_4$ तस्मात्; $D_5$ यन्मां. K $B_4$ $D_{1-3.5}$ S (except $G_2$) सर्वमनुष्येभ्यो; Dc1 Dn $D_{4.6}$ पूर्वं मनुष्येषु. — $^b$) $D_5$ त्वम् (for माम्). $K_1$ $B_{1-3}$ Dc S (except $G_2$ $M_1$) अब्रवीत्. — $^c$) $G_4$ $M_1$ सर्वैर् (for सर्व-). — $^d$) $K_3$ संमतं. $D_5$ ज्येष्ठमेव; $T_1$ श्रेय एव. — $^f$) $D_{1.2}$ भूरिशः (for भूरि च).

**30** $^a$) $T_2$ $G_{2-4}$ अश्वानां (for श्यामानां). — $^b$) B सुरूपाणाम्; $T_2$ $G_{2-4}$ सुवर्णानाम्. — $^c$) $K_4$ Dn$^*$ $D_{3-6}$ दशकोटीर् ($Dn_2$ $D_3$ °टी); $B_{1-3}$ Dc दशकोटिर्. — $^d$) $Ś_1$ $K_{1.2}$ $D_{1.5}$ $G_4$ रुक्मभा($G_4$ °हा)रास्. — $^e$) $K_{2-4}$ $Dn_2$. $n_3$ $D_{1-3.5.6}$ S (except $G_{2.4}$ $M_1$) ददामि. $B_{1-3}$ D (except $D_{1-3.5}$) विप्रर्षे; $M_1$ ते वित्तं (for ते विप्र).

एतद्ददानि ते विप्र सर्वज्ञस्त्वं हि मे मतः ॥ ३०
तदत्रिर्न्यायतः सर्वं प्रतिगृह्य महामनाः ।
प्रत्याजगाम तेजस्वी गृहानेव महातपाः ॥ ३१
प्रदाय च धनं प्रीतः पुत्रेभ्यः प्रयतात्मवान् ।
तपः समभिसंधाय वनमेवान्वपद्यत ॥ ३२

इति श्रीमहाभारते आरण्यकपर्वणि त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

# १८४

मार्कण्डेय उवाच ।
अत्रैव च सरस्वत्या गीतं परपुरंजय ।
पृष्टया मुनिना वीर शृणु तार्क्ष्येण धीमता ॥ १
तार्क्ष्य उवाच ।
किं नु श्रेयः पुरुषस्येह भद्रे
कथं कुर्वन्न च्यवते स्वधर्मात् ।
आचक्ष्व मे चारुसर्वाङ्गि सर्वं
त्वयानुशिष्टो न च्यवेयं स्वधर्मात् ॥ २
कथं चाग्निं जुहुयां पूजये वा
कस्मिन्काले केन धर्मो न नश्येत् ।
एतत्सर्वं सुभगे प्रब्रवीहि
यथा लोकान्विरजाः संचरेयम् ॥ ३
मार्कण्डेय उवाच ।
एवं पृष्टा प्रीतियुक्तेन तेन
शुश्रूषुमीक्ष्योत्तमबुद्धियुक्तम् ।
तार्क्ष्यं विप्रं धर्मयुक्तं हितं च

C. 3. 12718
B. 3. 186. 4
K. 3. 189. 4

— f) B1–3 D (except D1–3. 5) मतो हि मे (for हि मे मतः).

**31** a) D5 तत्रा°; G2. 4 ततो° (for तद°). B3 ऋषिर् (for अत्रिर्). — b) Ś1 K1. 2 B4 G1 महातपाः; B1–3 Dc Dn D4. 6 [अ]भिसत्कृतः. D1 प्रतिसंगृह्यमात्मनः. — Ś1 K1. 2 om. 31cd. — c) Dc1 Dn D4 G2 प्रत्युज्जगाम; T2 G3 प्रीत्या जगाम. — d) B4 महामनाः; D5 महायशाः.

**32** a) B4 आदाय. K1. 2 प्रीतिः. — b) K2 प्रियतात्मवान्; T2 G2–4 प्रियमात्मवान्. — c) Ś1 K1. 2 B1 (m as in text) G1 ततः (for तपः). T2 G2–4 समनु° (for समभि°). — d) K1. 2 [अ]भ्य° (for [अ]न्व°).

Colophon. — *Major parvan:* Ś1 K2 T2 G2–4 आरण्य. — *Sub-parvan:* B2 G1 मार्कंडेयसमा(G1 °म)-स्या (followed by वैन्योपाख्यान in G1). Ś1 K B1. 3 Dc D1–3. 5 T2 G3 M2 (all om. sub-parvan name) mention only वैन्योपाख्यान. — *Adhy. name:* B2. 4 ब्राह्मणमाहाभाग्यं; Dn D4. 6 G1 ब्राह्मणमाहात्म्यं. — *Adhy. no.* (figures, words or both).: Dn 184 (Dn3 185); D1 191; S (M2 *inf. lin.*) 187 (M2 orig. 189). — *Śloka no.:* Dn 37; D1 39.

## 184

**1** D1. 2 तु (for च). — b) M2 नीतं (for गीतं). — c) D5 जुष्टया; G2 पृष्टं यन्; G4 पृष्टवान्. T1 तेन; G1. 2 M1 (*sup. lin.* as in text) धीर; M2 राजन् (for वीर). B4 पृष्टया मुनिवाक्यं हि. — d) Ś1 K D3. 5 तदा; D2 यत्तु (for शृणु).

**2** a) B4 वै; Dc1 Dn D4. 6 T1 तु (for नु). K4 D2 श्रेष्ठं (for श्रेयः). Ś1 K1. 2 देवि; K3. 4 D1–3. 5 T1 लोके; T2 (before corr.) G1. 2. 4 M शोभने (for भद्रे). — b) T2 (before corr.) G2. 4 पूर्वं (for कुर्वन्). — c) D (except D1–3. 5) कुर्यात् (for सर्वं). — d) B D (except D1–3. 5) T2 G3 om. [अ]नु.

**3** M2 om. 3. — a) B2–4 Dc1 Dn D4. 6 वाग्निं; D3 वह्निं; T1 G4 M1 चाग्निर्. Dc2 S (M2 om.) जुहुयात्. Ś1 K D1–3. 5 पूजयेयं; B1 Dc S (M2 om.) पूज(T1 °र)-येद्वा. — b) K3 यस्मिन्. D5 लोके (for काले), and धर्मेण (for धर्मो न). — c) K3. 4 D1–3 कृत्स्नं; T1 G4 क्षिप्रं (for सर्वं). — d) Ś1 विमले; K1. 2 विमलान्; K3 T G2–4 विरजान् (K3 T1 °जा). S (M2 om.) संप्रपश्ये (T1 °श्येत्; T2 G3 °द्ये) (for संचरेयम्).

3. 12718
3. 186. 4
3. 189. 4

सरस्वती वाक्यमिदं बभाषे ॥ ४

सरस्वत्युवाच ।

यो ब्रह्म जानाति यथाप्रदेशं
स्वाध्यायनित्यः शुचिरप्रमत्तः ।
स वै पुरो देवपुरस्य गन्ता
सहामरैः प्राप्नुयात्प्रीतियोगम् ॥ ५
तत्र स्म रम्या विपुला विशोकाः
सुपुष्पिताः पुष्करिण्यः सुपुण्याः ।
अकर्दमा मीनवत्यः सुतीर्था
हिरण्मयैरावृताः पुण्डरीकैः ॥ ६
तासां तीरेष्वासते पुण्यकर्मा
महीयमानः पृथगप्सरोभिः ।
सुपुण्यगन्धाभिरलंकृताभि-
र्हिरण्यवर्णाभिरतीव हृष्टः ॥ ७
परं लोकं गोप्रदास्त्वाप्नुवन्ति
दत्त्वानड्वाहं सूर्यलोकं व्रजन्ति ।
वासो दत्त्वा चन्द्रमसः स लोकं
दत्त्वा हिरण्यममृतत्वमेति ॥ ८
धेनुं दत्त्वा सुव्रतां साधुदोहां
कल्याणवत्सामपलायिनीं च ।
यावन्ति रोमाणि भवन्ति तस्या-
स्तावद्वर्षाण्यश्नुते स्वर्गलोकम् ॥ ९
अनड्वाहं सुव्रतं यो ददाति
हलस्य वोढारमनन्तवीर्यम् ।

**4** b) $D_5$ शुश्रूषुणानुत्तमबुद्धि°; S शुश्रूषुणा चोत्तमबुद्धि-युक्ता ($T_1$ °क्तां; $G_1$ $M_2$ °क्तं). — c) $T_2$ $G_{2.3}$ ऋषिं; $G_4$ त्वृषिं (for विप्रं). $Ś_1$ धर्मयुक्तां हितां. — d) $Ś_1$ $K_{1.2}$ वाच-मिमां (for वाक्यमिदं).

**5** $K_3$ $D_{1-3.5}$ $G_4$ $M_2$ om. the ref. — a) $Ś_1$ $K_{1.2}$ यथा प्रदेशे; $K_4$ यथानिदेशं; $B_2$ यथोपदेशं. — b) $Ś_1$ $K_{1.2}$ स्वाध्या($K_2$ स्वन्या)ययुक्तः; $T_1$ °यत्तः. — c) N पारं ($K_2$ पारे; $D_5$ मानं); $T_2$ (after corr.) $G_3$ परं (for पुरो). $Ś_1$ B Dc Dn $D_{4.6}$ देव($Ś_1$ वेद)लोकस्य ($B_4$m परलोकस्य); $K_{1.2}$ वेदपुरस्य. — d) $K_2$ प्रीतियोगात्.

**6** a) S (except $G_3$; $T_2$ before corr.) [अ]स्य (for स्म). $K_{1.2}$ $D_{1-3.5}$ S विमला (for विपुला). — b) $B_1$ (m as in text) सुरम्याः; $D_5$ $T_1$ च पुण्याः; $T_2$ $G_{3.4}$ सुपुष्पाः.

**7** a) $D_5$ तीर्थेष्वासते. $K_4$ $D_3$ पुण्यशीला; B Dc Dn $D_{4.6}$ $T_2$ (after corr.) $G_3$ पुण्यभाजो. — b) $Ś_1$ K $D_{1-3.5}$ प्रगीयमानः ($K_4$ $D_{2.3.5}$ °नाः); B Dc Dn $D_{4.6}$ $T_2$ (after corr.) $G_3$ महीयमानाः. — d) $B_1$ सुवर्णवर्णाभिर्; $D_1$ °वल्लीभिर्; $T_2$ $G_3$ °श्रृंगाभिर्; $G_2$ °गंधाभिर्. $K_4$ B D S (except $G_{2.4}$ $M_1$) हृष्टाः (for हृष्टः).

**8** a) $D_5$ चाप्नुवंति. — b) $M_1$ गत्वा (for दत्त्वा). $Dc_2$ (before corr.) Dn $D_{4.6}$ [अ]नडुहं; $T_1$ $G_{2.4}$ सुवर्णं; $T_2$ $G_3$ स्वर्णं. $B_2$ $D_2$ स्वर्गं° (for सूर्य°). $B_2$ प्रयांति (for व्रजन्ति). — c) $K_3$ चंद्रमसं; $K_4$ B D चांद्रमसं. $Ś_1$ $K_2$ च; $K_{3.4}$ B D तु (for स). $K_1$ वासो दत्वा चंद्रमश्चंद्रलोकं; $M_1$ वासो दत्वा स चंद्रमसः सलोकतां. — d) N अमर(Dc त्वमर-; $D_5$ च सुर)त्वम् (for अमृतत्वम्). $T_1$ व्रजंति (for एति).

**9** a) $B_1$ Dn $D_{4.6}$ सुप्रभां; $G_4$ सुव्रतः. $Ś_1$ K $B_{2.4}$ $D_{1-3.5}$ कांस्यदोहां; Dc Dn $D_{4.6}$ सुप्रदोहां; $T_1$ स्वादु स्वादु; $G_4$ साधुदेहं. $B_3$ धेनुं दत्वा सुप्रदोहां सुश्रृंगीं. — b) $Ś_1$ $T_2$ $G_{3.4}$ अपलायनीं. — d) $Ś_1$ $B_1$ Dc तावंति (for तावद्). $Ś_1$ $K_{1.2}$ वर्षान् (for वर्षाणि). B Dc Dn $D_{4.6}$ [आ]सते देव($B_2$ स्वर्ग)लोके.

**10** a) $Ś_1$ $K_{1.2}$ $M_1$ सुव्रतो; $G_1$ सुभृतो. — d) $D_{3.5}$ $T_1$ लोकं (for लोकान्). — After 10, N ins.:

914* ददाति यो वै कपिलां सचैलां
कांस्योपदोहां द्रविणोत्तरीयाम् ।
तैस्तैर्गुणैः कामदुहाथ भूत्वा
नरं प्रदातारमुपैति सा गौः ।
यावन्ति रोमाणि भवन्ति धेन्वा- [5]
स्तावत्फलं लभते गोप्रदाने ।
पुत्रांश्च पौत्रांश्च कुलं च सर्व-
मासप्तमं तारयते परत्र ।
सदक्षिणां काञ्चनचारुश्रृङ्गीं
कांस्योपदोहां द्रविणोत्तरीयाम् । [10]
धेनुं तिलानां ददतो द्विजाय
लोका वसूनां सुलभा भवन्ति ।
स्वकर्मभिर्दानवसंनिरुद्धे
तीव्रान्धकारे नरके पतन्तम् ।
महार्णवे नौरिव वातयुक्ता [15]
दानं गवां तारयते परत्र ।

धुरंधरं बलवन्तं युवानं
प्राप्नोति लोकान्दश धेनुदस्य ॥ १०
यः सप्त वर्षाणि जुहोति तार्क्ष्य
हव्यं त्वग्नौ सुव्रतः साधुशीलः ।
सप्तावरान्सप्त पूर्वान्पुनाति
पितामहानात्मनः कर्मभिः स्वैः ॥ ११
तार्क्ष्य उवाच ।
किमग्निहोत्रस्य व्रतं पुराण-
माचक्ष्व मे पृच्छतश्चारुरूपे ।
त्वयानुशिष्टोऽहमिहाद्य विद्यां
यदग्निहोत्रस्य व्रतं पुराणम् ॥ १२
सरस्वत्युवाच ।
न चाशुचिर्नाप्यनिर्णिक्तपाणि-
र्नाब्रह्मविज्जुहुयान्नाविपश्चित् ।
बुभुक्षवः शुचिकामा हि देवा
नाश्रद्दधानाद्धि हविर्जुषन्ति ॥ १३
नाश्रोत्रियं देवहव्ये नियुञ्ज्या-
न्मोघं परा सिञ्चति तादृशो हि ।
अपूर्णमश्रोत्रियमाह तार्क्ष्य
न वै तादृग्जुहुयादग्निहोत्रम् ॥ १४
कृशानुं ये जुह्वति श्रद्दधानाः
सत्यव्रता हुतशिष्टाशिनश्च ।
गवां लोकं प्राप्य ते पुण्यगन्धं
पश्यन्ति देवं परमं चापि सत्यम् ॥ १५
तार्क्ष्य उवाच ।
क्षेत्रज्ञभूतां परलोकभावे
कर्मोदये बुद्धिमतिप्रविष्टाम् ।
प्रज्ञां च देवीं सुभगे विमृश्य

C. 3. 12735
B. 3. 186. 21
K. 3. 189. 21

---

यो ब्रह्मदेयां तु ददाति कन्यां
भूमिप्रदानं च करोति विप्रे ।
ददाति दानं विधिना च यश्च
स लोकमाप्नोति पुरंदरस्य । [20]

[(L. 1) K$_{3.4}$ D$_{3.5}$ transp. यः and वै. — (L. 2) B D (except D$_{1-3.5}$) द्रविणैरुत्तरीयैः. — (L. 3) Ś$_1$ K$_{1.2.4}$ D$_{1.3.5}$ कामदुघाथ. — (L. 6) B$_{2.4}$ Dn D$_{4.6}$ भवति (for लभते). — (L. 9) K$_{1.2}$ °गौर° (for °चारु°). — (L. 10) B D (except D$_{1-3.5}$) द्रविणैरुत्तरीयैः. — (L. 13) Ś$_1$ K D$_{1-3}$ मानवसंनिब(Ś$_1$ K$_{1.2}$ °रु)द्धं. D$_5$ स्वकर्मनिर्माणवशान्निरुद्धं. — (L. 14) B Dn D$_{4.6}$ संपतंतं (for पतन्तं). — (L. 17) B ब्राह्मदेयां. — (L. 19) Ś$_1$ K D$_{1-3.5}$ विधिवत् (for विधिना). Ś$_1$ K$_{1.2}$ गवां (for च यश्च). — (L. 20) D$_5$ स योगमायाति पुरंदरस्य.]

**11** $^{b}$) B$_1$ सुहव्यं (for हव्यं). K$_4$ D$_5$ चाग्नौ; B$_1$ अग्नौ; T$_2$ G$_{2.3}$ तदग्नौ; G$_1$ त्वाग्नौ; G$_4$ तदाग्नौ. B$_{1.2.4}$ D (except D$_{1-3.5}$) नियतः (for सुव्रतः). B$_2$ पुण्यशीलः. — $^{c}$) D$_5$ G$_4$ सप्तापरान्; M$_2$ सप्तावारान्. — $^{d}$) Ś$_1$ K$_{1.2}$ Dn$_1$ D$_5$ G$_1$ आत्मभिः; B$_{1.3.4}$ Dn$_2$. n$_3$ D$_4$ आत्मना.

**12** $^{a}$) K$_1$ फलं (for व्रतं). Ś$_1$ K$_{1.2}$ पुराणे. T$_1$ M$_2$ किमग्निहोत्रं प्रवृतं पुराणं. — $^{b}$) Ś$_1$ चारुशीले; K$_{1.2}$ साधुशीले; B$_{1-3}$ D (except Dc$_2$ D$_{1-3}$) T$_2$ G$_3$ चानुरूपे; M$_1$ चारुनेत्रे. — $^{d}$) S (except G$_1$ M$_1$) यदग्निहोत्रं प्रवृतं पुराणं.

**13** $^{a}$) K$_3$ B$_{2.4}$ Dc$_1$ Dn$_1$ D$_{3-6}$ वा° (for चा°). K$_{1.3.4}$ D$_{2.3}$ T$_1$ G °निर्निक्त° (G$_1$ °निमित्त°) (for °निर्णिक्त°). M$_1$ न चाशुचिं न व्यतिरिक्तपाणिः. — $^{b}$) M$_1$ om. (hapl.) from नाविपश्चित् up to जुहुयात् in 14$^{d}$. — $^{c}$) Ś$_1$ K$_{1.2}$ बुभुक्षिताः; B D (except D$_{1-3.5}$) बुभुत्सवः. T$_2$ G$_{2.3}$ शुद्धि° (for शुचि°). — $^{d}$) S °धानस्य (for °धानाद्धि).

**14** M$_1$ om. up to जुहुयात् in 14$^{d}$ (cf. v.l. 13). — $^{a}$) Ś$_1$ K$_{1.2.4}$ D$_{1.2.5}$ नाश्रोत्रियो. Ś$_1$ K D$_{1-3.5}$ देवहव्यं (K$_3$ °रथे). S (M$_1$ om.) देवहव्येषु युंज्यान्. — $^{b}$) B$_{1.3.4}$ D (except D$_1$) T$_1$ पुरा (for परा). Ś$_1$ तादृशं हि; K$_1$ तादृगेव; K$_2$ तादृशोहं. — $^{c}$) N अपूर्वमश्रो°. — $^{d}$) Ś$_1$ D$_3$ Dc$_2$ T$_1$ न चैतादृग्.

**15** $^{a}$) B Dn D$_{4.6}$ कृशाश्च ये; Dc ये ते कृशा; S ये वै कृशान् (T$_1$ M$_1$ कृशानुं; T$_2$ G$_3$ कृशा; M$_2$ विप्रा) (for कृशानुं ये). S (except T$_1$ G$_1$) जुह्वते. — $^{c}$) K$_1$ D$_5$ लोके. Ś$_1$ K D$_{1-3.5}$ यांति (for प्राप्य), and °गंधाः (for °गन्धं). — $^{d}$) D$_3$ om. from देवं up to पृच्छामि in 16$^{d}$. Ś$_1$ K D$_{1-3.5}$ पश्यंति ते तं परमादिदेवं.

**16** D$_3$ om. up to पृच्छामि in 16$^{d}$ (cf. v.l. 15). — $^{a}$) Ś$_1$ क्षेत्रज्ञलोकं; D$_5$ °भूते; T$_1$ °भूतं; K$_1$ °भावः. — $^{b}$) K$_3$ धर्मोदये (for कर्मो°). Ś$_1$ K$_{1-3}$ बुद्धिमतिप्रदिष्टां; Dc$_2$ D$_{2.5}$ G$_{2.4}$ बुद्धिमभि(Dc °नु)प्रविष्टां. — $^{c}$) Ś$_1$ K$_2$

:. 3. 12735
:. 3. 186. 21
. 3. 189. 21

पृच्छामि त्वां का ह्यसि चारुरूपे ॥ १६

सरस्वत्युवाच ।

अग्निहोत्रादहमभ्यागतास्मि
विप्रर्षभाणां संशयच्छेदनाय ।
त्वत्संयोगादहमेतद्ब्रुवं
भावे स्थिता तथ्यमर्थं यथावत् ॥ १७

तार्क्ष्य उवाच ।

न हि त्वया सदृशी काचिदस्ति
विभ्राजसे ह्यतिमात्रं यथा श्रीः ।
रूपं च ते दिव्यमत्यन्तकान्तं
प्रज्ञां च देवीं सुभगे बिभर्षि ॥ १८

सरस्वत्युवाच ।

श्रेष्ठानि यानि द्विपदां वरिष्ठ
यज्ञेषु विद्वन्नुपपादयन्ति ।
तैरेवाहं संप्रवृद्धा भवामि
आप्यायिता रूपवती च विप्र ॥ १९
यच्चापि द्रव्यमुपयुज्यते ह
वानस्पत्यमायसं पार्थिवं वा ।
दिव्येन रूपेण च प्रज्ञया च
तेनैव सिद्धिरिति विद्धि विद्वन् ॥ २०

तार्क्ष्य उवाच ।

इदं श्रेयः परमं मन्यमाना
व्यायच्छन्ते मुनयः संप्रतीताः ।
आचक्ष्व मे तं परमं विशोकं
मोक्षं परं यं प्रविशन्ति धीराः ॥ २१

सरस्वत्युवाच ।

तं वै परं वेदविदः प्रपन्नाः
परं परेभ्यः प्रथितं पुराणम् ।
स्वाध्यायदानव्रतपुण्ययोगै-
स्तपोधना वीतशोका विमुक्ताः ॥ २२

---

ते वंशप्रज्ञां; $K_1$ $D_1$ दैवीं ($K_1$ तव) च प्रज्ञां; $T_1$ प्राहा देवीं (for प्रज्ञां च देवीं). Dc दैवीं. Ś$_1$ $K_{1.2}$ $B_1$ $Dn_3$ विमृष्य; $D_1$ $G_2$ बिभर्षि (for विमृश्य). $K_{3.4}$ $D_{2.5}$ दैवीं च ($K_4$ $D_5$ om. च) प्रज्ञां सुभगे त्वं बिभर्षि ($D_5$ ब्रवीषि). — [d]) S (except $G_{1.4}$) त्वा (for त्वां). $T_1$ $G_1$ M न्वसि (for ह्यसि).

**17** [a]) Ś$_1$ $K_{1-3}$ $D_5$ अ($K_{1.2}$ इहा-; $D_5$ तार्क्ष्या)ग्निहोत्रादहमागतास्मि; $M_1$ (corrupt) अग्निहोत्रादहमभ्ययाद्गतास्मि; $M_2$ अग्निहोत्रादाहवनीयादभ्यागतास्मि. — [b]) $T_2$ $G_{3.4}$ विप्रर्षीणां (for विप्रर्ष°). $D_3$ °च्छेदनार्थं. — [c]) $K_3$ $D_{1.2}$ एवम्; $K_4$ B Dc Dn $D_{3.4.6}$ $G_2$ $M_2$ एतम्; $M_1$ एवैतद् (for एतद्). M अब्रवं! — [d]) $T_2$ $G_{2-4}$ भाव- (for भावे). Dc तथ्यमन्नं; $T_2$ (by corr.) $G_{1-3}$ तथ्यमर्थ्यं; $M_2$ सत्यमर्थं. $K_2$ यथार्कं (for यथावत्).

**18** [c]) Ś$_1$ K $D_{1-3}$ अत्यर्थकांतं; B ($B_1$ marg.) Dc Dn $D_{4.6}$ $T_1$ अनंतकांतिं; $D_5$ अतीवकांतं (for अत्यन्त°). — [d]) Ś$_1$ देवि स्वप्रज्ञां; $K_1$ दैवीं सुप्रज्ञां; $K_2$ देवि सप्रज्ञां; $K_4$ $D_{1-3.5}$ दैवीं प्रज्ञां (for प्रज्ञां च देवीं). $T_1$ $M_2$ दैवीं; $T_2$ G देवी ($G_2$ °वि). $K_4$ $D_{1-3.5}$ $T_1$ त्वं बिभर्षि (for बिभ°).

**19** [a]) Ś$_1$ $K_{1.2.4}$ $D_{1-3.5}$ द्रव्याणि; $K_3$ ज्येष्ठानि. — [b]) $T_2$ (before corr.) $G_4$ विद्याम् (for विद्वन्). — [c]) B D (except $D_{1-3.5}$) चाहं (for [अ]हं). $D_2$ संप्रहृष्टा; $T_1$ संप्रवृत्ता. — [d]) To avoid hiatus, B D (except $D_{1-3.5}$) चाप्या° (for आप्या°).

**20** [a]) S पात्रम् (for द्रव्यम्). $T_2$ $G_{2-4}$ उपयुज्यति. $T_1$ वा; $T_2$ $G_{2-4}$ [इ]ह; $G_1$ भवान्वा (for ह). — [b]) $T_2$ $G_{2-4}$ यो वानस्पत्यम् (for वानस्पत्यम्). $T_1$ transp. आयसं and पार्थिवं. $K_1$ $D_3$ पायसं; $D_{1.2}$ चायसं; $G_1$ वैणवं; M तैजसं (for आयसं). Ś$_1$ K $B_2$ $D_{1-3.5.6}$ च (for वा). — [c]) $G_{2.4}$ M प्रत्ययाच् (for प्रज्ञया). — [d]) $Dc_2$ Dn $D_{4.6}$ $T_1$ तवैव; $D_3$ तेनैति; $M_1$ तेनैमि (for तेनैव). $K_2$ सिद्धैर्; $K_3$ $D_1$ $M_2$ सिद्धिम्; $K_4$ $D_{2.5}$ सिद्धाम्; $T_1$ $M_1$ सिद्धम्. Ś$_1$ $K_{1.2}$ विहिता; $K_4$ $D_{1.2}$ इह मां (for इति). $K_3$ मां च (for विद्धि).

**21** Ś$_1$ $K_{1.2}$ $D_5$ read the ref. before 21[cd]. — [b]) $T_2$ $G_{2-4}$ यच्छंदतो (for व्याय°). $K_3$ $B_1$m सुप्रणीताः; $B_1$ सुप्रतीताः; $G_{2.4}$ मन्यमानाः (for संप्र°). — [c]) $D_1$ मे तत्; $G_1$ ते तान् (for मे तं). — [d]) Ś$_1$ K $D_{1-3}$ शुभं (for परं). $K_{1.2}$ $M_2$ प्रवदंति; $K_4$ $D_{1.2}$ प्रदिशंति. — After 21, N ins.:

915* सांख्या योगाः परमं यं वदन्ति
परं पुराणं तमहं न वेद्मि ।

[(L. 1) Ś$_1$ $K_{1.2}$ सांख्ये योगं (Ś$_1$ °गे); $B_1$ $D_{1.5}$ सांख्यं योगं. $K_1$ $B_{3.4}$ $Dc_1$ Dn $D_{4.6}$ विदंति.]

**22** [a]) $T_2$ $G_{2-4}$ तद्वै. Ś$_1$ $K_1$ $T_2$ $G_3$ वेदविदं. — [b]) $T_1$ परमं (for प्रथितं). — [c]) B $Dc_2$ Dn $D_{4.6}$ स्वाध्याय-

तस्याथ मध्ये वेतसः पुण्यगन्धः
सहस्रशाखो विमलो विभाति ।
तस्य मूलात्सरितः प्रस्रवन्ति
मधूदकप्रस्रवणा रमण्यः ॥ २३
शाखां शाखां महानद्यः संयान्ति सिकतासमाः ।
धानापूपा मांसशाकाः सदा पायसकर्दमाः ॥ २४
यस्मिन्नग्निमुखा देवाः सेन्द्राः सह मरुद्गणैः ।
ईजिरे क्रतुभिः श्रेष्ठैस्तत्पदं परमं मुने ॥ २५

इति श्रीमहाभारते आरण्यकपर्वणि चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

# १८५

वैशंपायन उवाच ।
ततः स पाण्डवो भूयो मार्कण्डेयमुवाच ह ।
कथयस्वेह चरितं मनोर्वैवस्वतस्य मे ॥ १
मार्कण्डेय उवाच ।
विवस्वतः सुतो राजन्परमर्षिः प्रतापवान् ।
बभूव नरशार्दूल प्रजापतिसमद्युतिः ॥ २
ओजसा तेजसा लक्ष्म्या तपसा च विशेषतः ।
अतिचक्राम पितरं मनुः स्वं च पितामहम् ॥ ३
ऊर्ध्वबाहुर्विशालायां बदर्यां स नराधिपः ।
एकपादस्थितस्तीव्रं चचार सुमहत्तपः ॥ ४

C. 3. 12749
B. 3. 187. 4
K. 3. 190. 4

---

वंतो व्रत°. — $^d$) Ś1 K1. 2 गत° (for वीत°).

**23** $^a$) Ś1 K1 मन्ये (for मध्ये). K2 वमंतः; K4 Dn2 चेतसः; T G3 वेधसः. — $^b$) B D (except D1–3. 5) विपुलो (for विमलो). — $^c$) B1 तस्येह; T1 तस्याथ (for तस्य). B1 प्रच्यवंति. — $^d$) K1. 2 D3. 5 मधूदकाः प्रस्रवणा. B Dn D4–6 सुपुण्याः (B4 वमन्यः); Dc पुण्यगंधाः (for रमण्यः). K3 मधूदकं प्रस्रवण्यः सुरम्याः.

**24** $^a$) G2. 4 शाखाः शाखा. — $^b$) B4 सर्पंति; D2 स यांति. Ś1 K1. 2 सिकता यथा; K3 D2. 3. 5 सिकताः (D5 °तां) समाः; B Dc Dn D1. 4. 6 सिकताशयाः (B4 पयसा समाः); M सिकतैः समाः (M1 °मं). — $^c$) T2 G1. 3. 4 पाना(G1 पथा)पूपा. S मांसकूलाः (M °कामाः). Ś1 K1. 2 धाराः प्रपा मामशोकाः; D1. 2 धानापूपारगाः पुण्याः.

**25** $^a$) K3 Dc G1 M2 तस्मिन् (for यस्मिन्). — $^b$) B D (except D1–3) T G2–4 -मरुद्गणाः. — $^c$) Ś1 K D1–3. 5 पुण्यैस्; B2 मुख्यैस् (for श्रेष्ठैस्). — $^d$) K3 G2 परं (for पदं). Ś1 K1. 2 सुखं; B (B3 marg.) D (except D1–3. 5) मम; B3 पदं (for मुने). G4 तत्परं परमश्नुते.

Colophon. — *Major parvan:* Ś1 K1. 2 T2 G2–4 आरण्य. — *Sub-parvan:* G1 मार्कंडेयसमस्या. — *Adhy. name:* K3. 4 B Dc Dn1 D1–4. 6 M1 सरस्वतीतार्क्ष्यसंवादः; Dn3 सरस्वतीतार्क्ष्यसंवादार्थप्रकाशः; D5 सरस्वतीवाक्यं; G1 तार्क्ष्यसरस्वतीसंवादः. — *Adhy. no.* (figures, words or both): K1 93 (= 193); Dn 185 (Dn3 186); D1 192; S (M2 *inf. lin.*) 188 (M2 orig. 190). — *Śloka no.:* Dn D1 30.

## 185

**1** $^a$) B1 D1. 2 ततश्च; B3 तत्र स (for ततः स). B D (except D1–3. 5) विप्रं (for भूयो). — $^c$) Dc1 Dn D4. 6 [इ]ति (for [इ]ह). — $^d$) Ś1 K3. 4 B2 D3 ह; K1. 2 B1. 3. 4 Dc Dn D1. 2. 4–6 च (for मे).

**2** $^a$) B4 Dc राजा (for राजन्). — $^b$) B1–3 D (except D1–3. 5) महर्षिः सु(Dc स; Dn3 च)प्र°. — $^c$) T G2–4 M2 मुनिशार्दूलः; G1 राजशार्दूल; M1 नृपशा° (for नरशा°).

**3** $^{ab}$) T G2–4 transp. तेजसा and तपसा. — $^d$) B1 सर्व- (m स्वं च as in text). T2 (before corr.) G2. 4 तं (for स्वं).

**4** Cf. 3. 13. 12$^{ab}$. — $^b$) Ś1 K1. 2 M जनाधिप; K4 B1–3 Dn2 D4 नराधिप. — Ś1 K1. 2 om. (? hapl.) 4$^{cd}$. — $^c$) K4 D1 °पादे (for °पाद-). B1 (m as in text) S पूर्वं (for तीव्रं). — $^d$) G4 चकार (for चचार). Dc स (for सु-).

**5** $^a$) K1. 3. 4 Dc अर्वाक्शिराः; B1 अवाक्शीर्षः (m

C. 3. 12750
B. 3. 187. 5
K. 3. 190. 5

अवाक्शिरास्तथा चापि नेत्रैरनिमिषैर्दृढम् ।
सोऽतप्यत तपो घोरं वर्षाणामयुतं तदा ॥ ५
तं कदाचित्तपस्यन्तमार्द्रचीरजटाधरम् ।
वीरिणीतीरमागम्य मत्स्यो वचनमब्रवीत् ॥ ६
भगवन्क्षुद्रमत्स्योऽस्मि बलवद्भ्यो भयं मम ।
मत्स्येभ्यो हि ततो मां त्वं त्रातुमर्हसि सुव्रत ॥ ७
दुर्बलं बलवन्तो हि मत्स्यं मत्स्या विशेषतः ।
भक्षयन्ति यथा वृत्तिर्विहिता नः सनातनी ॥ ८
तस्माद्भयौघान्महतो मज्जन्तं मां विशेषतः ।
त्रातुमर्हसि कर्तास्मि कृते प्रतिकृतं तव ॥ ९
स मत्स्यवचनं श्रुत्वा कृपयाभिपरिप्लुतः ।
मनुर्वैवस्वतोऽगृह्णात्तं मत्स्यं पाणिना स्वयम् ॥ १०
उदकान्तमुपानीय मत्स्यं वैवस्वतो मनुः ।
अलिञ्जरे प्राक्षिपत्स चन्द्रांशुसदृशप्रभम् ॥ ११
स तत्र ववृधे राजन्मत्स्यः परमसत्कृतः ।
पुत्रवच्चाकरोत्तस्मिन्मनुर्भावं विशेषतः ॥ १२
अथ कालेन महता स मत्स्यः सुमहानभूत् ।
अलिञ्जरे जले चैव नासौ समभवत्किल ॥ १३
अथ मत्स्यो मनुं दृष्ट्वा पुनरेवाभ्यभाषत ।
भगवन्साधु मेऽद्यान्यत्स्थानं संप्रतिपादय ॥ १४
उद्धृत्यालिञ्जरात्तस्मात्ततः स भगवान्मुनिः ।
तं मत्स्यमनयद्वापीं महतीं स मनुस्तदा ॥ १५

---

°क्शिराः as in text). Ś1 स्थितश्चापि; K1. 2 ततश्चापि; K4 तथा तस्थौ; D1. 2 चापि नेत्रैः; D3 तु तत्रापि (for तथा चापि). — $^{b}$) K2 B2 दृढैः; B3 अपि (for दृढम्). D1. 2 रुद्धैरुन्निमिषैर्दहन्. — $^{c}$) K3 तपं; Dc2 महा-; D4 ततो (for तपो). — $^{d}$) B4 Dc तपः (for तदा).

**6** D4 om. $6^{c}$–$7^{d}$. — $^{c}$) K3 B (B1m as in text) Dn D3 चीरिणी- (B1 orig. वीरणा-); K4 D1. 2 T1 G1. 2. 4 M1 वीरणी-. B3 -तीर्थम् (for -तीरम्). Ś1 अध्यास्य; K B4 D1–3. 5 आसाद्य (for आगम्य).

**7** D4 om. 7 (cf. v.l. 6). — $^{a}$) B2 क्षत्र° (for क्षुद्र°). B1 D5 [ऽ]हं (for ऽस्मि). — $^{b}$) T1 स्थलं (for भयं). Dn1 महत् (for मम). — $^{c}$) B4 मत्स्यादेभ्यस् (for मत्स्येभ्यो हि). M1 [ऽ]पि (for हि). Ś1 K1. 2 भयार्तं मां; K4 D1–3 भयान्मां त्वं; T2 G2–4 तथा (G2. 4 °तो) भीतं; M तथा मां त्वं.

**8** $^{a}$) G2 M2 दुर्लभं (for दुर्बलं). — $^{b}$) B Dc Dn D1. 4. 6 मत्स्या मत्स्यं (by transp.) D2 मत्स्यो मत्स्यं; T1 मत्स्यं मत्स्यो; G4 मत्स्यान्मत्स्या. — Ś1 K1 om. (hapl.) $8^{c}$–$9^{b}$. — $^{c}$) K (K1 om.) D3. 5 खादयंति; B Dc Dn D4. 6 आस्वदंति; D1. 2 आददंति (for भक्षयन्ति). B Dc1 Dn D4. 6 सदा; M1 तथा (for यथा).

**9** Ś1 K1 om. $9^{ab}$ (cf. v.l. 8). — $^{a}$) B1 भयाद्धि; B3 भुजौघान्; T1 भयान्मां (for भयौघान्). — $^{b}$) G2 मज्जमानं (for मज्जन्तं मां). K3. 4 मा; D1. 2 च (for मां). — $^{d}$) D5 वचः (for तव). M2 कृतप्रतिकृतस्तव.

**10** Before 10, Dc ins. मार्कंडेय उ°. — $^{a}$) Ś1 K1. 2 G1. 2. 4 मत्स्यस्य वचनं श्रुत्वा; K4 D1–3 स मत्स्यस्य वचः श्रुत्वा. — $^{c}$) D5 स्वायंभुवो (for वैवस्वतो). — $^{d}$) B1 मत्स्यं तं (by transp.).

**11** $^{a}$) G1 M1 उदकात्तम्. G1 उपादाय. — $^{c}$) Ś1 K1. 2 D3 अरंजिरे; K3. 4 अलंजिरे; Dc2 Dn2. n3 D1. 2 अलिंजिरे; S अरञ्जरे. Ś1 K B3. 4 D3. 5 T1 M च; B2 Dn D1. 2. 4. 6 तं (for स). — $^{d}$) Ś1 K1–3 B1. 3. 4 D (except Dn2 D1. 2) °प्रभे.

**12** $^{cd}$) Dn D4. 6 स्वीकरोत् (for चाकरोत्). K1 तस्मान्; K3 B D (except Dc) तस्मै (for तस्मिन्). K4 transp. तस्मिन् and भावं. T1 अनुभावं (for मनुर्भावं).

**13** $^{b}$) K D3. 5 मत्स्यः स (by transp.); D1. 2 संवर्धन्. D1. 2 स; D5 तु (for सु-). — $^{c}$) Ś1 K1. 2 अरंजिरे; K3 अलंजर-; K4 D1–3 अलंजिर-; Dc2 Dn D4. 6 अलिंजिरे; S अरंजरे (T G3 अरंजरं; G1 M2 अरंजर-) (cf. v.l. 11$^{c}$). B1. 3 Dc यदा; B2. 4 Dn D4. 6 T2 (after corr.) G3 यथा (for जले). D3 T1 नैव (for चैव). — $^{d}$) Ś1 नायं (for नासौ). K4 तदा (for किल).

**14** $^{c}$) Ś1 K1. 2 तु; K3 D1 वा; Dn2 हि (for ऽद्य). D5 त्वं (for [अ]न्यत्). — $^{d}$) S वै (for सं-).

**15** $^{a}$) Ś1 K1. 2. 4 D3 अरंजिरात्; K3 अलंजिरात्; Dn D2 अलिंजिरात्; S अरंजरात् (cf. v.l. 11, 13). — $^{b}$) Ś1 K1. 2 ऋषिः; K4 B D (except D5) T1. 2 (after corr.) G3 मनुः (for मुनिः). — $^{c}$) K1. 2. 4 आनयद्. — $^{d}$) T1 G1 M तु; T2 (before corr.) G2. 4 तं (for स). T1 ततस् (for मनुस्). D5 स्वयं (for तदा). K4 D1–3 महतीं वारिसंभृतां.

**16** $^{a}$) B4 सत्कृतं (for तत्र तं). B3 चा° (for प्रा°).

तत्र तं प्राक्षिपच्चापि मनुः परपुरंजय ।
अथावर्धत मत्स्यः स पुनर्वर्षगणान्बहून् ॥ १६
द्वियोजनायता वापी विस्तृता चापि योजनम् ।
तस्यां नासौ समभवन्मत्स्यो राजीवलोचन ।
विचेष्टितुं वा कौन्तेय मत्स्यो वाप्यां विशां पते ॥ १७
मनुं मत्स्यस्ततो दृष्ट्वा पुनरेवाभ्यभाषत ।
नय मां भगवन्साधो समुद्रमहिषीं प्रभो ।
गङ्गां तत्र निवत्स्यामि यथा वा तात मन्यसे ॥ १८
एवमुक्तो मनुर्मत्स्यमनयद्भगवान्वशी ।
नदीं गङ्गां तत्र चैनं स्वयं प्राक्षिपदच्युतः ॥ १९
स तत्र ववृधे मत्स्यः किंचित्कालमरिंदम ।
ततः पुनर्मनुं दृष्ट्वा मत्स्यो वचनमब्रवीत् ॥ २०
गङ्गायां हि न शक्नोमि बृहत्त्वाच्चेष्टितुं प्रभो ।
समुद्रं नय मामाशु प्रसीद भगवन्निति ॥ २१
उद्धृत्य गङ्गासलिलात्ततो मत्स्यं मनुः स्वयम् ।
समुद्रमनयत्पार्थ तत्र चैनमवासृजत् ॥ २२
सुमहानपि मत्स्यः सन्स मनोर्मनसस्तदा ।
आसीद्यथेष्टहार्यश्च स्पर्शगन्धसुखश्च वै ॥ २३
यदा समुद्रे प्रक्षिप्तः स मत्स्यो मनुना तदा ।
तत एनमिदं वाक्यं स्मयमान इवाब्रवीत् ॥ २४
भगवन्कृता हि मे रक्षा त्वया सर्वा विशेषतः ।
प्राप्तकालं तु यत्कार्यं त्वया तच्छ्रूयतां मम ॥ २५

C. 3. 12772
B. 3. 187. 27
K. 3. 190. 27

— $^{b}$) $K_3$ $D_5$ मुनिः (for मनुः). $K_4$ Dc $Dn_3$ $D_1$ $T_2$ $G_{1.3}$ $M_1$ °जयः (for °जय). $M_2$ मत्स्यं मनुजसत्तम.

**17** $^{a}$) $B_2$ Dc त्रि- (for द्वि-). $K_{1.2}$ °यतो वापि; $G_2$ °यतश्चापि. — $^{b}$) $G_2$ विस्तृतश्. $K_3$ चायुतत्रयं; $G_4$ च द्वियोजनं. — $^{c}$) $B_4$ Dc तस्यां न स्थातुमशकन्; $G_2$ तस्यां न शेषमभवन्. — $^{d}$) A few MSS. °लोचनः. — $^{e}$) $K_3$ $D_1$ विचेष्टितं. $K_4$ $B_{1.2.4}$ Dn $D_{4-6}$ च (for वा). $G_2$ यदा तोये (for च कौन्तेय). — $^{f}$) $T_1$ अरिंदम (for विशां पते).

**18** $^{a}$) $K_2$ लब्ध्वा (for दृष्ट्वा). — Before $18^{cd}$, Dc ins. मत्स्य उ°. — $B_2$ om. (hapl.) $18^{b}$–$20^{c}$. — $^{c}$) $K_{2.3}$ मा (for मां). — $^{d}$) $K_2$ प्रभुं; $K_4$ $B_4$ $D_{1-3}$ प्रति; $B_1m$ Dn $D_{4-6}$ $T_2$ (after corr.) $G_3$ $M_2$ प्रियां (for प्रभो). — $^{ef}$) $D_5$ यथावत् (for यथा वा). Ś$_1$ $K_{1.2}$ मन्यसे प्रभो (for तात मन्यसे). S गंगां नात्रापि ($G_{2.4}$ °त्र त्रि-) शक्नोमि वस्तुं मतिमतां वर. $T_2$ (after the above) reads $18^{ef}$ as in text also. — After 18, N (except $B_2$) $G_3$ ins.:

916* निदेशे हि मया तुभ्यं स्थातव्यमनसूयता ।
　　वृद्धिर्हि परमा प्राप्ता त्वत्कृते हि मयानघ ।

[(L. 1) $K_{3.4}$ $D_{1-3.5}$ त्वन्निदेशे ($D_5$ °शान्) मया नित्यं ($D_5$ तात) (for the prior half). Ś$_1$ $K_{1.2}$ °सूयया (for °सूयता). — (L. 2) Ś$_1$ K $D_{1-3.5}$ °तेयं (for °ते हि).]

**19** $B_2$ om. 19 (cf. v.l. 18); $T_2$ om. 19–20. — $^{a}$) Ś$_1$ $K_{1.2}$ मुनिर् (for मनुर्). — $^{b}$) $K_4$ $D_1$ आनयद्; $T_1$ गमयद् (for अनयद्). — $^{c}$) $G_1$ गंगां नदीं (by transp.). $G_{2.4}$ नदीं तां तत्र चैवैनं. — $^{d}$) $B_{1.3}$ $D_4$ $T_1$ $G_1$ अच्युत; $D_5$ °तं; $G_{2.4}$ एव च (for अच्युतः).

**20** $B_2$ om. $20^{abc}$ (cf. v.l. 18); $T_2$ om. 20 (cf. v.l. 19). — $^{b}$) $K_1$ $D_{2.3.5}$ $G_{1.2.4}$ M कंचित् (for किंचित्). — $^{c}$) Ś$_1$ K $D_{1-3.5}$ मत्स्यो (for पुनर्). — $^{d}$) Ś$_1$ K $D_{1-3.5}$ पुनरेवाभ्यभाषत (= $18^{b}$).

**21** $^{a}$) Ś$_1$ K $D_{1-3.5}$ न हि (by transp.). — $^{b}$) Ś$_1$ $K_{1.2}$ महत्त्वा° (for बृहत्त्वा°). Ś$_1$ $K_{1.2}$ M विभो; $T_1$ मुने (for प्रभो). — Dc om. $21^{c}$–$22^{b}$. — $^{d}$) $D_5$ मम (for इति).

**22** Dc om. $22^{ab}$ (cf. v.l. 21). — $^{b}$) $D_5$ तं मत्स्यं च (for ततो मत्स्यं). — $^{c}$) $K_4$ आनयत्. $M_1$ राजन् (for पार्थ).

**23** $G_4$ om. 23. — $^{a}$) Ś$_1$ $T_1$ $M_1$ स; B Dn $D_{4.6}$ तु ($B_1$ [अ]सौ); Dc तं; $D_5$ च (for सन्). — $^{b}$) Ś$_1$ $K_{1.2}$ मनोः सु-; $B_3$ मनोस्तु; $M_1$ मनोर्वै (for स मनोर्). B D (except $D_{1-3.5}$) नयतस्; $T_2$ $G_3$ मुनिनस् (sic) (for मनसस्). — $^{c}$) Ś$_1$ $K_{1.2}$ यथेष्टमार्यः; $B_3$ मखेषु हार्यः; Dc सुखेष्टहार्यः; $D_4$ यथेव हार्यः; $T_1$ $G_2$ यथेष्टभार्यः (for यथेष्टहार्यः). Ś$_1$ सन्; $K_{1.2}$ स; $B_2$ तु (for च). — $^{d}$) $B_4$ $Dn_2$. $n_3$ $D_{3.4}$ °सुखस्य; $D_6$ °सहश्च (for °सुखश्च). $T_1$ सर्वगंधः स तत्र वै.

**24** $^{a}$) $K_2$ $D_4$ प्राक्षिप्तः; $D_5$ प्राप्तः स (for प्रक्षिप्तः). — $^{b}$) $D_5$ मत्स्यस्तु; $G_4$ समुद्रे (for स मत्स्यो). $D_5$ सह (for तदा). — $^{c}$) $B_4$ तत्र (for तत). $D_5$ पुनर्; $T_2$ $G_{2-4}$ मनुर् (for एनम्). — $^{d}$) $D_5$ त्वथा° (for इवा°).

**25** $^{a}$) Hypermetric! $B_2$ Dn $D_{4.6}$ हि कृता; $T_1$ कृतैव मे (for कृता हि मे). $B_4$ कृताभिरक्षा भगवन्. — $^{b}$) $B_4$ मम; $T_1$ सर्व- (for सर्वा). — $^{c}$) $K_3$ °कालेषु (for °कालं तु). Ś$_1$ $K_{1.2}$ यथा (for तु यत्).

3. 12773
3. 187. 28
3. 190. 28

अचिराद्भगवन्भौममिदं स्थावरजङ्गमम् ।
सर्वमेव महाभाग प्रलयं वै गमिष्यति ॥ २६
संप्रक्षालनकालोऽयं लोकानां समुपस्थितः ।
तस्मात्त्वां बोधयाम्यद्य यत्ते हितमनुत्तमम् ॥ २७
त्रसानां स्थावराणां च यच्चेङ्गं यच्च नेङ्गति ।
तस्य सर्वस्य संप्राप्तः कालः परमदारुणः ॥ २८
नौश्च कारयितव्या ते दृढा युक्तवटाकरा ।
तत्र सप्तर्षिभिः सार्धमारुहेथा महामुने ॥ २९
बीजानि चैव सर्वाणि यथोक्तानि मया पुरा ।
तस्यामारोहयेर्नावि सुसंगुप्तानि भागशः ॥ ३०
नौस्थश्च मां प्रतीक्षेथास्तदा मुनिजनप्रिय ।
आगमिष्याम्यहं शृङ्गी विज्ञेयस्तेन तापस ॥ ३१
एवमेतत्त्वया कार्यमापृष्टोऽसि व्रजाम्यहम् ।
नातिशङ्क्यमिदं चापि वचनं ते ममाभिभो ॥ ३२
एवं करिष्य इति तं स मत्स्यं प्रत्यभाषत ।
जग्मतुश्च यथाकाममनुज्ञाप्य परस्परम् ॥ ३३
ततो मनुर्महाराज यथोक्तं मत्स्यकेन ह ।
बीजान्यादाय सर्वाणि सागरं पुप्लुवे तदा ।
नावा तु शुभया वीर महोर्मिणमरिंदम ॥ ३४
चिन्तयामास च मनुस्तं मत्स्यं पृथिवीपते ।
स च तच्चिन्तितं ज्ञात्वा मत्स्यः परपुरंजय ।
शृङ्गी तत्राजगामाशु तदा भरतसत्तम ॥ ३५

---

**26** $^{a}$) G1 M1 लोकम् (for भौमम्). — $^{b}$) Ś1 K1. 2 सर्वं; D3 जगत्; G1. 2 इमं (for इदं). — $^{d}$) D5 च (for वै).

**27** K1 om. $27^{a}$–$28^{b}$. — $^{a}$) G4 स (for सं-). — K3 om. from समुप° (in $27^{c}$) up to नेङ्गति (in $28^{b}$).

**28** K1. 3 om. $28^{ab}$ (cf. v.l. 27). — $^{a}$) Ś1 K2. 4 D1 M1 चराणां; T1 भूतानां; T2 G3 त्रासनं; G1 जंगम- (for त्रसानां). D5 जंगमानां स्थावराणां. — $^{b}$) =$49^{d}$. K4 यच्चैंगं; D4 यत्त्वेंगं; G1 M1 यच्चेंगद्. B2. 3 Dc2 नेंगते; T1 G2 नेंगितं (for नेङ्गति).

**29** $^{b}$) K4 दृढ-; G1 यथा (for दृढा). K3 D3 मुक्त-; K4 D1. 2 युक्ता; D6 रज्जु- (for युक्त-). K4 B Dc1 Dn D1. 2. 4–6 -वटारका; T G3. 4 -कवाटिका; G2 M -पटाकरा (for -वटाकरा); cf. v.l. 37. — $^{d}$) K3. 4 D1. 2 T1 G1 M आरोहेथा; D5 आरुहेस्त्वं; T2 G2–4 आरोहाथ (for आरुहेथा).

**30** $^{a}$) B2 Dc बीजानां. D1 कर्माणि (for सर्वाणि). — $^{b}$) B D (except D1–3. 5) द्विजैः पुरा (B4 पुरा मया). — $^{c}$) Ś1 K1. 2. 4 D1–3. 5 आरोपयेर् (for °हयेर्). — $^{d}$) Ś1 K D1–3. 5 सुगुप्तायां विभागशः (Ś1 विशेषतः; K2 विभावसुः).

**31** $^{a}$) Ś1 तस्थुश्च; K D1–3 तत्स्थश्च; D5 तत्रस्थो (for नौस्थश्च). Ś1 तां; G2. 4 मा (for मां). Ś1 उपे° (for प्रती°). — $^{b}$) Dn D4. 6 ततो; D1–3. 5 सदा; T1. 2 (before corr.) G1. 2. 4 तथा (for तदा). K2 Dn1 T1 G4 °प्रियः. — $^{d}$) K3. 4 D3. 5 तेन वै मुने; B1 स्वेन तेजसा (m तेन तापस as in text).

**32** $^{a}$) B1–3 D2. 3 T G2–4 एव (for एतत्). — $^{b}$) D5 त्वां पृष्ट्वा हि; G4 त्वामापृष्टो (for आपृष्टोऽसि). — After $32^{ab}$, B3 D (except D1–3. 5) ins.:

917* ता न शक्या महत्यो वै आपस्ततुं मया विना ।

[B3 न च शक्यमिदं वारि (for the prior half), and त्वया (for आपस्).]

— $^{c}$) Ś1 B2. 3 Dc Dn D3m. 4. 6 नाभिशंक्यम्; K3 B1 नाति(B1 °भि)क्रम्यम्; B4 D5 न च (D5 वि-) शंक्यम् (for नातिशङ्क्यम्). B4 वारि (for चापि). — $^{d}$) Ś1 K1. 2 D1–3 ममांतिके; K3 D5 T1 महामुने (for ममाभिभो). K4 वचनं मम चांतिके; B4 त्वया ततुं मया विना (cf. 917*); B1–3 Dc Dn D4. 6 वचनं मे त्वया विभो.

**33** $^{a}$) B4 करिष्यामि (for करिष्ये). Ś1 K1. 2 च (for तं). — $^{b}$) Ś1 B4 T1 मत्स्यं स (by transp.). — $^{c}$) K4 D3 तौ (for च). Dc °कालम् (for °कामम्).

**34** $^{b}$) D6 T1 हि (for ह). — $^{d}$) D5 transp. सागरं and पुप्लुवे. T1 G1 समुद्रं (for सागरं). — $^{e}$) Ś1 K1. 2 B Dc Dn D4. 6 नौकया; K3 नावाया (sic); K4 °शु; D5 °थ (for नावा तु). B2 प्रभया (for शु°). Dc2 धीरो; D1 भावी (for वीर). — $^{f}$) D3 T1 °दमं (for °दम).

**35** $^{a}$) T G2–4 स (for च). T2 G3 मुनिस् (for मनुस्). — $^{c}$) =1. 216. $2^{a}$ : 4. 41. $4^{c}$ : 5. 41. $8^{c}$. D5 तु (for च). D5 G4 तं (for तच्). — $^{d}$) =$38^{b}$. K3. 4 Dc D2. 5. 6 T2 (before corr.) M1 °जयः. — T1 om. (hapl.) $35^{e}$–$40^{d}$. — $^{e}$) Ś1 K1–3 Dc तदा°; K4 D1–3. 5 तथा° (for तत्रा°). T2 G2. 4 सुग्रीवस्तं जगामाशु. — $^{f}$) D5 T2 (before corr.) G1 तथा (for तदा).

**36** T1 om. 36 (cf. v.l. 35). — $^{a}$) Ś1 K1. 2 D5 मनुजेंद्रेंद्रो; B Dn D4. 6 मनुजव्याघ्र (B1 मनुरव्यग्रो); T2

तं दृष्ट्वा मनुजेन्द्रेन्द्र मनुर्मत्स्यं जलार्णवे ।
शृङ्गिणं तं यथोक्तेन रूपेणाद्रिमिवोच्छ्रितम् ॥ ३६
वटाकरमयं पाशमथ मत्स्यस्य मूर्धनि ।
मनुर्मनुजशार्दूल तस्मिञ्शृङ्गे न्यवेशयत् ॥ ३७
संयतस्तेन पाशेन मत्स्यः परपुरंजय ।
वेगेन महता नावं प्राकर्षल्लवणाम्भसि ॥ ३८
स ततार तया नावा समुद्रं मनुजेश्वर ।
नृत्यमानमिवोर्मीभिर्गर्जमानमिवाम्भसा ॥ ३९
क्षोभ्यमाणा महावातैः सा नौस्तस्मिन्महोदधौ ।
घूर्णते चपलेव स्त्री मत्ता परपुरंजय ॥ ४०
नैव भूमिर्न च दिशः प्रदिशो वा चकाशिरे ।
सर्वमाम्भसमेवासीत्खं द्यौश्च नरपुंगव ॥ ४१
एवंभूते तदा लोके संकुले भरतर्षभ ।
अदृश्यन्त सप्तर्षयो मनुर्मत्स्यः सहैव ह ॥ ४२
एवं बहून्वर्षगणांस्तां नावं सोऽथ मत्स्यकः ।
चकर्षातन्द्रितो राजंस्तस्मिन्सलिलसंचये ॥ ४३
ततो हिमवतः शृङ्गं यत्परं पुरुषर्षभ ।
तत्राकर्षत्ततो नावं स मत्स्यः कुरुनन्दन ॥ ४४
ततोऽब्रवीत्तदा मत्स्यस्तानृषीन्प्रहसञ्शनैः ।
अस्मिन्हिमवतः शृङ्गे नावं बध्नीत माचिरम् ॥ ४५
सा बद्धा तत्र तैस्तूर्णमृषिभिर्भरतर्षभ ।
नौर्मत्स्यस्य वचः श्रुत्वा शृङ्गे हिमवतस्तदा ॥ ४६

C. 3. 12795
B. 3. 187. 50
K. 3. 190. 48

(before corr.) G4 °जेंद्रेण; G2 °जेंद्रोथ. — b) B1 स तु मत्स्यं; B4 मत्स्यं मनुर् (by transp.). Ś1 K1 B2 D1–3. 5 T2 G3 महार्णवे; Dc M1 जलाशये. — c) K3. 4 D1–3. 5 च; Dc S (T1 om.) तु (for तं). K4 तथोक्तेन. — d) B1 °चयोच्छ्रितं; B3 D1 °मिवोत्थितं; T2 G2–4 °मिवोन्नतं.

**37** T1 om. 37 (cf. v.l. 35). — a) K1 D5 वटाकार°; K4 B Dc Dn D1. 2. 4. 6 वटारक°; T2 G पटाकार°; M पटाकर° (cf. v.l. 29). K1. 2 पाशैर् (for पाशम्). — b) D1. 2 अपात्स्यन् (D1 अपश्यन्) मत्स्यमूर्धनि. — d) Dc तस्य (for तस्मिन्). Ś1 K B1 (m as in text) Dn D1–3. 5 देशे (for शृङ्गे). K1 न्यवेशयेत्; M2 °दयत्.

**38** T1 om. 38 (cf. v.l. 35). — a) K3 संगत°; K4 B1 D3. 5 G1 M2 स(B1 M2 सं)सित°; T2 G2–4 M1 संसक्त° (for संयत°). Ś1 K1. 2 स शिरस्थेन पाशेन. — b) $=35^{d}$. K2. 3 Dn2. n3 D2. 6 °जयः. — D1 om. (hapl.) $38^{c}$–$40^{d}$. — c) Ś1 K1. 2 योगेन (for वे°).

**39** T1 D1 om. 39 (cf. v.l. 35, 38). — a) Ś1 K1–3 B Dc Dn D4. 6 स च तान् (K1. 2 स तया) तारयन्नावा (K3 B1. 3 Dc2 °यामास). — b) K2. 3 °श्वरं; D3 °श्वरः. — c) =(var.) 3. 102. $21^{c}$. B2 गर्ज° (for नृत्य°). D2 [ऊ]र्म्यौं वै; D5 [उ]च्चैश्च (for ऊर्मीभिर्). — d) K3 D2 चलमान°; K4 °वल्गमान; B2 तर्जयान°. Ś1 K1. 2 गच्छन्नि- (K1 °ते)व तदांभसि.

**40** T1 D1 om. 40 (cf. v.l. 35, 38). — a) T2 G1 °माणं (for °माणा). — c) D2. 3 घूर्णितैश्च; S (T1 om.) जुघूर्ण (for घूर्णते).

**41** K2 om. $41^{ab}$. — a) G2. 4 न वै (for नैव). — b) T G च (for वा). — D5 om. $41^{c}$–$42^{d}$. — c) B3 सर्वदा (for सर्वम्). K2 अंभसम्; S सलिलम् (for आम्भसम्). D1 सर्वमंभोमयं चासीत्. — d) T1 नद्यश्च (for खं द्यौश्च).

**42** D5 om. 42 (cf. v.l. 41). G4 om. $42^{a}$–$44^{b}$. — a) D1. 2 काले (for लोके). — b) T2 G2. 3 °ले नरपुंगव. — c) Sporadic prior pāda! Ś1 K1. 2 अदृश्यन्सप्त ऋषयो; Dc D3 अदृश्यन्नृषयः सप्त; D1. 2 G1 अदृश्यंतर्षयः सप्त; M1 सप्तर्षयो मनुर्मत्स्यो. — d) M1 [ऽ]प्यदृश्यंत (for मनुर्मत्स्यः). Ś1 सदैव; K1. 2. 4 D1–3 स चैव; K3 B Dc Dn D4. 6 तथैव (for सहैव). K2 D1. 2 T1 हि; K3 B Dn1 D4 M2 च (for ह).

**43** G4 om. 43 (cf. v.l. 42). — b) D5 नावं तां (by transp.). K4 स स्म; D1. 2 स तु; D3 स च; D5 स्म स; T G2. 3 सोपि; M सोस्य (for सोऽथ).

**44** G4 om. $44^{ab}$ (cf. v.l. 42). — a) K2 हिमवते श्रृंगे. — b) K3 B D (except D1–3) भरतर्षभ. — B2 om. (hapl.) $44^{c}$–$47^{d}$. — c) D6 G2 °र्षत तां. M1 °र्षतदा (for °र्षत्ततो). K1 ताम्रं; K3 नावि (for नावं). — d) M2 मत्स्यकः (for स मत्स्यः). Ś1 K D1–3. 5 M2 कुंति° (for कुरु°). T1 G1. 2. 4 M2 मत्स्यः कौरव(G4 M2 कौंतेय)- नंदन.

**45** B2 om. 45 (cf. v.l. 44). — a) B (B2 om.) D (except D1–3. 5) T2 G3 अथा°; M1 तदा° (for ततो°). K4 D2 महा- (for तदा). — b) B1 (m as in text) T1 इव (for शनैः). — c) K1. 2 T1 तस्मिन् (for अस्मिन्).

**46** B2 om. 46 (cf. v.l. 44). — a) Ś1 K D2. 3. 5 वै तूर्णम्; T1 तस्थौ नाव (for तैस्तूर्णम्). — D1 om. (hapl.) $46^{c}$–$47^{d}$; G4 M2 om. $46^{cd}$. — c) K4 D2 तैर्; T1 ते

C. 3. 12795
B. 3. 187. 50
K. 3. 190. 49

तच्च नौबन्धनं नाम शृङ्गं हिमवतः परम् ।
ख्यातमद्यापि कौन्तेय तद्विद्धि भरतर्षभ ॥ ४७
अथाब्रवीदनिमिषस्तानृषीन्सहितांस्तदा ।
अहं प्रजापतिर्ब्रह्मा मत्परं नाधिगम्यते ।
मत्स्यरूपेण यूयं च मयास्मान्मोक्षिता भयात् ॥ ४८
मनुना च प्रजाः सर्वाः सदेवासुरमानवाः ।
स्रष्टव्याः सर्वलोकाश्च यच्चेङ्गं यच्च नेङ्गति ॥ ४९
तपसा चातितीव्रेण प्रतिभास्य भविष्यति ।
मत्प्रसादात्प्रजासर्गे न च मोहं गमिष्यति ॥ ५०

इत्युक्त्वा वचनं मत्स्यः क्षणेनादर्शनं गतः ।
स्रष्टुकामः प्रजाश्चापि मनुर्वैवस्वतः स्वयम् ।
प्रमूढोऽभूत्प्रजासर्गे तपस्तेपे महत्ततः ॥ ५१
तपसा महता युक्तः सोऽथ स्रष्टुं प्रचक्रमे ।
सर्वाः प्रजा मनुः साक्षाद्यथावद्भरतर्षभ ॥ ५२
इत्येतन्मात्स्यकं नाम पुराणं परिकीर्तितम् ।
आख्यानमिदमाख्यातं सर्वपापहरं मया ॥ ५३
य इदं शृणुयान्नित्यं मनोश्चरितमादितः ।
स सुखी सर्वसिद्धार्थः स्वर्गलोकमियान्नरः ॥ ५४

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥

---

(for नौर्). $K_2$ मनुर्मत्स्य- (for नौर्मत्स्यस्य). $K_4$ $B_1$ Dc $D_3$ मत्स्यवचनं (for मत्स्यस्य वचः). — $K_1$ om. (hapl.) $46^d$–$47^a$.

**47** $B_2$ $D_1$ om. 47 (cf. v.l. 44, 46); $K_1$ om. $47^a$ (cf. v.l. 46); $K_4$ om. (hapl.) $47^a$–$48^b$. — $^a$) $K_3$ तेद्य (for तच्च). — $^d$) $T_2$ (before corr.) $G_4$ तद्धि तं (for तद्विद्धि). $K_3$ $D_5$ मनुजर्षभ; $B_4$ मनुजाधिप; $D_3$ मनुजेश्वर; $T_2$ $G_{1.3}$ पुरुषर्षभ.

**48** $K_4$ om. $48^{ab}$ (cf. v.l. 47). — $^a$) $D_3$ तथा° (for अथा°). — $^b$) $Ś_1$ B D (except $D_{2.3.5.6}$) सहितः (for सहितान्). $B_3$ तथा (for तदा). — $^d$) $Ś_1$ $K_{1.2}$ तत्परं; $D_5$ नापरं (for मत्परं). $K_3$ नाव-; $G_1$ नाभि- (for नाधि-). $Ś_1$ $K_{1.2}$ -गच्छति (for -गम्यते). — $^e$) $Ś_1$ $K_{1.2}$ वै (for च). — $^f$) $K_{1.2.4}$ $D_5$ मोचिता (for मोक्षिता).

**49** $^b$) $Ś_1$ $K_{1.2}$ B D (except $D_{1.3}$) -मानुषाः (for -मानवाः). — $^d$) = $28^b$. $B_2$ $G_{2.4}$ $M_2$ नेंगते; $D_5$ $T_1$ नेंगितं (for नेङ्गति).

**50** $^a$) $B_{2-4}$ Dn $D_{4.6}$ [अ]पि (for [अ]ति-). — $^b$) $Ś_1$ $K_1$ प्रतिभात्र; $K_2$ $G_1$ °भास्यं; $K_4$ Dc °भाष्य; $D_1$ °भास्यो; $T_1$ °भावं; $T_2$ $G_{2-4}$ शक्तिश्चास्य. — $^c$) $B_1$ सर्वा (for -सर्गे). — $Ś_1$ $K_1$ $M_2$ om. (hapl.) $50^d$–$51^e$. — $^d$) $D_3$ न त्वं (for न च). $B_2$ $D_3$ $T_1$ गमिष्यसि.

**51** $Ś_1$ $K_1$ $M_2$ om. $51^a$–$51^e$ (cf. v.l. 50). — $^b$) $B_1$ क्रमेण (m क्षणेन as in text). — $^c$) $T_1$ चैव (for चापि). — $^d$) $K_2$ स्वायंभुवः (for वैव°). — $^e$) $K_2$ स भूयो वै; $K_{3.4}$ $D_{1-3.5}$ संमूढोभूत्. — $^f$) S (except $T_1$ $G_4$) ततस् (for तपस्). $Ś_1$ $K_{2.4}$ $B_2$ $D_{1-3.5}$ तदा; $K_{1.3}$ $B_{3.4}$ $Dn_1$ S तपः (for ततः). $B_1$ महातपाः (for महत्ततः).

**52** $^a$) $Ś_1$ K $D_{1-3.5}$ transp. तपसा and महता. — $^b$) $Ś_1$ $K_{1.2.4}$ $D_{1-3.5}$ ततः (for सोऽथ). $T_1$ $M_1$ transp. सोऽथ and स्रष्टुं.

**53** $^a$) $D_5$ एतत्ते; $T_1$ इत्येवं (for इत्येतन्). K Dc $D_{1.5}$ मत्स्यकं (for मा°). — $^b$) $K_3$ पुराण-; $K_4$ $B_3$ $D_1$ $G_1$ $M_1$ पुराणे; $B_1$ प्रधाने (m पुराणं as in text). — $^c$) $T_2$ $G_{2-4}$ transp. आख्यानं and आख्यातं.

**54** $^a$) $D_5$ इदं यः (by transp.); $G_2$ य इमं. — $^b$) $D_5$ आद्दतः; $M_2$ आत्मनः (for आदितः). — $^c$) $T_1$ सुखं (for सुखी). B D (except $D_{1-3.5}$) सर्वपूर्णार्थः ($B_3$ °युः); S पूर्णकामा(M °सर्वा)र्थः. — $^d$) $B_1$ D (except $D_{1-3.5}$) $G_4$ सर्वं° (for स्वर्गं°). $B_1$ व्रजेन् (for इयान्). $G_2$ सर्वान्कामानवाप्नुयात्.

Colophon. — *Major parvan:* $Ś_1$ $K_{1.2}$ $Dn_2$ $T_2$ $G_{2-4}$ आरण्य. — *Sub-parvan:* $G_1$ मार्कंडेयसमस्या. $K_{1.2}$ (both om. sub-parvan name) mention only मत्स्यपुराण (sic); $K_{3.4}$ B Dc $Dn_3$ $D_{1-6}$ $M_1$, likewise, only म($D_3$ मा)त्स्योपाख्यान. — *Adhy. no.* (figures, words or both): Dn 186 ($Dn_3$ 187); $D_1$ 193; S ($M_2$ *inf. lin.*) 189 ($M_2$ orig. 192). — *Śloka no.:* Dn 57; $D_1$ 54.

## 186

**1** $^a$) $T_1$ [आ]ह (for [अ]थ). — $^b$) T G तप° (for यश°).

**2** $^a$) $T_1$ एते; $M_1$ नैते (for नैके). — $^b$) $K_1$ °मते (for °मुने). — $^d$) $Ś_1$ तव दृश्यते; $B_1$ $G_1$ विद्यते तव (by transp.). $B_{2.3}$ D (except $D_{1-3.5}$) आयुष्मान्दृश्यते

# १८६

वैशंपायन उवाच ।
ततः स पुनरेवाथ मार्कण्डेयं यशस्विनम् ।
पप्रच्छ विनयोपेतो धर्मराजो युधिष्ठिरः ॥ १
नैके युगसहस्रान्तास्त्वया दृष्टा महामुने ।
न चापीह समः कश्चिदायुषा तव विद्यते ।
वर्जयित्वा महात्मानं ब्रह्माणं परमेष्ठिनम् ॥ २
अनन्तरिक्षे लोकेऽस्मिन्देवदानववर्जिते ।
त्वमेव प्रलये विप्र ब्रह्माणमुपतिष्ठसि ॥ ३
प्रलये चापि निर्वृत्ते प्रबुद्धे च पितामहे ।
त्वमेव सृज्यमानानि भूतानीह प्रपश्यसि ॥ ४
चतुर्विधानि विप्रर्षे यथावत्परमेष्ठिना ।
वायुभूता दिशः कृत्वा विक्षिप्यापस्ततस्ततः ॥ ५
त्वया लोकगुरुः साक्षात्सर्वलोकपितामहः ।
आराधितो द्विजश्रेष्ठ तत्परेण समाधिना ॥ ६
तस्मात्सर्वान्तको मृत्युर्जरा वा देहनाशिनी ।
न त्वा विशति विप्रर्षे प्रसादात्परमेष्ठिनः ॥ ७
यदा नैव रविर्नाग्निर्न वायुर्न च चन्द्रमाः ।
नैवान्तरिक्षं नैवोर्वी शेषं भवति किंचन ॥ ८
तस्मिन्नेकार्णवे लोके नष्टे स्थावरजङ्गमे ।
नष्टे देवासुरगणे समुत्सन्नमहोरगे ॥ ९
शयानममितात्मानं पद्मे पद्मनिकेतनम् ।
त्वमेकः सर्वभूतेशं ब्रह्माणमुपतिष्ठसि ॥ १०

C. 3. 12818
B. 3. 188. 14
K. 3. 191. 14

($B_3$ Dc °न्विद्यते) तव; $B_4$ $T_2$ $G_{3.4}$ आयुष्मांस्तात ($B_4$ °स्तव) विद्यते. — After 2, B D (except $D_{1-3.5}$) S ins.:

918* न तेऽस्ति सदृशः कश्चिदायुषा ब्रह्मवित्तम ।
[ $D_6$ $T_1$ $G_1$ ब्रह्मसत्तम; M ब्राह्मणोत्तम (for ब्रह्मवित्तम). ]

**3** Ś$_1$ $K_2$ $Dn_3$ $D_5$ om. $3^{ab}$. — $^{a}$) $B_{1.3}$ T G अंतरिक्षेथ ($B_{1.3}$ °क्षे च) लोके°. — $^{c}$) T G नित्यं (for विप्र). — $^{d}$) = $10^{d}$. Ś$_1$ $K_{1.2}$ $B_{2.3}$ D (except $D_{1-3}$) $M_1$ °तिष्ठसे; $M_2$ °तिष्ठति.

**4** $D_4$ om. (? hapl.) from पि of चापि (in $4^{a}$) up to वा of वायुभूता (in $5^{c}$). — $^{a}$) $B_1$ महति (for निर्वृत्ते). $D_{3.5}$ निवृत्ते प्रलये चापि. — $^{b}$) $T_1$ प्रयुद्धे; $G_1$ प्रवृद्धे. — $^{c}$) $K_3$ B D (except $D_{1-3.5}$; $D_4$ om.) M एकः (for एव). $D_5$ सर्वभूतानि (for सृज्य°). — $^{d}$) $K_3$ Dc $G_4$ प्रपश्यति. $D_5$ सृज्यमानानि पश्यसि.

**5** $D_4$ om. up to वा of वायुभूता (cf. v.l. 4). — $^{b}$) Dc प्रसादात्परमेष्ठिनः. — $K_4$ om. (? hapl.) $5^{c}$–$6^{d}$. — After $5^{ab}$, $D_{1.2}$ read 8. — $^{c}$) $T_2$ (before corr.) $G_{1.4}$ °भूतां दिशं. Ś$_1$ $K_{1-3}$ $B_2$ $D_{3.5}$ सर्वां (for कृत्वा). — $^{d}$) $M_2$ निक्षिप्य. $T_1$ [अ]थ (for [आ]पः).

**6** $K_4$ om. 6 (cf. v.l. 5). — After 6, $K_3$ B D (except $D_{1.2}$; $D_{3.5}$ both marg. *sec. m.*) ins.:

919* स्वप्रमाणमथो विप्र त्वया कृतमनेकशः ।
घोरेणाविश्य तपसा वेधसो निर्जितास्त्वया ।
नारायणाङ्कप्रख्यस्त्वं सांपरायेऽतिपठ्यसे ।
भगवानेकशः कृत्वा त्वया विष्णोश्च विश्वकृत् ।
कर्णिकोद्धरणं दिव्यं ब्रह्मणः कामरूपिणः । [5]
रत्नालंकारयोगाभ्यां दृग्भ्यां दृष्टस्त्वया पुरा ।

[ (L. 1) $B_2$ इदं (for अथो). — (L. 2) $B_2$ °सोंतर्हितास् (for °सो निर्जितास्). — (L. 3) $D_3$ °णांश° (for °णाङ्क°). $B_2$ स पठ्यसे; $Dc_2$ $D_3$ [ऽ]तिपठ्यते. — (L. 4) $D_4$ विष्णुश्च. — (L. 5) $K_3$ कार्णिकोद्धारिणां; $D_5$ कटंकोद्धरणं. — (L. 6) $D_{3.5}$ °योग्याभ्यां ]

**7** $^{a}$) Ś$_1$ देहांतको; K $D_{1-3.5}$ सर्वांतगो; B Dc Dn $D_{4.6}$ तवांतको. Ś$_1$ विष्णुर् (for मृत्युर्). — $^{b}$) $K_3$ $B_4$ Dc $D_{2.4}$ देहनाशनी; $B_{1.3}$ S °घातिनी. — $^{c}$) B D (except $D_{3.5}$) त्वां (for त्वा). $D_5$ ब्रह्मर्षे (for विप्रर्षे).

**8** $D_{1.2}$ read 8 after $5^{ab}$. — $^{a}$) $K_2$ $G_1$ यथा (for यदा). S वै न (for नैव). — $^{c}$) $K_1$ न वांतरिक्षं.

**9** $^{a}$) $T_1$ तस्माद् (for तस्मिन्). $D_1$ $T_2$ $G_3$ $M_1$ घोरे; $D_5$ काले (for लोके). — $^{b}$) Ś$_1$ $K_{1.2}$ नष्ट-. — $G_1$ om. $9^{cd}$. — $^{c}$) Ś$_1$ $K_{1.3}$ $D_3$ $G_4$ $M_1$ नष्ट-. — $^{d}$) Ś$_1$ $G_{2.4}$ समुत्पन्न-; $B_1$ समुत्सन्ने.

**10** $^{a}$) Ś$_1$ संशिता°; $K_{1.2}$ संश्रिता°; $D_5$ अपि चा° (for अमिता°). — $^{b}$) $B_{1.2}$ Dn $D_4$ पद्मोत्पल- (for पद्मे पद्म-). $B_4$ $G_1$ $M_2$ -निभेक्षणं (for -निकेतनम्). — $^{c}$) $D_1$ एव (for एकः). — $^{d}$) = $3^{d}$. Ś$_1$ °तिष्ठति; Dc $D_5$ °तिष्ठसे.

**11** $^{a}$) Ś$_1$ $K_{1.4}$ $D_{1.2}$ एतां; $K_2$ एवं; $D_4$ यत्तत् (for

C. 3. 12819
B. 3. 188. 15
K. 3. 191. 15

एतत्प्रत्यक्षतः सर्वं पूर्ववृत्तं द्विजोत्तम ।
तस्मादिच्छामहे श्रोतुं सर्वहेत्वात्मिकां कथाम् ॥ ११
अनुभूतं हि बहुशस्त्वयैकेन द्विजोत्तम ।
न तेऽस्त्यविदितं किंचित्सर्वलोकेषु नित्यदा ॥ १२

मार्कण्डेय उवाच ।

हन्त ते कथयिष्यामि नमस्कृत्वा स्वयंभुवे ।
पुरुषाय पुराणाय शाश्वतायाव्ययाय च ॥ १३
य एष पृथुदीर्घाक्षः पीतवासा जनार्दनः ।
एष कर्ता विकर्ता च सर्वभावनभूतकृत् ॥ १४
अचिन्त्यं महदाश्चर्यं पवित्रमपि चोत्तमम् ।
अनादिनिधनं भूतं विश्वमक्षयमव्ययम् ॥ १५
एष कर्ता न क्रियते कारणं चापि पौरुषे ।
यो ह्येनं पुरुषं वेत्ति देवा अपि न तं विदुः ॥ १६
सर्वमाश्चर्यमेवैतन्निर्वृत्तं राजसत्तम ।
आदितो मनुजव्याघ्र कृत्स्नस्य जगतः क्षये ॥ १७
चत्वार्याहुः सहस्राणि वर्षाणां तत्कृतं युगम् ।
तस्य तावच्छती संध्या संध्यांशश्च ततः परम् ॥ १८
त्रीणि वर्षसहस्राणि त्रेतायुगमिहोच्यते ।
तस्य तावच्छती संध्या संध्यांशश्च ततः परम् ॥ १९
तथा वर्षसहस्रे द्वे द्वापरं परिमाणतः ।
तस्यापि द्विशती संध्या संध्यांशश्च ततः परम् ॥ २०
सहस्रमेकं वर्षाणां ततः कलियुगं स्मृतम् ।

---

एतत्). $D_3$ प्रत्यक्षतां; $T_2$ G प्रत्यक्षितं. Ś$_1$ K $D_{1-3}$ सर्वां ($K_3$ पूर्वं); $M_1$ दृष्टं (for सर्वं). — $^{b}$) Ś$_1$ $K_{1.2.4}$ $D_{1.3}$ पूर्ववृत्तां; $B_{2.4}$ $D_6$ पूर्वं वृत्तं. — Ś$_1$ $K_1$ om. (hapl.) $11^{c}$–$12^{b}$. — $^{c}$) $K_3$ B D (except $D_{1-3}$) $T_2$ $G_3$ °म्यहं (for °महे). — $^{d}$) S (except $T_1$ $M_1$) सर्वां (for सर्व-). $K_{2.3}$ $D_5$ $T_2$ $G_{2.3}$ -हेत्वात्मिकीं ($K_2$ एवात्मि°; $K_3$ -हेत्वात्म°). $G_4$ क्रियां (for कथाम्).

**12** Ś$_1$ $K_1$ om. $12^{ab}$ (cf. v.l. 11). — $^{a}$) $B_3$ अंतर्भूतं (for अनुभूतं). $D_2$ सु- (for हि). — $^{b}$) $K_{2-4}$ $D_{1-3.5}$ S त्वयैतद् ($D_1$ °व) द्विजसत्तम. — $12^{c}$ = 1. 57. $12^{c}$: 5. 16. $7^{c}$.

**13** $^{a}$) $K_{3.4}$ $B_{2-4}$ D वर्त($K_4$ °र्ण)यिष्यामि (Dc संप्रवक्ष्यामि). — $^{b}$) Ś$_1$ $K_{1.2}$ $D_{1-3.5}$ $G_{2.4}$ नमस्कृत्य. — After $13^{ab}$, $K_{3.4}$ B D ins.:

920* अव्यक्ताय सुसूक्ष्माय निर्गुणाय गुणात्मने ।

[$B_1$ अध्यक्षाय (for अव्यक्ताय). $D_3$ महा° (for गुणा°).]

**14** $^{a}$) $B_3$m $Dc_1$ $Dn_{1}$. $n_3$ $D_3$ $G_{2.4}$ $M_2$ स एष; $Dn_2$ $D_{4.6}$ स एव; $T_1$ य एव (for य एष). $K_3$ B D (except $D_{1-3.5}$) पुरुषव्याघ्र (for पृथु°). — $^{d}$) $K_4$ $D_{3.5}$ सर्वभावेन; $B_4$ S (except $G_2$ $M_1$) भूतभावन-. $B_{1-3}$ Dc Dn $D_{4.6}$ भूतात्मा भूतकृत्प्रभुः.

**15** $^{b}$) $B_4$ इह; $Dc_1$ Dn $D_4$ इति (for अपि). B D (except $D_{1-3.5}$) चोच्यते ($B_4$ विद्यते) (for चोत्तमम्). — $^{c}$) $K_1$ भूत्वा (for भूतं). — $^{d}$) $K_4$ $B_1$ Dn $D_{2.4}$ $M_2$ transp. अक्षयम् and अव्ययम्. $T_1$ -रक्षकम्; $G_4$ अक्षरम् (for अक्षयम्).

**16** $^{b}$) $G_4$ कारणादपि; $M_2$ शरणं चापि (for कारणं चापि). $K_3$ $D_5$ पौरुषम्. — $^{c}$) Ś$_1$ K $D_{2.3.5}$ य एष; B Dn यद्येष ($B_1$ यत्क्षेत्रं); Dc $D_{4.6}$ यं ह्येष; $D_1$ यदेवं; $T_1$ यो ह्येतं; $T_2$ $G_{2-4}$ को ह्येनं; $M_1$ य एनं (for यो ह्येनं). N पुरुषो (for पुरुषं). B D (except $D_{1-3.5}$) वेद (for वेत्ति). — $^{d}$) $B_{2-4}$ Dn $D_{2.4.6}$ $T_1$ वेदा (for देवा). Ś$_1$ K $B_1$ Dc $D_{1-3.5}$ तद् (for तं).

**17** $^{a}$) $T_1$ °भूतं हि; $T_2$ $G_{2-4}$ °मेतस्मिन्; $G_1$ $M_2$ °मेतद्धि; $M_1$ °मेतस्मान् (for °मेवैतन्). — $^{b}$) Ś$_1$ K $D_{1-3}$ S (except $G_1$) निवृत्तं; $B_{2.4}$ $Dn_1$ निर्वृतं.

**18** $^{b}$) $K_{1.2}$ वर्षाणि (for °णां). — $18^{cd}$ = $19^{cd}$; (var.) $20^{cd}$, $21^{cd}$. — $^{c}$) $K_{1.2}$ अस्य; $B_4$ कृते; $T_2$ (before corr.) $G_{3.4}$ तच्च (for तस्य). $B_4$ चतुःशती; $G_4$ तावद्वती (for तावच्छती). Ś$_1$ $K_{1.2}$ संख्या (for संध्या). — $^{d}$) Ś$_1$ $K_{1-3}$ $G_1$ तथापरः; $K_4$ $B_{2.4}$ Dn $D_{1-6}$ $T_1$ तथाविधः; $G_4$ ततः परः.

**19** $G_1$ om. (hapl.) 19. — $^{b}$) $K_3$ $D_{1.2.5}$ अथो° (for इहो°). S ($G_1$ om.) त्रेता स्यात्परिमाणतः; cf. $20^{b}$. — For $19^{cd}$, cf. v.l. $18^{cd}$. — $^{c}$) $T_1$ तस्यास्; $G_{2.4}$ तच्च (for तस्य). $K_{1.2}$ संख्या (for संध्या). — $^{d}$) Ś$_1$ ततः परः; $K_{1-3}$ $B_4$ तथापरः; $B_2$ Dc $D_{1.2.5}$ तथाविधः.

**20** $T_1$ om. (hapl.) $20^{a}$–$21^{d}$. — $^{a}$) $B_2$ यस्य; $B_4$ ततो; $T_2$ G अथ (for तथा). — $B_2$ om. $20^{cd}$. — $^{c}$) $T_2$ $G_{2-4}$ तत्रा° (for तस्या°). $D_{1.2}$ द्वे (for द्वि-). $K_{1.2}$ संख्या (for संध्या). — $^{d}$) Ś$_1$ $G_4$ ततः परः; $K_{1.2}$ $B_4$ $G_1$ तथापरः; $Dc_2$ $D_{1.2.4.6}$ तथाविधः; $D_3$ ततः परे.

**21** $T_1$ om. $21^{abcd}$ (cf. v.l. 20). — $^{a}$) $D_5$ वर्षाणि (for °णां). — $^{b}$) $K_{1.2}$ $B_2$ Dc $Dn_{1}$. $n_3$ $D_6$ S ($T_1$ om.) तथा (for ततः). — $^{c}$) $G_1$ $M_1$ °शती (for °शतं). Ś$_1$

तस्य वर्षशतं संध्या संध्यांशश्च ततः परम् ।
संध्यासंध्यांशयोस्तुल्यं प्रमाणमुपधारय ॥ २१
क्षीणे कलियुगे चैव प्रवर्तति कृतं युगम् ।
एषा द्वादशसाहस्री युगाख्या परिकीर्तिता ॥ २२
एतत्सहस्रपर्यन्तमहो ब्राह्ममुदाहृतम् ।
विश्वं हि ब्रह्मभवने सर्वशः परिवर्तते ।
लोकानां मनुजव्याघ्र प्रलयं तं विदुर्बुधाः ॥ २३
अल्पावशिष्टे तु तदा युगान्ते भरतर्षभ ।
सहस्रान्ते नराः सर्वे प्रायशोऽनृतवादिनः ॥ २४
यज्ञप्रतिनिधिः पार्थ दानप्रतिनिधिस्तथा ।
व्रतप्रतिनिधिश्चैव तस्मिन्काले प्रवर्तते ॥ २५
ब्राह्मणाः शूद्रकर्माणस्तथा शूद्रा धनार्जकाः ।
क्षत्रधर्मेण वाप्यत्र वर्तयन्ति गते युगे ॥ २६
निवृत्तयज्ञस्वाध्यायाः पिण्डोदकविवर्जिताः ।
ब्राह्मणाः सर्वभक्षाश्च भविष्यन्ति कलौ युगे ॥ २७
अजपा ब्राह्मणास्तात शूद्रा जपपरायणाः ।
विपरीते तदा लोके पूर्वरूपं क्षयस्य तत् ॥ २८
बहवो म्लेच्छराजानः पृथिव्यां मनुजाधिप ।
मिथ्यानुशासिनः पापा मृषावादपरायणाः ॥ २९
आन्ध्राः शकाः पुलिन्दाश्च यवनाश्च नराधिपाः ।
काम्बोजा और्णिकाः शूद्रास्तथाभीरा नरोत्तम ॥ ३०
न तदा ब्राह्मणः कश्चित्स्वधर्ममुपजीवति ।

C. 3. 12840
B. 3. 188. 36
K. 3. 191. 36

K1–3 B D M2 संधिः (B1 विद्धि) (for संध्या). — d) Ś1 G1 तथापरः; K1. 2 तथा परं; K4 ततः परः. — e) Ś1 K B2. 3 D (except D1) संधि- (for संध्या-). — f) T2 G अव°; M1 चोप° (for उप°).

**22** b) K1–3 D5 प्रवर्तेत; K4 D2. 3 M1 प्रावर्तत; Dc प्रवर्तति; D1 प्रवर्तत. K2 कृतं युगे; B2 पुनः कृतं; B4 कृतं पुनः. Ś1 कृतं प्रवर्तते युगं. — c) D1. 2 G1. 2. 4 एष; T1 एवं (for एषा). — d) G1 युगसंख्या प्रकीर्तिता.

**23** b) Ś1 अहर्ब्रह्मम्; K1 महद्ब्राह्मम्; K2 D5 अहर्ब्राह्मम्; K3 अहः ब्राह्मम्; K4 D1–3 अहर्ब्राह्मयम्; T2 G3 अथो ब्राह्मम्. — c) K4 °भुवने; D1 °दिवसे; T2 G °सदने (for °भवने). — d) B1. 3 D (except D1–3. 5) M1 सर्वतः; B2 सर्वत्र.

**24** a) Ś1 K1–3 अल्पावशिष्टं; B1 पुण्यावशिष्टे; D5 अल्पेव°. K4 T2 G2–4 च (for तु). Ś1 K1. 2 D1–3. 5 T1 M1 ततो (for तदा).

**25** a) D1 G1. 2. 4 यज्ञः (for यज्ञ-). B4 -प्रतिविधिः. B1 दानं; T2 G3 तात (for पार्थ). — b) Ś1 धर्म- (for दान-). B1 T2 G1–3 तदा (for तथा). — c) B1 तत्र; B3 ज्ञान- (for व्रत-).

**26** b) K4 T G धनार्जनाः. D3 (marg. *sec. m.*) तथा शूद्रान्नभोजिनः. — c) B4 क्षात्र° (for क्षत्र°). Ś1 K2 B4 Dc2 D1. 5 G4 M चा° (for वा°). — d) T1 G1 M वर्तते वै (for वर्तयन्ति). K1. 2 कृते गते; K4 Dc D1–3 युगे युगे; B1 (m as in text). 2 कृते युगे; T1 G1 M कलौ युगे; T2 G2–4 युगक्षये (for गते युगे).

**27** T1 om. 27–28; M2 om. (hapl.) 27. — b) K3 B4 दंडोदक°; K4 D3. 5 स्थालीपाक°; B2. 3 Dc Dn D4. 6 दंडाजिन°. — c) A few MSS. °भक्ष्या°. — d) Ś1 K D1–3. 5 M1 भवंतीह; B4 भवंति हि (for भविष्यन्ति). Ś1 K1. 2 B4 D2. 3 (marg. *sec. m.* as in text). 5 गते युगे; K4 D1 युगे युगे; G1 (*sup. lin.* as in text) युगक्षये (for कलौ युगे).

**28** T1 om. 28 (cf. v.l. 27). — a) Ś1 K D1–3. 5 चापि; G1 चैव; M2 तत्र (for तात). — b) Ś1 K3 D1. 2 M जप्य°; K4 D5 जाप्य°; G2. 4 (*inf. lin.* जप° as in text) जीव°. G1 नित्यं शूद्रप°. — c) B4 विपरीतं; M °रीतस्. T2 G2–4 तथा (for तदा). Ś1 K1. 2 काले; G1 रूपे; M लोकः (for लोके). — d) K4 पूर्वं यद्यस्य तस्य तत्; G1 °रूपे क्षये नृप; G2 °रूपं गमिष्यति.

**29** b) Ś1 K1. 2 भरतर्षभ; K3. 4 D1–3. 5 मनुजर्षभ. — c) B1–3 D (except D1–3) मृषा° (for मिथ्या°). — d) Ś1 मिथ्या-; D5 नृपा (for मृषा-).

**30** a) K1. 2. 4 B Dc2 D2. 3 M अंध्राः. D5 सुह्माः (for शकाः). — b) Ś1 K D1–3. 5 T1 G1. 2 °धिप (for °धिपाः). — G4 om. 30cd. — c) Ś1 K1. 2 कांभोजाः. B Dc Dn D4. 6 T2 (after corr.) G3 बाह्लिकाः; D5 उंध्रकाः; T1 G1 कुणिकाः; T2 (before corr.) G2 सिणिकाः; M1 औदकाः; M2 दौर्णिकाः (for और्णिकाः). Ś1 K1 शुद्धास्; B D (except D1–3. 5) T2 (after corr.) G3 शूरास् (for शूद्रास्). — d) Ś1 K1. 2. 4 B1 D5 चीना; B2 भुवि; T1 वीरा; T2 (before corr.) G2 हीना (for [आ]भीरा). B1 T2 (before corr.) G2 नरोत्तमाः; D5 नराधिप. — After 30, B3 ins.:

921* युगान्ते मनुजव्याघ्र तथाकाराश्च भारत ।

**31** a) G4 दाता (for तदा). — b) K3 सुधर्मम्; D1. 2 स्वधर्मान् (for स्वधर्मम्). Ś1 K1. 2. 4 D1. 3. 5 अनु° (for

C. 3. 12841
B. 3. 188. 37
K. 3. 191. 36

क्षत्रिया अपि वैश्याश्च विकर्मस्था नराधिप ॥ ३१
अल्पायुषः स्वल्पबला अल्पतेजःपराक्रमाः ।
अल्पदेहाल्पसाराश्च तथा सत्याल्पभाषिणः ॥ ३२
बहुशून्या जनपदा मृगव्यालावृता दिशः ।
युगान्ते समनुप्राप्ते वृथा च ब्रह्मचारिणः ।
भोवादिनस्तथा शूद्रा ब्राह्मणाश्चार्यवादिनः ॥ ३३
युगान्ते मनुजव्याघ्र भवन्ति बहुजन्तवः ।
न तथा घ्राणयुक्ताश्च सर्वगन्धा विशां पते ।
रसाश्च मनुजव्याघ्र न तथा स्वादुयोगिनः ॥ ३४
बहुप्रजा ह्रस्वदेहाः शीलाचारविवर्जिताः ।
मुखेभगाः स्त्रियो राजन्भविष्यन्ति युगक्षये ॥ ३५
अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः ।
केशशूलाः स्त्रियो राजन्भविष्यन्ति युगक्षये ॥ ३६
अल्पक्षीरास्तथा गावो भविष्यन्ति जनाधिप ।
अल्पपुष्पफलाश्चापि पादपा बहुवायसाः ॥ ३७
ब्रह्मवध्यावलिप्तानां तथा मिथ्याभिशंसिनाम् ।
नृपाणां पृथिवीपाल प्रतिगृह्णन्ति वै द्विजाः ॥ ३८
लोभमोहपरीताश्च मिथ्याधर्मध्वजावृताः ।
भिक्षार्थं पृथिवीपाल चङ्क्रूयन्ते द्विजैर्दिशः ॥ ३९
करभारभयात्पुंसो गृहस्थाः परिमोषकाः ।

---

उप°). — c) G1. 4 क्षत्रियाणि (for क्षत्रियाः). K1. 4 B Dc Dn D1. 2. 4–6 चापि; K3 D3 T G2. 3 M ह्यपि (for अपि). T G2–4 शूद्रा°; G1 शूरा° (for वैश्या°).

**32** a) K3 D2. 3 G2. 4 M स्वल्प° (for स्वल्प°). — b) Ś1 K3 स्वल्पतेजाः प°; K1. 2. 4 D1–3. 5 स्वल्पतेजः प°; B1–3 Dc Dn D4. 6 स्व(Dc2 अ)ल्पवीर्यपराक्रमाः (B3 °यणाः). — c) K4 B Dn D4. 6 अल्पसाराल्पदेहाश्च; Dc °साराश्च देहाश्च. — d) Dc अल्पसत्वाल्प°; G1 अल्पसत्याल्प°.

**33** K2 om. 33abcd. — a) G1. 2 M1 रत्न- (for बहु-). B4 D4 -मूल्या (for -शून्या). — b) G2. 4 बहु- (for मृग-). Ś1 K (K3 om.) D2. 3 °र्दिता; D5 °न्विता (for °वृता). — T1 om. 33cdef. — c) S (T1 om.) मनुजव्याघ्र (for सम°). — d) = 41d. Dn D4. 6 ब्रह्मवादिनः. — f) K1. 2 चौर्य°; D2 स्वार्थ°; D3 स्वर्थ°; T2 G2–4 नार्य° (for चार्य°).

**34** Ś1 K1 D1 om. (hapl.) 34bcde. — c) T2 (after corr.) तदा (for तथा). K4 ब्राह्मणा युक्ताः (for घ्राणयुक्ताश्च). D3 तु (for च). — d) D2 सर्वे; G1 बहु- (for सर्व-). B2 वनस्पतौ (for विशां पते). G4 *repeats* here 32d (for 34d). — f) Ś1 K1. 2 साधु- (for स्वादु-). S बीजं च परिहीयते.

**35** a) K4 तथा लोकाः; D3 M1 स्वल्पदेहाः (for ह्रस्वदेहाः). — c) K2. 3 भगमुख्याः; D1. 2 सुखे रताः (for मुखेभगाः). Ś1 K1 भोगमोक्षास्रयो राजन्; T2 G3 मुखक्षीरास्तथा गावो. — d) Ś1 K1. 2 भवंतीह (for भवि°). T2 G3 जनाधिप (for युग°).

**36** = (var.) 3. 188. 51. — T2 G3 om. (hapl.) 36a–37b. — a) Ś1 K1 °शीला (for °शूला). — b) Ś1 K1. 2 शि(Ś1 श)वशीला°. — c) G1. 2. 4 सर्वा; M2 चैव (for राजन्). Ś1 K Dc2 D1–3. 5 T1 प्रमदाः (T1 योषितः) केशशूलाश्च (Ś1 °शीलाश्च; K1. 4 D5 °शूलिन्यो; K2 °शीलिन्यो). — d) G2. 4 कलौ युगे (for युग°). Ś1 K3 भवंति युगसंक्षये. — After 36, G1 ins. (the gloss):

922* अट्टमन्नमिति प्राहुः शूलं विक्रयमुच्यते ।
वेदः शिवमिति प्रोक्तं ब्राह्मणाश्च चतुष्पथाः ।
केशो भग इति प्रोक्तस्तं विक्रीयैव भुञ्जते ।

These lines occur (with v.l.) in Nīlakaṇṭha's commentary!

**37** G1 om. 37–38; T2 G3 om. 37ab (cf. v.l. 36). — b) Ś1 K1. 2 भवंतीह (for भवि°). Ś1 K1. 2 D5 T1 नराधिप; B4 युगक्षये (for जना°). — c) Ś1 K D1–3. 5 चैव (for चापि). — d) S (G1 om.) बहुशाखिनः.

**38** G1 om. 38 (cf. v.l. 37). — a) K3. 4 D3. 5 °हत्याव°; B Dc Dn D1. 4. 6 °वध्यानु° (B1 °वध्याभि°); D2 °हत्याभि°; T1 °वध्योव°; T2 G2–4 °विद्योप°; M2 °हत्यानु° (for °वध्याव°). — b) K1. 3 D5 °भिशासिनां; S (G1 om.) °नुशा(T2 G3 °नुशं)सिनां. — c) M2 नृपशार्दूल (for पृथि°). — d) K3. 4 D2. 3 M च; T1 ते (for वै).

**39** b) T1 °ध्वजव्रताः. — c) K2 भक्ष्यार्थं; D3 भिक्षार्थे. K4 पृथिवीं सर्वां; D4 पृथिवीपालं. — d) B1 चरिष्यंति (m चङ्क्रूयन्ते as in text). K B1 (m as in text) D1–3 T2 (before corr.) G M द्विजा दिशः; D5 दिशो दश; T1 द्विजातयः.

**40** a) G1. 2 °हार- (for °भार-). T2 (before corr.) G2. 4 -भयाः (for -भयात्). K3 D5 पुंभिः; B Dc Dn D1. 4. 6 T2 (after corr.) G3 भीता; D3 पुंसां (for पुंसो). — b) K1–3 D3 गृहस्थ-; D5 M गार्हस्थ्य-. Ś1 K1 परिपोषकाः; K2 B3 °मोचकाः; K3 °मोषकैः; B1 °शोध(m °मोषि)-काः; D3 °मोहकैः; D5 °पोषकैः; S °मोक्षकाः. — c) T2

मुनिच्छद्माकृतिच्छन्ना वाणिज्यमुपजीवते ॥ ४०
मिथ्या च नखरोमाणि धारयन्ति नरास्तदा ।
अर्थलोभान्नरव्याघ्र वृथा च ब्रह्मचारिणः ॥ ४१
आश्रमेषु वृथाचाराः पानपा गुरुतल्पगाः ।
ऐहलौकिकमीहन्ते मांसशोणितवर्धनम् ॥ ४२
बहुपाषण्डसंकीर्णाः परान्नगुणवादिनः ।
आश्रमा मनुजव्याघ्र न भवन्ति युगक्षये ॥ ४३
यथर्तुवर्षी भगवान्न तथा पाकशासनः ।
न तदा सर्वबीजानि सम्यग्रोहन्ति भारत ।
अधर्मफलमत्यर्थं तदा भवति चानघ ॥ ४४
तथा च पृथिवीपाल यो भवेद्धर्मसंयुतः ।
अल्पायुः स हि मन्तव्यो न हि धर्मोऽस्ति कश्चन ॥ ४५
भूयिष्ठं कूटमानैश्च पण्यं विक्रीणते जनाः ।
वणिजश्च नरव्याघ्र बहुमाया भवन्त्युत ॥ ४६
धर्मिष्ठाः परिहीयन्ते पापीयान्वर्धते जनः ।
धर्मस्य बलहानिः स्यादधर्मश्च बली तथा ॥ ४७
अल्पायुषो दरिद्राश्च धर्मिष्ठा मानवास्तदा ।
दीर्घायुषः समृद्धाश्च विधर्माणो युगक्षये ॥ ४८
अधर्मिष्ठैरुपायैश्च प्रजा व्यवहरन्त्युत ।
संचयेनापि चाल्पेन भवन्त्याढ्या मदान्विताः ॥ ४९

C. 3. 12861
B. 3. 188. 57
K. 3. 191. 57

---

G2–4 मुनिच्छद्मानुसंछन्ना. — d) K1. 3 D5 °जीव्यते; K4 (m as in text) D2. 3 °सेव्यते; B Dc Dn D1. 4. 6 °जीविनः; T1 G1 °युज्यते; T2 G2–4 °भुंजते; M1 °सेवते.

**41** b) N तदा (Ś1 K1. 2 Dc2 D3. 5 तथा; D6 सदा) द्विजाः; T1 M1 नरास्तथा; G2. 4 नराः सदा. — c) Ś1 अल्पलोभान्; K3 अर्थलाभान्; B1. 2m S अन्नलोभान्. — d) = 33d. Ś1 D5 मिथ्या च; K1. 2 B2. 3 Dc Dn D1. 4. 6 तथा च; B4 चरंति (for वृथा च). Ś1 K1. 2 ब्रह्मवादिनः.

**42** a) K2 व्रता°; T1 दुरा° (for वृथा°). — b) T1 मनसा; T2 G2–4 मानवा; M2 पानगा (for पानपा). — c) K1 B2. 4 D (except D1–3) T2 (after corr.) G3 इह° (for ऐह°). B1 ईहंति; D1. 2 -कर्मांते; T1 ईयंते (for ईहन्ते). — d) B2 °वर्धनाः. — After 42, D1. 2 S (except G2 M2) ins.:

923* पारलौकिककार्येषु प्रमत्ता भृशनास्तिकाः ।

[D1. 2 प्रसुप्ता (for प्रमत्ता). G4 भृशमास्थिताः.]

**43** a) Ś1 K1. 2 °पाषांड°; G2 °पाषाण°. — b) K1. 2 परानुगुण°; T2 G2–4 परान्ना (G2 °न्न-) बहु°. — d) Ś1 K1. 2 प्रभवंति; K4 B Dc Dn D1. 2. 4. 6 T2 G3 भविष्यंति (for न भवन्ति). K3 D3. 5 T1 G1 M भवंति युगसंक्षये.

**44** a) T1 अकालवर्षी. — b) Ś1 K1–3 D1. 2 T2 G1–3 M तदा (for तथा). — c) K4 T1 M2 तथा; B Dc1 Dn D1. 2. 4. 6 चापि (for तदा). — d) K4 समारोहंति; M संप्ररो°. — After 44cd, N (except Ś1 K1. 2) ins.:

924* हिंसाभिरामश्च जनस्तथा संपद्यतेऽशुचिः ।

[K3 B4 D1–3. 5 तदा (D5 मुदा) भवति भारत (for the posterior half).]

— On the other hand S ins. after 14:

925* फलं धर्मस्य राजेन्द्र सर्वत्र परिहीयते ।

[T1 सफलं धर्मराजेंद्र (for the prior half). M2 सर्वतः (for सर्वत्र).]

— e) K2 इत्यर्थं; D5 G1. 2 अत्यंतं (for अत्यर्थं). — f) K4 T2 G3. 4 M1 तथा (for तदा). D1. 2 भारत (for चानघ).

**45** a) B1. 3. 4 D (except D3. 5) T G3. 4 M2 तदा (for तथा). — b) Ś1 K1. 2 °संहितः (for °संयुतः). — c) K2 G1 ह; D5 च; M2 तु (for हि).

**46** a) T1 गूढ° (for कूट°). — D2 reads 46b–47b after 50a. — b) K1–3 G4 M1 पुण्यं; D3 पण्यान्. K2 Dc T2 G3 विक्रीयते; B2 विक्रीडते. Dc Dn T1 G1 M1 जनः; D1 द्विजाः. — Ś1 K1 om. (hapl.) 46c–47b. — d) T1 छद्म° (for बहु°). K3 [अ]तः; G1 च (for [उ]त).

**47** Ś1 K1 om. 47ab (cf. v.l. 46). For D2, cf. v.l. 46. — a) T1 विशिष्टाः (for धर्मिष्ठाः). — b) D2 पापिष्ठो (for पापीयान्). — c) Ś1 K2. 3 G1 M2 धर्मश्च (for °स्य). K1–3 B1 Dc D3. 5 S (except G1 M1) च (for स्याद्). — d) Ś1 अधर्मी च; K1. 2 [अ]प्यधर्मी च; K3 B1 D3. 5 T2 G3 M2 [अ]प्यधर्मश्च; Dc G2. 4 [अ]प्यधर्मस्य; T1 ह्यधर्मस्य (for अधर्मश्च). B2 D1. 2 बली तदा; Dc बलीयसा; T G2–4 बलायतिः; G1 M बलायते. B4 अधर्मः प्रबलस्तदा.

**48** B4 transp. 48ab and 48cd. — b) K1. 2 B3 D (except D1–3. 5) T1 तथा (for तदा). — D4 om. 48cd. — d) B1 अधर्माणां (for विध°). D5 दिनक्षये. — After 48, B3 Dn D4. 6 ins. (cf. 51c, 48d):

926* नगराणां विहारेषु विधर्माणो युगक्षये ।

**49** B2. 4 om. (hapl.) 49a–51b. — a) Dc1 अपायै° (for उपायै°). D2 तु (for च). — b) Dc व्यवहरति; T1 चान्वचरंति (for व्यवहरन्ति). Ś1 M2 च (for [उ]त).

C. 3. 12862
B. 3. 188. 57
K. 3. 191. 57

धनं विश्वासतो न्यस्तं मिथो भूयिष्ठशो नराः ।
हर्तुं व्यवसिता राजन्मायाचारसमन्विताः ॥ ५०
पुरुषादानि सत्त्वानि पक्षिणोऽथ मृगास्तथा ।
नगराणां विहारेषु चैत्येष्वपि च शेरते ॥ ५१
सप्तवर्षाष्टवर्षाश्च स्त्रियो गर्भधरा नृप ।
दशद्वादशवर्षाणां पुंसां पुत्रः प्रजायते ॥ ५२
भवन्ति षोडशे वर्षे नराः पलितिनस्तथा ।
आयुःक्षयो मनुष्याणां क्षिप्रमेव प्रपद्यते ॥ ५३
क्षीणे युगे महाराज तरुणा वृद्धशीलिनः ।
तरुणानां च यच्छीलं तद्वृद्धेषु प्रजायते ॥ ५४
विपरीतास्तदा नार्यो वञ्चयित्वा रहः पतीन् ।
व्युच्चरन्त्यपि दुःशीला दासैः पशुभिरेव च ॥ ५५
तस्मिन्युगसहस्रान्ते संप्राप्ते चायुषः क्षये ।
अनावृष्टिर्महाराज जायते बहुवार्षिकी ॥ ५६
ततस्तान्यल्पसाराणि सत्त्वानि क्षुधितानि च ।
प्रलयं यान्ति भूयिष्ठं पृथिव्यां पृथिवीपते ॥ ५७
ततो दिनकरैर्दीप्तैः सप्तभिर्मनुजाधिप ।
पीयते सलिलं सर्वं समुद्रेषु सरित्सु च ॥ ५८
यच्च काष्ठं तृणं चापि शुष्कं चार्द्रं च भारत ।
सर्वं तद्भस्मसाद्भूतं दृश्यते भरतर्षभ ॥ ५९

---

— D5 om. 49$^{c}$–50$^{b}$. — $^{c}$) K1. 4 B1. 3 D (except D3; D5 om.) तथा; G1. 4 [अ]सि च (for [अ]पि च). — $^{d}$) K1. 4 B1. 3 Dn D1. 2. 4. 6 आढ्य- (for आढ्या).

**50** B2. 4 om. 50; D5 om. 50$^{ab}$ (cf. v.l. 49). — After 50$^{a}$, D2 reads 46$^{b}$–47$^{b}$. — $^{b}$) Ś1 K1. 2 इतो; B1 S मिथ्या (for मिथो). D1 M2 °शोभनाः (for °शो नराः). — $^{c}$) Dc1 D3 हंतुं (for हर्तुं). Ś1 K1–3 D1–3. 5 व्यवस्यंति तदा (for व्यवसिता राजन्). — $^{d}$) Ś1 मायामद-; K2. 4 B3 D (except D2. 3. 5) T2 G2–4 पापाचार- (for मायाचार-). D5 समेधिताः (for -समन्विताः). — After 50, B3 D (except D1–3. 5) ins.:

927* नैतदस्तीति मनुजा वर्तन्ति निरपत्रपाः ।

[B3 Dn1 वर्तते (for वर्तन्ति). B3 Dc निरुपद्रवाः (for निरप°).]

**51** B2. 4 om. 51$^{ab}$ (cf. v.l. 49). — $^{b}$) G2 [ऽ]थ ग्रहास्; G4 [ऽ]धिग्रहास् (for ऽथ मृगास्). Ś1 तदा (for तथा). — D2 om. (? hapl.) from विहारेषु (in 51$^{c}$) up to °वर्षाणां (in 52$^{c}$). — $^{d}$) K3 न चैत्येष्वपि शेरते.

**52** D2 om. 52$^{abc}$ (cf. v.l. 51). — $^{b}$) B4 °धृता (for °धरा). — $^{d}$) T2 G2–4 प्रसू° (for प्रजा°). Ś1 K B4 D1–3. 5 पुंसां पुत्रा भवंति च.

**53** $^{b}$) T2 G2–4 पुत्राश्च (for नराः). S च पलिता° (for पलितिन°). B3 नराः पलितयौवनाः. — $^{c}$) Ś1 K1. 2 °क्षयं; M1 °क्षये. — $^{d}$) B2 G1 प्रजायते; Dc प्रवर्तते (for प्रप°).

**54** Ś1 K1 om. (hapl.) 54. — $^{a}$) K4 B1–3 D (except D2. 3. 5) क्षीणायुषो (for क्षीणे युगे). — $^{b}$) G4 वृद्धशालिनः. — $^{c}$) T1 तच्छीलं; G1 यद्वृत्तं. — $^{d}$) K2. 3 B1 Dc D2. 3 T1 G1 M [उ]प-; T2 G2–4 [अ]पि (for प्र-).

**55** $^{a}$) Ś1 K2. 3 Dc D2. 3. 5 G1. 2. 4 M2 तथा; M1 ततो (for तदा). — Ś1 K1. 2. 4 D1. 2. 5 om. (hapl.) 55$^{bcd}$ and the prior half of line 1 of 928*; D3 reads the same in marg. *sec. m.* — $^{b}$) K4 B D (D1. 2. 5 om.) [अ]हंतः (for रहः). G1 परान् (for पतीन्). — $^{c}$) D3 दुर्वाचश्च; T1 विचरंति (for व्युच्चरन्ति). B1 S (except M1) च (for [अ]पि). T1 राजेंद्र (for दुःशीला). — After 55, N (Ś1 K1. 2. 4 D1. 2. 5 om. the prior half of line 1; D5 reading the same in marg. *sec. m.*) ins.:

928* वीरपत्न्यस्तथा नार्यः संश्रयन्ति नरान्नृप ।
भर्तारमपि जीवन्तमन्यान्व्यभिचरन्त्युत ।

[(L. 1) K3 D3 तदा (for तथा). Ś1 K2. 3 D1. 2 संगृह्णंति; K1 संगृह्णंति; Dc श्रयिष्यंति (for संश्रयन्ति). Ś1 K1. 2 B1 (m as above) Dc नराधिप; B4 तथा नरान् (for नरान्नृप). — (L. 2) Ś1 K1. 2 उप- (for अपि). K4 अन्यं (for अन्यान्).]

**56** $^{b}$) K2 D5 T2 G2–4 च युग- (for चायुषः). — $^{d}$) T1 G1 M1 शत° (for बहु°).

**57** $^{a}$) D5 तद् (for तानि). — $^{b}$) G4 क्षुभि° (for क्षुधि°). K4 B Dn2. n3 D4. 6 G2 M2 वै (for च).

**58** $^{d}$) D2. 5 सरःसु; M नदीषु (for सरित्सु).

**59** $^{a}$) Ś1 K2. 3 B4 Dc D1. 2. 5. 6 T1 M2 वापि (for चापि). — Ś1 K1 om. (hapl.) 59$^{c}$–60$^{b}$; G1 om. 59$^{cd}$. — $^{c}$) G2 तत्सर्वं (by transp.). — $^{d}$) M2 पुरुषर्षभ.

☞ 3. 186. 60–77, 122$^{cd}$–129$^{cd}$; 187. 1$^{ab}$–47$^{cd}$ agree almost verbatim (barring some omissions) with Brahma Purāṇa (Ānandāśrama ed.) 52. 4–8; 53. 1$^{ab}$–14$^{ab}$; 56. 4–57.

**60** Ś1 K1 om. 60$^{ab}$ (cf. v.l. 59). — $^{ab}$) K2. 3 D1–3. 5 S वायुरग्निना (for वह्निर्वायुना). S सहितो भृशं

ततः संवर्तको वह्निर्वायुना सह भारत ।
लोकमाविशते पूर्वमादित्यैरुपशोषितम् ॥ ६०
ततः स पृथिवीं भित्त्वा समाविश्य रसातलम् ।
देवदानवयक्षाणां भयं जनयते महत् ॥ ६१
निर्दहन्नागलोकं च यच्च किंचित्क्षिताविह ।
अधस्तात्पृथिवीपाल सर्वं नाशयते क्षणात् ॥ ६२
ततो योजनविंशानां सहस्राणि शतानि च ।
निर्दहत्यशिवो वायुः स च संवर्तकोऽनलः ॥ ६३
सदेवासुरगन्धर्वं सयक्षोरगराक्षसम् ।
ततो दहति दीप्तः स सर्वमेव जगद्विभुः ॥ ६४

ततो गजकुलप्रख्यास्तडिन्मालाविभूषिताः ।
उत्तिष्ठन्ति महामेघा नभस्यद्भुतदर्शनाः ॥ ६५
केचिन्नीलोत्पलश्यामाः केचित्कुमुदसंनिभाः ।
केचित्किञ्जल्कसंकाशाः केचित्पीताः पयोधराः ॥ ६६
केचिद्धारिद्रसंकाशाः काकाण्डकनिभास्तथा ।
केचित्कमलपत्राभाः केचिद्धिङ्गुलकप्रभाः ॥ ६७
केचित्पुरवराकाराः केचिद्गजकुलोपमाः ।
केचिदञ्जनसंकाशाः केचिन्मकरसंस्थिताः ।
विद्युन्मालापिनद्धाङ्गाः समुत्तिष्ठन्ति वै घनाः ॥ ६८
घोररूपा महाराज घोरस्वननिनादिताः ।

C. 3. 12883
B. 3. 188. 78
K. 3. 191. 78

---

(for सह भारत). — $^c$) T$_1$ वर्षशते (for आविशते). — $^d$) Ś$_1$ K$_{1.2}$ भास्करैर् (for आदित्यैर्). Ś$_1$ K B$_2$ (m as in text) D$_{1-3}$ उपतापितं; B$_3$ Dc T$_1$ G$_2$ M$_2$ उपशोभितं; B$_4$ उपशोधितं; D$_5$ परिवारितं.

**61** $^a$) Ś$_1$ K$_{1.2}$ च (for स). Ś$_1$ K$_2$ पृथिवी सर्वा (for पृथिवीं भित्त्वा). — $^b$) K$_4$ B D (except D$_{1-3.5}$) प्रविश्य च (for समा°). — $^c$) T$_1$ °मानुष° (for °दानव°). — $^d$) K$_1$ B$_4$ महान् (for महत्).

**62** $^a$) D$_5$ यद् (for च). — $^b$) D$_{1.2}$ कृता° (for क्षिता°). — $^c$) D$_5$ पृथिवीनाथ; S पृथिवीं राजन्. — $^d$) T$_2$ G$_{2.3}$ सर्वान् (for सर्वं). S नाश(T$_1$ राज)यति.

**63** $^a$) K$_4$ D$_{1-3}$ °कोटीनां (for °विंशानां). Ś$_1$ K$_{1-3}$ D$_5$ योजनानां (K$_3$ येन नावां) समंताद्धि. — $^c$) T G अशिवैर्घोरैः (for अशिवो वायुः). M निर्दह्यंतेशिवैर्घोरैः. — $^d$) T$_1$ G$_{1.4}$ तथा; T$_2$ G$_{2.3}$ M तदा (for स च). Ś$_1$ K$_{1.2}$ सांवर्तकोनलः; T G संवर्तकादिभिः (G$_1$ °कौंशुभिः); M °काग्निभिः.

**64** $^a$) K$_3$ D$_{3.5}$ °गंधर्वं-. — $^b$) D$_5$ °मानुषं. — $^c$) D$_{1.2}$ गर्जन्; M$_2$ जगद् (for ततो). B$_1$ D$_{1.2}$ दीप्तांशुः; Dn$_1$ Dc$_2$ T G दीप्तः सन्. B$_2$ ततः स दहते दीप्तः. — $^d$) S सर्वानेव दिवौकसः (G$_1$ विभावसुः).

**65** $^b$) K$_{3.4}$ D$_{1-3.5}$ तडिद्गुण-; T$_2$ G$_{2-4}$ विद्युज्ज्वाला- (for तडिन्माला-). Ś$_1$ K$_{1.2}$ -समन्विताः; B$_2$ -विभूषणाः (for -विभूषिताः). — $^c$) Ś$_1$ K$_{1.2}$ उत्तिष्टंते. Ś$_1$ K D$_{2.3.5}$ घना (Ś$_1$ गणा) राजन् (for महामेघा).

**66** After 66$^{ab}$, T$_2$ ins.:

929* कारण्डकनिभाः केचित्केचिदिङ्गुलिकप्रभाः ।
[Cf. 67$^b$ and 67$^d$.]

— T$_1$ reads 66$^{cd}$ after 68$^{cd}$. — $^c$) B$_4$ हारिद्र°; T G कुंजर° (for किञ्जल्क°). — Ś$_1$ K$_2$ om. (hapl.) 66$^d$–67$^a$. — $^d$) B$_{1-3}$ D$_2$ पीनाः; D$_3$ पीत- (for पीताः). D$_5$ केचिद्विमलवत्प्रभाः; M$_2$ केचिन्मकरसंस्थिताः (=68$^d$).

**67** T$_1$ reads 66$^c$–67$^d$ after 68$^{cd}$. Ś$_1$ K$_2$ om. 67$^a$ (cf. v.l. 66); B$_1$ G$_4$ om. 67$^{ab}$; D$_5$ om. 67. — $^a$) T$_2$ G$_{2.3}$ द्विरदसंकाशाः; M$_1$ हरिद्रासदृशाः; M$_2$ कुंजरसंकाशाः. — $^b$) T$_1$ om. 67$^b$. B$_2$ Dc$_2$ D$_{2.3}$ T$_2$ G$_{2.3}$ कारंडवनिभास्. B$_4$ परे; T$_2$ G$_3$ तदा (for तथा). G$_1$ केचिन्मकरसंनिभाः; M$_1$ केचित्काकनिभास्तथा; M$_2$ केचित्कारंडवप्रभाः. — After 67$^{ab}$, M$_2$ ins.:

930* केचिद्दारिद्र्यसंकाशाः केचित्पीताः पयोधराः ।
[= (var.) 66$^{cd}$.]

— $^c$) G$_1$ कुरंदकनिभाः केचित्. — $^d$) T$_1$ om. 67$^d$. K$_4$ B$_{3.4}$ Dc Dn D$_{4.6}$ हिंगुलसप्रभाः; B$_1$ किंशुकसप्रभाः; B$_2$ D$_1$ हिंगुलसंनिभाः; T$_2$ G$_{2-4}$ अंकुरितप्रभाः; G$_1$ M$_1$ हिंगुलिकप्रभाः; M$_2$ हि स्फटिकप्रभाः.

**68** B$_1$ G$_4$ om. 68$^{ab}$ (cf. v.l. 67). — $^a$) B$_2$ केचित्केचित्प्लवाकाराः; D$_5$ केचिच्च तुहिनाकाराः. — $^b$) Ś$_1$ अलिकुलो°; K$_2$ कूलोपमास्तथा; M$_2$ मरकतप्रभाः (for गजकुलो°). — M$_2$ om. 68$^{cd}$. — $^c$) B$_4$ कुंजर° (for अञ्जन°). — $^d$) Ś$_1$ K D$_{1-3.5}$ °वर्चसः (K$_3$ °धूसराः); B Dc Dn D$_{4.6}$ T$_2$ (by corr.) G$_3$ °संनिभाः (for °संस्थिताः). — After 68$^{cd}$, T$_1$ reads 66$^{cd}$, followed by 67. — G$_4$ om. 68$^{ef}$. — $^e$) K$_3$ °निबद्धांगाः; K$_4$ °वदद्धांगाः; D$_3$ M$_1$ °विन(D$_3$ °विनि)-द्धांगाः. — $^f$) B$_4$ तोयदाः; D$_5$ ते घनाः.

**69** $^a$) Ś$_1$ K$_{1-3}$ महत्तोयं (for महा°). — $^b$) Dc$_2$ D$_3$ S (except T$_1$) °स्वर-; D$_5$ °रूप- (for °स्वन-). B Dc -निनादिनः; D$_{2.3}$ S -विनादिनः (G$_1$ °ताः). Ś$_1$ K$_{1-3}$ विमुंचंति नभोगताः. — $^c$) D$_2$ S सर्वं (for सर्वे). — $^d$)

C. 3. 13738
B. 3. 207. 37
K. 3. 210. 38

स एष राजा जनकः सर्वं धर्मेण पश्यति ।
अनुगृह्णन्प्रजाः सर्वाः स्वधर्मनिरताः सदा ॥ ३६
ये चैव मां प्रशंसन्ति ये च निन्दन्ति मानवाः ।
सर्वान्सुपरिणीतेन कर्मणा तोषयाम्यहम् ॥ ३७
ये जीवन्ति स्वधर्मेण संभुञ्जन्ते च पार्थिवाः ।
न किंचिदुपजीवन्ति दक्षा उत्थानशीलिनः ॥ ३८
शक्त्यान्नदानं सततं तितिक्षा धर्मनित्यता ।
यथार्हं प्रतिपूजा च सर्वभूतेषु वै दया ।
त्यागान्नान्यत्र मर्त्यानां गुणास्तिष्ठन्ति पूरुषे ॥ ३९
मृषावादं परिहरेत्कुर्यात्प्रियमयाचितः ।
न च कामान्न संरम्भान्न द्वेषाद्धर्ममुत्सृजेत् ॥ ४०
प्रिये नातिभृशं हृष्येदप्रिये न च संज्वरेत् ।
न मुह्येदर्थकृच्छ्रेषु न च धर्मं परित्यजेत् ॥ ४१
कर्म चेत्किंचिदन्यत्स्यादितरन्न समाचरेत् ।
यत्कल्याणमभिध्यायेत्तत्रात्मानं नियोजयेत् ॥ ४२
न पापं प्रति पापः स्यात्साधुरेव सदा भवेत् ।
आत्मनैव हतः पापो यः पापं कर्तुमिच्छति ॥ ४३
कर्म चैतदसाधूनां वृजिनानामसाधुवत् ।
न धर्मोऽस्तीति मन्वानाः शुचीनवहसन्ति ये ।
अश्रद्दधाना धर्मस्य ते नश्यन्ति न संशयः ॥ ४४

---

$B_4$ Dc $D_5$ $T_1$ $G_2$ $M_2$ अभवत् (for अभवः). $D_3$ किल (for सदा).

**36** a) $K_2$ एव (for एष). $G_1$ transp. राजा and जनकः. — b) = 29b. B Dc Dn $D_{4.6}$ $G_3$ प्रजा; $G_{1.4}$ सर्वान् (for सर्वं). Dc पश्यते. — c) $D_1$ अनुगृह्णान्; $D_5$ °गृह्य. — d) $K_1$ सद्धर्म°; $D_5$ $T_2$ $G_2$ $M_2$ स्वधर्मनिरतः. $T_1$ $G_1$ तदा (for सदा). — After 36, S (except $G_3$) ins.:

1009* पाल्येष राजा जनकः पितृवद् द्विजसत्तम ।

[ $T_1$ सदा पाल्येष (for पाल्येष राजा). ]

**37** a) $K_2$ प्रपश्यंति (for प्रशं°). — b) $D_5$ केचिन् (for ये च). $B_4$ पार्थिवाः; $G_4$ वा नराः (for मानवाः). — c) $T_1$ सर्वान्स्वयं परीतेन. — d) S (except $G_3$) योज° (for तोष°). $D_1$ तान् (for [अ]हम्).

**38** a) $D_1$ transp. जीवन्ति and स्वधर्मेण. — b) $K_2$ संभुंजेते; $K_4$ $D_3$ °भुंजंति; $B_{1.3.4}$ Dc Dn $D_{4.6}$ $G_3$ °युंजंति; $D_1$ °यजंति; $D_5$ °भजंते; $T_1$ $G_4$ °भुज्यंते; $T_2$ $G_2$ °पूज्यंते; $G_1$ °भूयंते. $B_2$ ह (for च). $D_3$ मानवाः (for पार्थिवाः). $D_2$ तान्संभुंजति पार्थिवान्. — c) $K_{1.2.4}$ $D_{1.2}$ कंचिद्. — d) B Dc Dn $D_{4.6}$ $G_3$ दांता (for दक्षा). $Dn_3$ $D_1$ °शालिनः; $T_1$ °जीविनः; $M_2$ °शायिनः. $G_{2.4}$ सुशीला यांति ते दिवं. — After 38, $D_3$ ins.:

1010* न किंचित्फलमाप्नोति स्वधर्मस्य च लोपनात् ।

**39** a) $K_3$ भक्त्या°; $D_2$ दया दानं च; $D_3$ शक्त्या तु दानं; $G_4$ शक्त्या च दानं. — b) $K_3$ $G_2$ $M_2$ धर्मनित्यदा. — Ś1 $K_{1-3}$ om. 39cd. — c) $B_{2-4}$ Dc $D_1$ यथार्ह-; $Dn_2$ यथार्थं. $B_3$ °गृह्या (for °पूजा). — d) $G_4$ कार्या भूतेषु. $B_{1.2}$ Dc Dn $D_{4.6}$ सदा; $B_3$ तदा (for दया). $K_4$ $B_4$ सर्वभूतेषु नित्यदा; $D_{1-3.5}$ धर्मनित्येषु धर्मिता ($D_1$ धर्मतः; $D_5$ नित्यदा). — e) $B_1$ $D_1$ योगान् (for त्यागान्). $K_3$ अत्यंत- (for अन्यत्र). — f) $K_4$ $B_3$ $D_{1-3}$ T $G_4$ M पौरुषे (for पू°).

**40** a) $D_3$ परिहरन्. — b) $K_4$ अयाचते; $B_4$ अधोचितं T $G_{1.2.4}$ अनिंदितः; M अतंद्रितः (for अयाचितः).

**41** $T_1$ om. 41; $D_3$ om. 41ab. — a) Ś1 $K_{1.2}$ प्रियेण; $K_4$ प्रिये तु (for प्रिये न). $K_2$ हि भृशं; $K_4$ नाभृशं; $B_2$ [अ]पि भृशं; $G_4$ [अ]तिशयं (for [अ]तिभृशं). $K_3$ हर्षेद् (for हृष्येद्). — b) Ś1 $K_{1.2}$ $D_1$ अप्रियेण (for अप्रिये न). $G_1$ [अ]ति; $G_{2.4}$ तु (for च). — c) $G_1$ मुह्याद्. $D_1$ °संकृछ्रे (for °कृच्छ्रेषु). — d) $M_2$ धर्मान्. $K_{3.4}$ $D_{1-3}$ न च रौद्रं समाचरेत्.

**42** $K_2$ om. 42ab. — a) $Dc_1$ कर्मकृत्; $D_5$ कर्म यत (for कर्म चेत्). $K_4$ अस्यापि (for अन्यत्स्याद्). — b) $K_2$ इतरन्यत्; $K_4$ तरसा न (for इतरन्न). B Dc Dn $D_{4-6}$ T G तदा° (for समा°). — c) $D_1$ $M_2$ यः; $T_2$ स (for यत्). $B_1$ इह (for अभि-). — $D_4$ om. 42c–43d. — d) Ś1 K $D_{1-3.5}$ निवेश°; $T_1$ निबोध° (for नियोज°).

**43** $D_4$ om. 43 (cf. v.l. 42). — a) $K_3$ B Dc Dn $D_6$ पापे (for पापं). $G_{2.3}$ पापी; $M_2$ पापं (for पापः). — b) $T_1$ स्वादुर् (for साधुर्). $D_1$ T तदा (for सदा). — c) $M_1$ गतः (for हतः). — d) $B_4$ स्वः (for यः). $T_1$ पापो भवति नित्यदा.

**44** $T_1$ om. 44a–45b. — a) $D_1$ धर्म्यं (for कर्म). $Dc_1$ $D_4$ वै तद्; $T_2$ चेत्तद् (for चैतद्). — b) Ś1 $K_{1.3}$ $B_{1.3}$ Dc $D_{2.3.5}$ वृजिनं ($K_1$ °नां) नाम साधुवत्; $D_1$ वृजिनं तच्च साधुवत्; $T_2$ $G_{2.4}$ वृजिनानां हि ($G_2$ ह्य-) साधकं. — d) S अपहसंति. $G_4$ वै (for ये). — e) Ś1 $K_{1.2.4}$ $D_{1-3.5}$ न श्रद्दधाना; $K_3$ $D_5$ M न श्रद्दधंतो. $G_{1.2.4}$ धर्मज्ञास (for °स्य). — f) $T_1$ $G_{1.2.4}$ $M_2$ तेन ($G_1$ ते तु; $G_2$ ते च) नश्यं-

महादृतिरिवाध्मातः पापो भवति नित्यदा ।
मूढानामवलिप्तानामसारं भाषितं भवेत् ।
दर्शयत्यन्तरात्मानं दिवा रूपमिवांशुमान् ॥ ४५
न लोके राजते मूर्खः केवलात्मप्रशंसया ।
अपि चेह मृजा हीनः कृतविद्यः प्रकाशते ॥ ४६
अब्रुवन्कस्यचिन्निन्दामात्मपूजामवर्णयन् ।
न कश्चिद्गुणसंपन्नः प्रकाशो भुवि दृश्यते ॥ ४७
विकर्मणा तप्यमानः पापाद्विपरिमुच्यते ।
नैतत्कुर्यां पुनरिति द्वितीयात्परिमुच्यते ॥ ४८
कर्मणा येन तेनेह पापाद्द्विजवरोत्तम ।
एवं श्रुतिरियं ब्रह्मन्धर्मेषु परिदृश्यते ॥ ४९

पापान्यबुद्ध्वेह पुरा कृतानि
प्राग्धर्मशीलो विनिहन्ति पश्चात् ।
धर्मो ब्रह्मन्नुदते पूरुषाणां
यत्कुर्वते पापमिह प्रमादात् ॥ ५०
पापं कृत्वा हि मन्येत नाहमस्मीति पूरुषः ।
चिकीर्षेदेव कल्याणं श्रद्दधानोऽनसूयकः ॥ ५१
वसनस्येव छिद्राणि साधूनां विवृणोति यः ।
पापं चेत्पुरुषः कृत्वा कल्याणमभिपद्यते ।
मुच्यते सर्वपापेभ्यो महाभ्रैरिव चन्द्रमाः ॥ ५२
यथादित्यः समुद्यन्वै तमः सर्वं व्यपोहति ।
एवं कल्याणमातिष्ठन्सर्वपापैः प्रमुच्यते ॥ ५३

C. 3. 13757
B. 3. 207. 57
K. 3. 210. 60

---

त्यसंशयं.

**45** T1 om. $45^{ab}$ (cf. v.l. 44). — After $45^{ab}$, S (except G3) ins.:

1011* साधुसन्नीतिमानेव सर्वत्र द्विजसत्तम ।

— $^{d}$) Ś1 न सारं (for असारं). Dn D4. 6 भावितं; G3 जीवितं (for भाषितं). D3 (by corr.) G1 बहु (for भवेत्). — $^{e}$) K3 D1. 2. 5 G1. 2 M2 दर्शयंति; B1. 3 Dc T1 °यन्; G4 °यामि (for °यति). Dn [अं]तरात्मा तं (Dn2 °त्मत्वं)! — $^{f}$) D3 दिव्यं (for दिवा).

**46** $^{a}$) Ś1 लोकः; T2 मूढं (for मूर्खः). — $^{b}$) K3 केवलात्मा प्रशंसकः. — G4 om. $46^{c}$–$47^{b}$. — $^{c}$) T1 चेन्न (for चेह). Dn1. n3 D3 Cnp श्रिया; D6 मृषा (for मृजा). K1 Dc अपि देहमृ(K1 °प्र)जा हीनः.

**47** G4 om. $47^{ab}$ (cf. v.l. 46). — $^{a}$) K1 अब्रुवः; D5 विषवत्; T2 अभवत्; M2 अब्रवत् (for अब्रुवन्). K2 कस्य च (for कस्यचिन्). — $^{b}$) G2 च निंदयन् (for अवर्ण°). — $^{c}$) T2 G4 किंचिद् (for कश्चिद्). K4 D1. 2 गुणहीनस्तु; D5 कुलसंपन्नः. — $^{d}$) D5 प्रायशो (for प्रकाशो). S (except G3) न च (for भुवि). Ś1 K B4 D1–3. 5 विद्य° (for दृश्य°).

**48** $^{b}$) Ś1 K1. 2 D1–3 पापार्धात्प्रति°; K4 Dc2 °र्धात्परि°; B1 °त्स परि°; D5 प्रथमात्परि°; T2 G1. 2. 4 M1 °द्वि परि° (for °द्विपरि°). — $^{c}$) B Dc1 Dn D4. 6 तत् (for [ए]तत्). B1. 3 Dc D2. 3 G2. 4 कुर्यात् (for कुर्यां). B4 न कुर्यां पुनरेवेति. — $^{d}$) T G1. 2. 4 द्वितीयं. Ś1 अपि-; K2 प्रति (for परि-). — After 48, M2 ins.:

1012* करिष्ये धर्ममेवेति तृतीयात्परिमुच्यते ।

**49** $^{a}$) S (except G3) केन (for तेन). T2 M2 [अ]हं; G2. 4 [अ]पि (for [इ]ह). — $^{b}$) S (except G3) पापात्मा द्विजसत्तम. — $^{c}$) G2 श्रुतमिदं (for श्रुति°). Ś1 K1. 2 विद्वन् (for ब्रह्मन्). — $^{d}$) K1 परिपृच्छति; B2 Dc Dn D4 प्रतिदृश्यते; D5 परिशास्यते; D6 परिदिश्यते.

**50** $^{a}$) Ś1 K1. 3 [अ]कृत्वेह; K2. 4 D1–3. 5 G1 कृत्वेह; B4 [अ]बुध्वा च; T2 G2. 4 M बुध्वेह (for [अ]बुद्ध्वेह). — $^{b}$) B4 T1 स धर्मशीलो; D5 M सद्धर्म°; G2. 4 स्वधर्म°. K3 [ऽ]पि निहंति; B1. 2. 4 D (except D1–3. 5) G3 [ऽ]पि विहंति; T1 M1 हि विहंति; M2 [ऽ]भिवहंति (for विनि°). K2 M2 पश्यन् (for पश्चात्). — $^{c}$) Ś1 ब्रह्मो; D1 धर्मे (for धर्मो). Ś1 धर्मन्; Dc1 Dn D6 राजन् (for ब्रह्मन्)! S (except G3) अदति (for नुदते). K3 S (except G3) ब्राह्मणानां; D1. 2 पौरुषाणां. D5 धर्मान्नुदंते पौरुषाणां समस्तं. — $^{d}$) K3 शुभेन पापं न विचार्यमस्ति.

**51** $^{a}$) K3 T2 G1 M1 [अ]भिमन्येत; K4 (hypermetric) योभिमन्येत (for हि मन्येत). — After $51^{ab}$, B Dn D4. 6 G3 ins.:

1013* तं तु देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुषः ।

— $^{d}$) Ś1 K1 [ऽ]नसूयया.

**52** $^{b}$) Ś1 K D1. 2 संवृ° (for विवृ°). Ś1 K1. 2. 4 B1. 3 D1. 2 सः (for यः). — After $52^{ab}$, S (except G3) ins.:

1014* अपश्यन्नात्मनो दोषान्स पापः प्रेत्य नश्यति ।

— $^{d}$) Ś1 उपपद्यते. — $^{f}$) B1–3 D (except D1–3. 5) G3 °भ्रैणैव; T1 °भ्रादिव (for °भ्रैरिव).

**53** $^{a}$) T1 स उद्यन् (for समुद्यन्). — $^{b}$) Ś1 Dc1 Dn D4. 6 G3 पूर्वं (for सर्वं). — $^{d}$) Ś1 K1. 2 सर्वं पापं व्यपोहति.

**54** $^{b}$) B1m मोहमेव; B4 लोभमेष; S (except G3)

C. 3. 13758
B. 3. 207. 58
K. 3. 210. 61

पापानां विद्ध्यधिष्ठानं लोभमेव द्विजोत्तम ।
लुब्धाः पापं व्यवस्यन्ति नरा नातिबहुश्रुताः ।
अधर्मा धर्मरूपेण तृणैः कूपा इवावृताः ॥ ५४
तेषां दमः पवित्राणि प्रलापा धर्मसंश्रिताः ।
सर्वं हि विद्यते तेषु शिष्टाचारः सुदुर्लभः ॥ ५५
मार्कण्डेय उवाच ।
स तु विप्रो महाप्राज्ञो धर्मव्याधमपृच्छत ।
शिष्टाचारं कथमहं विद्यामिति नरोत्तम ।
एतन्महामते व्याध प्रब्रवीहि यथातथम् ॥ ५६
व्याध उवाच ।
यज्ञो दानं तपो वेदाः सत्यं च द्विजसत्तम ।
पञ्चैतानि पवित्राणि शिष्टाचारेषु नित्यदा ॥ ५७
कामक्रोधौ वशे कृत्वा दम्भं लोभमनार्जवम् ।
धर्म इत्येव संतुष्टास्ते शिष्टाः शिष्टसंमताः ॥ ५८
न तेषां विद्यतेऽवृत्तं यज्ञस्वाध्यायशीलिनाम् ।
आचारपालनं चैव द्वितीयं शिष्टलक्षणम् ॥ ५९
गुरुशुश्रूषणं सत्यमक्रोधो दानमेव च ।
एतच्चतुष्टयं ब्रह्मञ्शिष्टाचारेषु नित्यदा ॥ ६०
शिष्टाचारे मनः कृत्वा प्रतिष्ठाप्य च सर्वशः ।
यामयं लभते तुष्टिं सा न शक्या ह्यतोऽन्यथा ॥ ६१
वेदस्योपनिषत्सत्यं सत्यस्योपनिषद्दमः ।
दमस्योपनिषत्त्यागः शिष्टाचारेषु नित्यदा ॥ ६२
ये तु धर्ममसूयन्ते बुद्धिमोहान्विता नराः ।
अपथा गच्छतां तेषामनुयातापि पीड्यते ॥ ६३

---

लोभमोहौ (for °मेव). — After $54^{ab}$, T2 G1. 2. 4 M ins.:

1015* तस्मात्तौ विदुषां विप्र वर्जनीयौ प्रधानतः ।

— T1 om. $54^{c}$–$57^{b}$. — $^{c}$) T2 G2. 4 पापान्. K2 विपश्यंति (for व्यव°). — B3 om. $54^{ef}$. — $^{e}$) Ś1 K1. 2 T2 G2 M1 अधर्म्या; K3 °धर्म्य-; K4 °धर्मो (for °धर्मा). — $^{f}$) Ś1 पापा; K3. 4 कूप (for कूपा). K3. 4 आवृतः.

**55** T1 om. 55 (cf. v.l. 54). — $^{a}$) D1 T2 G2. 4 एषां; G3 M1 येषां (for तेषां). D1 धर्माः; T2 G1. 2. 4 M पंच (for दमः). — $^{b}$) K3 धर्मसंसृताः; B4 °संस्थिताः; D5 °संयुताः. G2 शिष्टाचारेषु नित्यदा. — $^{c}$) D5 G4 सर्वो; G1 °वैं (for °र्वं). — $^{d}$) G4 शिष्टाचाराः. K1 G1. 4 M1 सुदुर्लभाः. — After 55, B1. 3 Dc Dn2 D2. 3 G2. 4 add a colophon (*adh. no.* G2. 4 201).

**56** T1 om. 56 (cf. v.l. 54). — $^{a}$) G1 M2 च (for तु). K1 M2 महाप्राज्ञ; K3 °प्रज्ञो; K4 Dc D1 T2 G2. 4 °प्राज्ञं; M1 °राज. — $^{c}$) M2 शिष्टाचारः. B1 इह (for अहं). — $^{d}$) D1 G1. 2 M1 विद्यामीति. — After $56^{cd}$, N (except Ś1) G3 ins.:

1016* एतदिच्छामि भद्रं ते श्रोतुं धर्मभृतां वर ।;

while T2 G1. 2. 4 M ins. (a v.l. of $57^{cd}$):

1017* पञ्च कानि पवित्राणि शिष्टाचारेषु नित्यदा ।

— Ś1 om. $56^{ef}$. — M2 reads $56^{ef}$–$57^{cd}$ after $64^{ab}$ (cf. 1018*). — $^{e}$) N (Ś1 om.) त्वत्तो (for एतन्). — $^{f}$) K1. 2 तद्ब्रवीषि; K3. 4 B Dc Dn D2–6 तद्ब्रवीहि; D1 तन्मे ब्रूहि.

**57** T2 om. 57; T1 om. $57^{ab}$ (cf. v.l. 54). For M2 cf. v.l. 56. — Ś1 K1. 2 धर्मव्याधः (for व्याध उ°). — Ś1 om. 57. — $^{ab}$) G4 transp. वेदाः and सत्यं. D5 वा (for च). B2 °पुंगव (for °सत्तम).

**58** $^{a}$) T2 च मोहं च (for वशे कृत्वा). — $^{b}$) K3. 4 D1–3 मोहम् (for लोभम्). Ś1 K1. 2 D5 दंभमोहमना(Ś1 °दा)र्जवं. — $^{c}$) K2 Dc1 Dn D4. 6 धर्मम् (for धर्म). D1. 2 संहृष्टास् (for संतुष्टास्). — $^{d}$) B1 D3 transp. ते and शिष्टाः. G1 °सत्तमाः (for °संमताः).

**59** $^{a}$) D2 यद् (for न). D1. 2. 5 येषां (for तेषां). D1 T1 G1. 2. 4 M1 भिद्यते (for विद्यते). Ś1 K वित्तं; D3 पापं (for ऽवृत्तं). — $^{b}$) B1 धर्मस्वाध्याय-. Ś1 °शूलिनां; K2 °शिल्पनां; K3 D5 °शीलतां; K4 °वर्तिनां. — $^{c}$) Ś1 K1. 2 आचाराचरणं. Dc चापि (for चैव).

**60** $^{a}$) K3. 4 D1–3 धैर्यम्; B3 नित्यम् (for सत्यम्). — $^{d}$) Ś1 K D2. 3. 5 नित्यशः (for नित्यदा).

**61** $^{a}$) D1 मतिं (for मनः). — $^{b}$) Dc2 प्रतिश्रुत्य. B3 च नित्यशः. — $^{c}$) G2 यामया; G4 °तं; M °लं (for °यं). M2 भजते (for लभते). Dn D4. 6 वृत्तिं (for तुष्टिं). — $^{d}$) Ś1 शक्याप्तुम्; K1 शक्त्यामतो; K4 D2. 3. 5 शक्या ततो; D1 शक्या त्वतो; T G1. 2. 4 M2 शक्यमतो (for शक्या ह्यतो).

**63** G4 om. $63^{ab}$. — $^{a}$) B2 च (for तु). Ś1 K D1–3. 5 धर्ममसूयंति (K3. 4 °तं); B1. 2. 4 Dc Dn D4. 6 G1. 3 धर्मानसुयंते. — $^{c}$) K4 अपथे; G4 अन्यथा (for अपथा). G4 चरतां (for गच्छतां). — $^{d}$) K1. 2 अनुतापोपि; K4 B1. 2 °यातो°; D2 °गंता° (for °यातापि). Dn D4. 6 च (for [अ]पि). D5 नश्यति (for पीड्यते).

ये तु शिष्टाः सुनियताः श्रुतित्यागपरायणाः ।
धर्म्यं पन्थानमारूढाः सत्यधर्मपरायणाः ॥ ६४
नियच्छन्ति परां बुद्धिं शिष्टाचारान्विता नराः ।
उपाध्यायमते युक्ताः स्थित्या धर्मार्थदर्शिनः ॥ ६५
नास्तिकान्भिन्नमर्यादान्क्रूरान्पापमतौ स्थितान् ।
त्यज ताञ्ज्ञानमाश्रित्य धार्मिकानुपसेव्य च ॥ ६६
कामलोभग्रहाकीर्णां पञ्चेन्द्रियजलां नदीम् ।
नावं धृतिमयीं कृत्वा जन्मदुर्गाणि संतर ॥ ६७
क्रमेण संचितो धर्मो बुद्धियोगमयो महान् ।
शिष्टाचारे भवेत्साधू रागः शुक्लेव वाससि ॥ ६८
अहिंसा सत्यवचनं सर्वभूतहितं परम् ।
अहिंसा परमो धर्मः स च सत्ये प्रतिष्ठितः ।
सत्ये कृत्वा प्रतिष्ठां तु प्रवर्तन्ते प्रवृत्तयः ॥ ६९
सत्यमेव गरीयस्तु शिष्टाचारनिषेवितम् ।
आचारश्च सतां धर्मः सन्तश्चाचारलक्षणाः ॥ ७०
यो यथाप्रकृतिर्जन्तुः स्वां स्वां प्रकृतिमश्नुते ।
पापात्मा क्रोधकामादीन्दोषानाप्नोत्यनात्मवान् ॥ ७१
आरम्भो न्याययुक्तो यः स हि धर्म इति स्मृतः ।
अनाचारस्त्वधर्मेति एतच्छिष्टानुशासनम् ॥ ७२
अक्रुध्यन्तोऽनसूयन्तो निरहंकारमत्सराः ।
ऋजवः शमसंपन्नाः शिष्टाचारा भवन्ति ते ॥ ७३
त्रैविद्यवृद्धाः शुचयो वृत्तवन्तो मनस्विनः ।
गुरुशुश्रूषवो दान्ताः शिष्टाचारा भवन्त्युत ॥ ७४
तेषामदीनसत्त्वानां दुष्कराचारकर्मणाम् ।

C. 3. 13780
B. 3. 207. 80
K. 3. 211. 21

---

**64** T$_1$ om. 64$^{a}$–65$^{b}$. Before 64, M$_2$ ins. कौशिकः. — $^{a}$) Ś$_1$ तु (for सु-). — $^{b}$) K$_2$ श्रुतत्याग°; K$_4$ श्रुत्यायास°; B$_1$ श्रुतियोग°; D$_3$ शुचित्याग°. — After 64$^{ab}$, M$_2$ reads 56$^{ef}$–57$^{cd}$; viz.:

1018* एतन्महामते व्याध प्रब्रवीहि यथातथम् ।
व्याधः ।
यज्ञो दानं तपो वेदाः सत्यं च द्विजसत्तम ।
पञ्चैतानि पवित्राणि शिष्टाचारेषु नित्यदा ।

— G$_4$ om. 64$^{cd}$. — $^{c}$) B D (except D$_2$) T$_2$ धर्म-; G$_3$ धर्मं (for धर्म्यं). B$_1$ आश्रित्य (for आरूढाः). — $^{d}$) Ś$_1$ K D$_{1-3.5}$ सत्यव्रत-; M$_2$ सत्यान्धर्म-. B$_1$ स्वधर्मपरमैषिणः.

**65** T$_1$ om. 65$^{ab}$ (cf. v.l. 64). — $^{a}$) G$_4$ प्रयच्छंति. Ś$_1$ K$_{1.2}$ तु यां; D$_5$ तु ये (for परां). — $^{b}$) Ś$_1$ K$_{1.2}$ G$_{2.4}$ °चाररता; K$_{3.4}$ D$_{1-3.5}$ T$_2$ °चारतया. B$_{2.4}$ Dn D$_{4.6}$ जनाः; T$_2$ तु मे (for नराः). — $^{d}$) K$_2$ स्थिता; K$_3$ D$_5$ स्थित्यां; G$_1$ सत्य- (for स्थित्या).

**66** $^{a}$) Ś$_1$ K$_{1-3}$ नास्तिका भिन्नमर्यादा. — $^{b}$) Ś$_1$ K$_{1.2}$ नराः; K$_3$ D$_{1-3.5}$ नरान्; B$_2$ पापान्; T$_1$ घोरान् (for क्रूरान्). K$_{2.3}$ पापमतः; K$_4$ न्यायमते; B$_{2.4}$ D$_{5.6}$ G$_{1.2.4}$ पापमते. Ś$_1$ K$_{1.2}$ स्थिताः; B$_1$ नरान्; B$_3$ स्मृतान् (for स्थितान्). — $^{d}$) K$_3$ B$_2$ G$_4$ M$_2$ उपसेव च; K$_4$ D$_1$ उपसेवया.

**67** $^{a}$) Ś$_1$ K$_{1.2}$ B$_4$ कामक्रोध-. K$_4$ D$_{1.3}$ -ग्राहवतीं. — $^{c}$) B$_2$ D$_{2.3.5}$ धृतिमतीं (B$_2$ °तिं). — $^{d}$) B$_2$ जन्मदुःखानि; S (except G$_{2.3}$) तानि दुर्गाणि.

**68** $^{a}$) B$_4$ चरतो (for संचितो). — $^{c}$) K$_1$ G$_1$ M शिष्टाचारो. — $^{d}$) K$_4$ D$_{3.5}$ G$_2$ रागः शुक्ल इवांबरे.

**69** B$_3$ om. 69$^{ab}$. — $^{b}$) Ś$_1$ K$_1$ दमः; K$_3$ D$_{1.2}$ T$_1$ M पदं (for परम्). K$_2$ °स्थितं दमः; T$_2$ °हितप्लुतः. — K$_3$ M om. (hapl.) 69$^{d}$–70$^{c}$. — $^{d}$) D$_1$ धर्मे (for सत्ये). — $^{e}$) K$_{1.2}$ T G$_{1.2.4}$ सत्यं (for सत्ये). Ś$_1$ K$_1$ T$_1$ G$_4$ प्रतिष्ठानं; K$_2$ प्रतिष्ठानि; T$_2$ G$_{1.2}$ प्रतिष्ठां तं.

**70** K$_3$ M om. 70$^{abc}$ (cf. v.l. 69). — $^{b}$) Ś$_1$ K$_{1.2.4}$ D$_{1.2}$ °निषेवणं; D$_3$ (marg. *sec. m.* as in text) °निषेविणं. — $^{d}$) S (except G$_3$) संतो ह्या(T$_2$ °प्या)चार°.

**71** $^{b}$) K$_4$ B$_{1.2}$ Dc Dn D$_{3.4.6}$ G$_3$ स स्वां; B$_3$ स तां; B$_4$ स तत्; T$_2$ तां स्वां (for स्वां स्वां). — $^{c}$) T$_1$ °मोहादीन् (for °कामादीन्). — $^{d}$) K$_3$ D$_{1.3.5}$ S (except G$_3$ M$_1$) प्राप्नोति. K$_2$ नात्मवान्; D$_1$ [अ]नुत्तमान् (for [अ]नात्म°).

**72** $^{a}$) D$_1$ अदंभो (for आरम्भो). Ś$_1$ K D$_{2.3.5}$ त्यागयुक्तो. — $^{b}$) K$_4$ D$_{2.3}$ स तु; T G$_4$ M सर्वो; G$_1$ सर्वं-; G$_2$ स वै (for स हि). Ś$_1$ B$_1$ स्थितः; D$_3$ स्मृतं; D$_5$ श्रुतः (for स्मृतः). — $^{c}$) K$_1$ अनाचारास्. K$_4$ B$_{2.4}$ D$_{2.3.5}$ त्वधर्मः स्यात्; Dc त्वधर्मेषु; T$_1$ त्वधर्मश्च (for त्वधर्मेति). — $^{d}$) Ś$_1$ K B$_4$ D$_{1-3.5}$ इति (for एतत्).

**73** $^{a}$) B$_1$ न मृष्यंते (for ऽनसू°). — $^{c}$) T$_1$ जंतवः; G$_1$ आर्जवः (for ऋजवः). B$_1$ काम°; Dc शिष्ट°; D$_5$ शममापन्नाः; T$_1$ सर्वसंपन्नाः; G$_2$ साधु°. — $^{d}$) K$_4$ प्रशास्तारो; D$_2$ शिष्टाचारे. K$_{3.4}$ D$_5$ [उ]त; D$_{1.2}$ हि (for ते).

**74** K$_3$ om. 74. — $^{b}$) B$_4$ शुचिमंतो. S (except T$_2$ M$_1$) यशस्विनः. — $^{c}$) K$_2$ °शुश्रूषवे; T$_2$ °शुश्रूषया.

13781
207. 80
211. 21

स्वैः कर्मभिः सत्कृतानां घोरत्वं संप्रणश्यति ॥ ७५
तं सदाचारमाश्चर्यं पुराणं शाश्वतं ध्रुवम् ।
धर्मं धर्मेण पश्यन्तः स्वर्गं यान्ति मनीषिणः ॥ ७६
आस्तिका मानहीनाश्च द्विजातिजनपूजकाः ।
श्रुतवृत्तोपसंपन्नास्ते सन्तः स्वर्गगामिनः ॥ ७७
वेदोक्तः परमो धर्मो धर्मशास्त्रेषु चापरः ।
शिष्टाचीर्णश्च शिष्टानां त्रिविधं धर्मलक्षणम् ॥ ७८
पारणं चापि विद्यानां तीर्थानामवगाहनम् ।
क्षमा सत्यार्जवं शौचं शिष्टाचारनिदर्शनम् ॥ ७९
सर्वभूतदयावन्तो अहिंसानिरताः सदा ।
परुषं न प्रभाषन्ते सदा सन्तो द्विजप्रियाः ॥ ८०
शुभानामशुभानां च कर्मणां फलसंचये ।
विपाकमभिजानन्ति ते शिष्टाः शिष्टसंमताः ॥ ८१
न्यायोपेता गुणोपेताः सर्वलोकहितैषिणः ।
सन्तः स्वर्गजितः शुक्लाः संनिविष्टाश्च सत्पथे ॥ ८२
दातारः संविभक्तारो दीनानुग्रहकारिणः ।
सर्वभूतदयावन्तस्ते शिष्टाः शिष्टसंमताः ॥ ८३
सर्वपूज्याः श्रुतधनास्तथैव च तपस्विनः ।
दाननित्याः सुखाँल्लोकानाप्नुवन्तीह च श्रियम् ॥ ८४
पीडया च कलत्रस्य भृत्यानां च समाहिताः ।
अतिशक्त्या प्रयच्छन्ति सन्तः सद्भिः समागताः ॥ ८५
लोकयात्रां च पश्यन्तो धर्ममात्महितानि च ।

— $^{d}$) $B_{2}$ $T_{1}$ ते; $D_{2.3}$ ये; $B_{4}$ [अ]ति (for [उ]त).

**75** $B_{2}$ om. 75$^{ab}$. — $^{a}$) $B_{3.4}$ Dc Dn $D_{4.6}$ $G_{3}$ अहीनसत्वानां. — $^{b}$) $G_{2.4}$ $M_{1}$ °धर्मिणां. — $^{c}$) Ś$_{1}$ K $D_{1-3.5}$ संवृ°; T $G_{1.2}$ $M_{1}$ संस्कृ° (for सत्कृ°). — $^{d}$) $B_{4}$m त्रिविधं कर्मलक्षणं (cf. 78$^{d}$).

**76** $^{a}$) $D_{1}$ तत्; $D_{5}$ ते (for तं). $K_{4}$ $D_{3}$ समाचारम्; $T_{1}$ सदापरम्; $G_{2}$ सदाचार्यम्. Ś$_{1}$ $T_{2}$ $G_{1.2}$ आचार्यं; $K_{2}$ आश्रित्य; $D_{5}$ अत्यर्थं (for आश्चर्यं). $B_{4}$ सदाचारं समास्थाय. — $^{c}$) Ś$_{1}$ $K_{1.2}$ $G_{2}$ धर्म्यं.

**77** $^{a}$) $G_{1}$ काम°; $G_{2}$ नाम° (for मान°). — $^{c}$) $B_{1}$ श्रुतवंतो जितक्रोधाः; $D_{5}$ श्रुतिवित्तोपसंपन्नाः; $G_{1}$ श्रुतित्यागोप°. — $^{d}$) Ś$_{1}$ $D_{1}$ ते नराः; $B_{4}$m ते वृद्धाः; Dc ते सर्वे; $D_{5}$ संतो वै (for ते सन्तः). Ś$_{1}$ $K_{1.2}$ $B_{2.4}$ (m as in text) $Dc_{1}$ स्वर्गवासिनः. Dn $D_{4.6}$ $G_{3}$ संतः स्वर्गनिवासिनः.

**78** $^{a}$) S (except $T_{2}$ $G_{3}$) प्रथमो (for परमो). — $^{b}$) Ś$_{1}$ K $B_{4}$ $D_{1-3.5}$ धर्मशास्त्रगतोपरः. — $^{c}$) Ś$_{1}$ शिष्टाशीलाश्च; $K_{2}$ B D (except $D_{1-3}$) $G_{3}$ शिष्टाचारश्च; $T_{1}$ °चीर्णं च; $T_{2}$ शीलं चीर्णं च.

**79** $^{a}$) $B_{1}$ $D_{5}$ S (except $M_{2}$) धारणं; $B_{4}$ $Dc_{1}$ पारगं. S (except $G_{3}$) वेदानां (for विद्या°). — $^{b}$) Ś$_{1}$ तीर्थानां चाव°. — $^{d}$) $B_{1}$ सदाचारस्य दर्शनं; $B_{3}$ Dc Dn $D_{4.6}$ $G_{3}$ सतामाचारदर्शनं (Dc °लक्षणं).

**80** $^{b}$) To avoid hiatus, Ś$_{1}$ K $D_{1-3.5}$ S (except $G_{3}$ $M_{1}$) ह्यहिंसा° (for अहिंसा°). — $^{c}$) $B_{1.3}$ Dc न प्रभाषंति; $B_{2}$ Dn $D_{4.6}$ $G_{3}$ च न भाषंति. $D_{5}$ पुरुषाश्च प्रभावंतः. — $^{d}$) $B_{4}$ जनप्रियाः; Dc द्विजप्रियः; T $G_{1}$ द्विजातयः.

**81** $^{b}$) $K_{3}$ B Dc $D_{6}$ $G_{3}$ फलसंचयं; T $G_{2.4}$ $M_{2}$ सफलाश्रयं; $G_{1}$ फलसंश्रयं; $M_{1}$ फलसंगिनां. — $^{c}$) $K_{3}$ अवजानंतस्. — $^{d}$) = 83$^{d}$. $M_{2}$ ये (for ते).

**82** $M_{2}$ om. 82$^{a}$–84$^{b}$; $T_{1}$ $G_{1}$ om. (hapl.) 82–83; $G_{4}$ om. 82$^{ab}$. — $^{a}$) $M_{1}$ त्यागो° (for न्यायो°). — $^{b}$) $B_{1}$ $D_{5}$ सर्वभूत°; $T_{2}$ $G_{2}$ सर्वलोकहिते रताः; $M_{1}$ स्वर्गमार्गाभिकांक्षिणः. — $K_{3}$ om. (hapl.) 82$^{c}$–83$^{b}$. — $^{c}$) Ś$_{1}$ $K_{1}$ °जिताः. $B_{3}$ शुक्राः; Dc शुद्धाः; $T_{2}$ $G_{4}$ शक्त्याः; $G_{2}$ शक्याः (for शुक्लाः). $M_{1}$ संतः सर्वजिताकांक्षाः. — $^{d}$) $G_{2}$ संनिकृष्टा°.

**83** $T_{1}$ $G_{1}$ $M_{2}$ om. 83; $K_{3}$ om. 83$^{ab}$ (cf. v.l. 82). — $^{a}$) $D_{5}$ दातारः संग्रहीतारो. — $^{b}$) Ś$_{1}$ $K_{1.2}$ $D_{5}$ °कांक्षिणः. — B Dn $D_{4.6}$ $G_{3}$ transp. 83$^{cd}$ and 84$^{ab}$. — 83$^{d}$=81$^{d}$.

**84** $G_{4}$ $M_{2}$ om. 84$^{ab}$ (for $M_{2}$ cf. v.l. 82). B Dn $D_{4.6}$ $G_{3}$ transp. 83$^{cd}$ and 84$^{ab}$. — $^{a}$) Ś$_{1}$ $K_{1.2}$ सर्वे प्रज्ञाः शास्त्रवंतस्; $K_{3.4}$ $Dc_{2}$ $D_{2}$ $M_{1}$ सर्वे पूज्याः श्रुतवंतस्; $D_{1.5}$ श्रुतवंतः सर्वपूज्यास्; T $G_{1.2}$ संतः ($T_{2}$ $G_{2}$ सद्भिः) पूज्याः श्रद्दधानास्. — $^{c}$) B Dc Dn $D_{4.6}$ $G_{3}$ दाननिष्ठाः ($B_{3}$ $Dn_{1}$. $n_{2}$ $D_{6}$ °शिष्टाः). $B_{2}$ $G_{1}$ शुभाँल्लोकान्; $T_{2}$ स्वकाँल्लोकान्; $G_{2.4}$ शुभान्याशु. — $^{d}$) $K_{4}$ $D_{5}$ $G_{2.4}$ $M_{2}$ प्राप्नु° (for आप्नु°). Dc च प्रियं; $T_{1}$ शाश्वतं; $T_{2}$ चाश्रयान्.

**85** $^{a}$) Ś$_{1}$ K $D_{1-3}$ $T_{2}$ $G_{2}$ [अ]पि (for च). — $^{b}$) $M_{1}$ भृत्यानर्थसमा°. — $K_{3}$ om. 85$^{cd}$. — $^{c}$) $G_{2.4}$ अपि (for अति-). — $^{d}$) Ś$_{1}$ $K_{1.2.4}$ $D_{1-3.5}$ transp. सन्तः and सद्भिः.

**86** $M_{2}$ om. 86–90; $G_{4}$ om. 86$^{ab}$. — $^{a}$) Ś$_{1}$ $K_{1.2}$ प्र-; $G_{3}$ न (for च). — $^{b}$) $T_{1}$ धर्माधर्म°; $G_{1}$ धर्मात्मात्म°.

एवं सन्तो वर्तमाना एधन्ते शाश्वतीः समाः ॥ ८६
अहिंसा सत्यवचनमानृशंस्यमथार्जवम् ।
अद्रोहो नातिमानश्च ह्रीस्तितिक्षा दमः शमः ॥ ८७
धीमन्तो धृतिमन्तश्च भूतानामनुकम्पकाः ।
अकामद्वेषसंयुक्तास्ते सन्तो लोकसत्कृताः ॥ ८८
त्रीण्येव तु पदान्याहुः सतां वृत्तमनुत्तमम् ।
न द्रुह्येच्चैव दद्याच्च सत्यं चैव सदा वदेत् ॥ ८९
सर्वत्र च दयावन्तः सन्तः करुणवेदिनः ।
गच्छन्तीह सुसंतुष्टा धर्म्यं पन्थानमुत्तमम् ।
शिष्टाचारा महात्मानो येषां धर्मः सुनिश्चितः ॥ ९०
अनसूया क्षमा शान्तिः संतोषः प्रियवादिता ।
कामक्रोधपरित्यागः शिष्टाचारनिषेवणम् ॥ ९१
कर्मणा श्रुतसंपन्नं सतां मार्गमनुत्तमम् ।
शिष्टाचारं निषेवन्ते नित्यं धर्मेष्वतन्द्रिताः ॥ ९२
प्रज्ञाप्रासादमारुह्य मुह्यतो महतो जनान् ।
प्रेक्षन्तो लोकवृत्तानि विविधानि द्विजोत्तम ।
अतिपुण्यानि पापानि तानि द्विजवरोत्तम ॥ ९३
एतत्ते सर्वमाख्यातं यथाप्रज्ञं यथाश्रुतम् ।
शिष्टाचारगुणान्ब्रह्मन्पुरस्कृत्य द्विजर्षभ ॥ ९४

C. 3. 13801
B. 3. 207. 99
K. 3. 211. 40

इति श्रीमहाभारते आरण्यकपर्वणि अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

— [d]) K3. 4 B D (except D5) G3 त्वेधंते (for ए°).

**87** K3 D3 M2 om. 87 (for M2 cf. v.l. 86). — [b]) B4 D1. 5 T M1 तथा° (for अथा°). — [cd]) Ś1 K1. 2 Dc1 D4. 6 G3 [ऽ]नभिमानश्च; B Dc2 Dn नाभिमानश्च. T2 अद्रोहो गुरुभूतेषु तितिक्षा च दमः शमः.

**88** M2 om. 88 (cf. v.l. 86). — [a]) Ś1 K B2 D1–3 T2 ह्रीमंतो (for धी°). B2 बुद्धि° (for धृति°). — [c]) T2 G1. 4 अकामदोष°. — [d]) K3 B4 D1 लोकसंमताः; B2 Dn D4. 6 G3 °साक्षिणः.

**89** M2 om. 89 (cf. v.l. 86). — [a]) Ś1 K1. 2 D5 हि; T1 च; T2 G2. 4 [अ]त्र (for तु). B1–3 Dc Dn D4. 6 G3 सतामाहुः; G2. 4 पराण्याहुः. — [b]) K3. 4 B4 D1–3. 5 सतां व्रतम्; B1–3 Dc Dn D4. 6 G3 संतः पदम्. T2 G1. 4 अनुस्मरन् (for अनुत्तमम्). — [c]) B1–3 D (except D1–3. 5) G3 transp. द्रुह्येत् and चैव.

**90** M2 om. 90 (cf. v.l. 86). — [a]) Ś1 K B4 D1–3 हि (for च). — [b]) T2 करुणावेदिनस्तथा. — [c]) Dc हि (for [इ]ह). K4 Dc1 D1 ससंतुष्टा; T सुखं तुष्टा. — [d]) K2 B1. 2. 4 Dc1 Dn D2. 4–6 धर्म-; T1 सत्यं (for धर्म्यं). — G4 om. 90[e]–91[d]; D3 om. (hapl.) 90[e]–92[b]. — [f]) K2 सुनिश्चितं; K4 सनातनः; B1 Dc सुनिष्ठितः. Ś1 येषां धर्माः सुनिश्चिताः.

**91** D3 G4 om. 91 (cf. v.l. 90). — [d]) T1 °निषेविणः; T2 G2 °निषेवितः; M °निषेवितं.

**92** D3 om. 92[ab] (cf. v.l. 90). — [a]) K1 T G1. 2. 4 M1 कर्मिणः (K1 M1 °र्मणा; T2 °र्मण्याः) श्रुतसंपन्नाः; K4 B2–4 Dc Dn D1. 4. 6 G3 कर्म च (K4 B2. 3 वा; D4. 6 चा-) श्रुतसंपन्नं. ❀ Cn: कर्मणेति गौडपाठे कर्मणा श्रुतेन च संपन्नमित्यर्थः। ❀ — [b]) Ś1 K D2. 5 धर्मम् (for मार्गम्). D5 अनुव्रतं (for अनुत्तमम्). S (except G3) सतां मार्गगतास्तथा. — [c]) K4 B2 D2 G4 निषेवंतो. — [d]) B1–3 D (except D1–3. 5) G3 नित्यं धर्ममनुव्रताः.

**93** [a]) Ś1 K2–4 D1. 4 G3 प्रज्ञाप्रसादम्. Ś1 आश्रित्य (for आरुह्य). — [b]) Ś1 K1. 2 शोभंते; B Dc Dn D4. 6 G3 मुच्यंते; D1–3. 5 T2 G2 मुह्यंतो (for मुह्यतो). B1 Dc M2 जनाः; B2–4 Dn D4. 6 G3 भयात्. — [c]) Ś1 K3 Dc1 D2 T G2. 4 प्रेक्षंते; K1 Dc2 D1. 5 प्रेक्ष्यंते (K1 °ति); K2. 4 प्रेक्षंति. — [d]) K2 T2 G2. 4 M2 द्विजोत्तमाः. — B G4 om. (hapl.) 93[ef]. — [e]) T G1. 2 M दानानि (for पापानि). — [f]) S (except G3; G4 om.) द्विजवरात्मज. — After 93, K4 *repeats* 77[c]–78[d].

**94** [b]) Ś1 K D1–3. 5 यथाश्रुति. — [c]) B1. 2. 4 Dc Dn D4. 6 G3 °चारगुणं; D5 °चारं महद्; T2 °चारक्रमान्. — [d]) Ś1 K1. 2 B1. 4 द्विजोत्तम.

Colophon. — *Major parvan:* Ś1 K2 Dn2 T2 G2. 4 आरण्य. — *Sub-parvan:* G1 मार्कंडेयसमस्या; G2 °समाख्या. K3. 4 B D G3 M2 (all om. sub-parvan name) mention only पतिव्रतो(D5 धर्मव्याधो)पाख्यान. — *Adhy. name:* G1 धर्मव्याधकौशिकसंवादः; G2 कौशिकव्याधसंवादो शिष्टाचारलक्षणकथनं. — *Adhy. no.* (figures, words or both): Dn1. n3 D1 206; Dn2 205; T G1 M (M2 *sup. lin.*) 201 (M2 orig. 203); G2. 4 202. — *Śloka no.:* Dn 99; D1 41.

# १९९

C. 3. 13802
B. 3. 208. 1
K. 3. 212. 1

मार्कण्डेय उवाच ।
स तु विप्रमथोवाच धर्मव्याधो युधिष्ठिर ।
यदहं ह्याचरे कर्म घोरमेतदसंशयम् ॥ १
विधिस्तु बलवान्ब्रह्मन्दुस्तरं हि पुराकृतम् ।
पुराकृतस्य पापस्य कर्मदोषो भवत्ययम् ।
दोषस्यैतस्य वै ब्रह्मन्विघाते यत्नवानहम् ॥ २
विधिना विहिते पूर्वं निमित्तं घातको भवेत् ।
निमित्तभूता हि वयं कर्मणोऽस्य द्विजोत्तम ॥ ३
येषां हतानां मांसानि विक्रीणामो वयं द्विज ।
तेषामपि भवेद्धर्म उपभोगेन भक्षणात् ।
देवतातिथिभृत्यानां पितॄणां प्रतिपूजनात् ॥ ४
ओषध्यो वीरुधश्चापि पशवो मृगपक्षिणः ।
अन्नाद्यभूता लोकस्य इत्यपि श्रूयते श्रुतिः ॥ ५
आत्ममांसप्रदानेन शिबिरौशीनरो नृपः ।
स्वर्गं सुदुर्लभं प्राप्तः क्षमावान्द्विजसत्तम ॥ ६
राज्ञो महानसे पूर्वं रन्तिदेवस्य वै द्विज ।
द्वे सहस्रे तु वध्येते पशूनामन्वहं तदा ॥ ७
समांसं ददतो ह्यन्नं रन्तिदेवस्य नित्यशः ।
अतुला कीर्तिरभवन्नृपस्य द्विजसत्तम ।
चातुर्मास्येषु पशवो वध्यन्त इति नित्यशः ॥ ८
अग्नयो मांसकामाश्च इत्यपि श्रूयते श्रुतिः ।
यज्ञेषु पशवो ब्रह्मन्वध्यन्ते सततं द्विजैः ।

## 199

**1** $^{c}$) K$_{2}$ यद्यहं ह्या° ; K$_{4}$ D$_{1.2}$ अहं यदा° (for यदहं ह्या°). Ś$_{1}$ K$_{1}$ B$_{4}$ ह्याचरं ; K$_{3}$ Dc समाचरे (hypermetric) ; K$_{4}$ D$_{1.2.5}$ [आ]चरं ; B$_{1-3}$ Dn D$_{3.4.6}$ G$_{3}$ आचरे ; G$_{1}$ ह्यचरं (for ह्याचरे). — $^{d}$) D$_{1}$ घोररूपम् (for °मेतद्). D$_{5}$ (m as in text) अनावृतं (for असंशयम्).

**2** $^{a}$) K$_{4}$ B$_{2.4}$ विप्र (for ब्रह्मन्). — D$_{4}$ om. (hapl.) $2^{b}$–$2^{e}$. — $^{b}$) S (except G$_{3}$ M$_{2}$) पुरातनं (for पुरा कृतम्). — $^{c}$) Ś$_{1}$ K$_{1.2}$ D$_{5}$ दोषस्य (for पापस्य). — $^{e}$) B$_{2}$ शिरसा (for दोषस्य). B$_{1-3}$ Dc D$_{6}$ T$_{2}$ G$_{3}$ M$_{1}$ तस्य (for [ए]तस्य). Ś$_{1}$ K$_{2.4}$ D$_{1-3.5}$ वा ; B$_{4}$ च (for वै). — $^{f}$) Ś$_{1}$ K$_{1.2.4}$ D$_{2.3}$ (before corr.) निर्घाते ; K$_{3}$ D$_{3}$ (after corr.) T$_{2}$ निघाते ; B$_{1}$ विदित्वा ; T$_{1}$ निपाते ; G$_{2.4}$ निष्कृतौ (for विघाते). Ś$_{1}$ K$_{2}$ D$_{3.5}$ भवेत् (for अहम्).

**3** $^{a}$) Ś$_{1}$ K B$_{1.3}$ Dc Dn D$_{2-4.6}$ G$_{3}$ हि हते ; B$_{2}$ D$_{5}$ [अ]भिहते ; B$_{4}$ T$_{1}$ M$_{2}$ विहितं. — $^{b}$) B$_{1.3}$ पातको. B$_{4}$ महान् (for भवेत्).

**4** $^{a}$) D$_{5}$ तेषां ; G$_{1.4}$ M$_{1}$ एषां. T$_{1}$ मांसानां. — $^{b}$) K$_{2-4}$ D$_{2}$ M$_{1}$ विक्रीणीमो ; B$_{4}$ T$_{1}$ °णीम ; M$_{2}$ °णाम. B$_{1-3}$ Dc Dn D$_{4.6}$ G$_{3}$ विक्रीणामीह वै द्विज ; D$_{5}$ विक्रीणीमो द्विजोत्तम. — $^{c}$) B$_{1.3.4}$ T$_{1}$ G$_{1}$ M कर्म (for धर्म). — $^{d}$) B$_{1.2.4}$ Dn D$_{5.6}$ T$_{1}$ उपयोगेन. K$_{4}$ G$_{4}$ रक्षणात् ; B$_{1.3}$ Dc D$_{6}$ भक्षणम् ; Dn D$_{4}$ G$_{3}$ भक्षणे ; T$_{1}$ G$_{1}$ कर्मणा. — $^{e}$) G$_{4}$ °भूतानां. — $^{f}$) B Dc Dn D$_{4.6}$ G$_{3}$ चापि पूजनम् (B$_{4}$ °नात्) ; D$_{5}$ G$_{1}$ प्रतिपूजनम् (G$_{1}$ °ने).

**5** $^{a}$) B$_{1.3}$ D (except D$_{1-3.5}$) G$_{3}$ चैव (for चापि). — $^{c}$) K$_{1.2}$ अनादिभूता. Ś$_{1}$ भूतस्य ; B$_{2}$ भूतानाम् (for लोकस्य). — $5^{d}=9^{b}$.

**6** $^{a}$) B$_{1-3}$ Dn$_{3}$ G$_{3}$ °प्रसादेन. — $^{c}$) B$_{1.2.4}$ Dc$_{1}$ Dn D$_{4.6}$ G$_{3}$ सुदुर्गमं ; B$_{3}$ दुर्गमनं.

**7** $^{a}$) D$_{5}$ महाध्वरे. — S (except G$_{3}$) om. $7^{cd}$. — $^{c}$) K$_{1.2}$ द्वि- (for द्वे). Ś$_{1}$ K$_{2.3}$ D$_{1.5}$ वध्यंते. — $^{d}$) Ś$_{1}$ K B$_{1.3}$ Dc D$_{1-3.5}$ प्रत्यहं (for अन्वहं). K$_{4}$ Dc$_{1}$ D$_{1-3}$ सदा (for तदा). — B Dc Dn D$_{4.6}$ G$_{3}$ ins. after 7 : T G$_{1.2.4}$ M (which all om. $7^{cd}$) ins. after $7^{ab}$ :

1019* अहन्यहनि वध्येते द्वे सहस्रे गवां तथा ।

[T$_{1}$ वध्यंते ; T$_{2}$ पच्यंते ; G$_{2.4}$ पच्येते ; M$_{2}$ वर्धंते. G$_{1.2.4}$ सहस्रे द्वे (by transp.). B$_{1.3}$ Dc गवां तदा ; T G$_{1.2.5}$ M तु वै गवां.]

**8** $^{b}$) Ś$_{1}$ वै तदा ; K$_{1.2}$ B$_{1}$ नित्यदा ; D$_{1}$ धीमतः (for नित्यशः). — $^{c}$) T$_{1}$ M प्रीतिर् (for कीर्तिर्). — $^{d}$) B$_{4}$ मृगस्य ; Dc नृपतेर् (for नृपस्य). — $^{e}$) B$_{2-4}$ Dn D$_{4.6}$ G$_{3}$ °स्ये च (for °स्येषु). — K$_{3}$ om. (hapl.) $8^{f}$–$9^{c}$. — $^{f}$) Ś$_{1}$ *श्रुतिः ; K$_{1.2}$ D$_{5}$ चोच्यते (for नित्यशः).

**9** K$_{3}$ om. $9^{abc}$ (cf. v.l. 8). — $^{b}$) $=5^{d}$. Ś$_{1}$ K$_{2}$ इति च (for इत्यपि). — $^{d}$) D$_{5}$ वध्यंते श्रूयते श्रुतिः ; T$_{1}$ °ते द्विजसत्तम. — $^{e}$) K$_{4}$ सत्कृताः. Ś$_{1}$ विप्रै° (for मन्त्रै°).

संस्कृताः किल मन्त्रैश्च तेऽपि स्वर्गमवाप्नुवन् ॥ ९
यदि नैवाग्नयो ब्रह्मन्मांसकामाभवन्पुरा ।
भक्ष्यं नैव भवेन्मांसं कस्यचिद्द्विजसत्तम ॥ १०
अत्रापि विधिरुक्तश्च मुनिभिर्मांसभक्षणे ।
देवतानां पितॄणां च भुङ्क्ते दत्त्वा तु यः सदा ।
यथाविधि यथाश्रद्धं न स दुष्यति भक्षणात् ॥ ११
अमांसाशी भवत्येवमित्यपि श्रूयते श्रुतिः ।
भार्यां गच्छन्ब्रह्मचारी ऋतौ भवति ब्राह्मणः ॥ १२
सत्यानृते विनिश्चित्य अत्रापि विधिरुच्यते ।
सौदासेन पुरा राज्ञा मानुषा भक्षिता द्विज ।
शापाभिभूतेन भृशमत्र किं प्रतिभाति ते ॥ १३
स्वधर्म इति कृत्वा तु न त्यजामि द्विजोत्तम ।
पुराकृतमिति ज्ञात्वा जीवाम्येतेन कर्मणा ॥ १४
स्वकर्म त्यजतो ब्रह्मन्नधर्म इह दृश्यते ।
स्वकर्मनिरतो यस्तु स धर्म इति निश्चयः ॥ १५
पूर्वं हि विहितं कर्म देहिनं न विमुञ्चति ।
धात्रा विधिरयं दृष्टो बहुधा कर्मनिर्णये ॥ १६
द्रष्टव्यं तु भवेत्प्राज्ञ क्रूरे कर्मणि वर्तता ।
कथं कर्म शुभं कुर्यां कथं मुच्ये पराभवात् ।
कर्मणस्तस्य घोरस्य बहुधा निर्णयो भवेत् ॥ १७
दाने च सत्यवाक्ये च गुरुशुश्रूषणे तथा ।
द्विजातिपूजने चाहं धर्मे च निरतः सदा ।
अतिवादातिमानाभ्यां निवृत्तोऽस्मि द्विजोत्तम ॥ १८
कृषिं साध्विति मन्यन्ते तत्र हिंसा परा स्मृता ।

C. 3. 13824
B. 3. 208. 23
K. 3. 212. 22

— $^{f}$) G1 आप्नुयुः; G4 आप्नुयात्.

**10** D3 om. 10. — $^{a}$) K3 T G1 M2 वै ना°; Dc चैवा° (for नैवा°). Ś1 K1. 2. 4 D2. 5 मांसकामा नाभविष्यन्. — $^{b}$) Ś1 lacuna; K1. 2. 4 D2. 5 ब्रह्मन्यग्नयः पुरा; D1 T मांसकामाः पुराभवन्. — K4 om. 10$^{c}$–11$^{b}$. — $^{c}$) Ś1 न वै (for नैव). B Dc1 Dn1 D4. 6 G3 [अ]भवन् (for भवेन्).

**11** K4 om. 11$^{ab}$. — $^{a}$) D2. 3 अथा° (for अत्रा°). K3 स; S (except G3) तु (for च). — $^{b}$) T1 G1 M मुने मांसस्य भक्षणे. — $^{d}$) Ś1 K1. 2 B1. 3. 4 च; Dn D4. 6 G3 [अ]पि (for तु). — $^{e}$) Ś1 K B3 D1–3. 5 यथाशास्त्रं; B4 Dn D4. 6 यथाश्राद्धं. — $^{f}$) B2–4 Dc1 Dn D4. 6 G3 प्र- (for स). G2. 4 दूष्येत (for दुष्यति).

**12** $^{a}$) K4 भवेदेवम्. — $^{b}$) B2 इत्येषा वैदिकी श्रुतिः.

**13** $^{b}$) S (except G3 M1) तत्रापि (for अ°). — $^{c}$) B D (except D1–3. 5) G3 तदा (for पुरा). — $^{d}$) Ś1 K B2 D1–3. 5 ब्राह्मणा (for मानुषा). — $^{f}$) = (var.) 19$^{f}$, etc. Ś1 K1. 2 इति (for अत्र). Ś1 K3. 4 B1 Dn2 D6 M2 मे (for ते).

**14** T1 om. 14–19; M2 om. 14–17. — $^{a}$) K3 B Dc D3. 5 स्वकर्म. Ś1 K1. 2 स्वकर्म इति (Ś1 °र्मेति च) तत्कृत्वा. — $^{b}$) Ś1 K1 नित्यदापि (for न त्यजामि).

**15** T1 M2 om. 15 (cf. v.l. 14); Dn om. 15$^{ab}$ (!). — $^{a}$) K3. 4 B1 अधर्मस्; B2–4 T2 G1. 2. 4 M1 स्वधर्म. — D2 om. 15$^{bc}$. — $^{b}$) K3. 4 स्वधर्मम्; B1 स्वकर्म (for अधर्म). Ś1 K1. 2 B2. 3 D4–6 G1. 3 इति (for इह). K1 चोच्यते; D5 विश्रुतः (for दृश्यते). — B3 om. 15$^{cd}$. — $^{c}$) K3 B4 T2 G1. 2. 4 M1 स्वधर्मनिरतो. Ś1 K1–3 B4 D1. 5 च (for तु). K4 D3 स्वकर्मणि रतिर्या च. — $^{d}$) K4 D3 स्वधर्मं; B1. 2 Dn D4. 6 G3 (by transp.) धर्मः स.

**16** T1 M2 om. 16 (cf. v.l. 14). — $^{a}$) D5 यत्पूर्वं; G1. 2. 4 M1 कुले हि (for पूर्वं हि). — $^{b}$) G2. 4 M1 देही तनुं (for देहिनं). B1 नावमुंचति; Dc2 न विमुच्यते. — $^{c}$) T2 G1. 2. 4 M1 चायं विधिर् (for विधिरयं). — $^{d}$) Ś1 K1. 2. 4 D2. 3 कर्मसिद्धये; K3 D1. 5 °निश्चये.

**17** T1 M2 om. 17 (cf. v.l. 14); G1 om. 17$^{ab}$. — $^{a}$) Ś1 K1. 2 प्रष्टव्यं; K3 B1. 3 D (except D1–3) T2 G3 द्रष्टव्या; G2 द्रष्टव्यस्. B1. 3 D (except D1–3) G3 प्रज्ञा; B2. 4 T2 G2. 4 M1 ब्रह्मन्. — $^{b}$) K2 T2 वर्तते; D5 वर्ततां. G2. 4 M1 धर्मो धर्मविनिश्च(M1 °र्ण)ये. — $^{c}$) G1. 2 कुर्यात्. — $^{d}$) G1. 2 मुच्येत्. Dc कथं मुक्तिः परा स्मृता. — $^{e}$) Ś1 K D1–3. 5 ह्यस्य (for तस्य).

**18** T1 om. 18 (cf. v.l. 14). — $^{ab}$) Ś1 K D1–3. 5 दानेन °वाक्येन °षया तथा (D5 °षणेन च). — $^{c}$) K4 °पूजनाच्चाहं; B2 °पूजा लभते; D1. 3. 5 °पूजनेनाहं. — $^{d}$) B2 चात्र रतः (for च निरतः). — $^{e}$) Ś1 अभिवादाति°; K1 अतिवाचभि°; K2 अतिवाचत°; B1. 2. 4 Dn D4. 6 G3 अभिमानातिवादाभ्यां; B3 अतिवादाभिमानाभ्यां. — $^{f}$) G1 निवृत्तो द्विजसत्तम.

**19** T1 om. 19 (cf. v.l. 14); D5 om. 19$^{ab}$. — $^{a}$) B M2 साध्वीति. — $^{c}$) K1. 2 कृष्यंतो. B1 मर्त्या; G2. 4 उर्वीं; M2 विप्र (for पुंसो). K3. 4 D1–3. 5 T2 G1. 2. 4 M1 कृषंतो लांगलैर्मर्त्या (T2 °लैरुर्वीं; G1 M1 °लैर्विप्र). — $^{e}$)

C. 3. 13825
B. 3. 208. 23
K. 3. 212. 23

कर्षन्तो लाङ्गलैः पुंसो घ्नन्ति भूमिशयान्बहून् ।
जीवानन्यांश्च बहुशस्तत्र किं प्रतिभाति ते ॥ १९
धान्यबीजानि यान्याहुर्व्रीह्यादीनि द्विजोत्तम ।
सर्वाण्येतानि जीवानि तत्र किं प्रतिभाति ते ॥ २०
अध्याक्रम्य पशूंश्चापि घ्नन्ति वै भक्षयन्ति च ।
वृक्षानथौषधीश्चैव छिन्दन्ति पुरुषा द्विज ॥ २१
जीवा हि बहवो ब्रह्मन्वृक्षेषु च फलेषु च ।
उदके बहवश्चापि तत्र किं प्रतिभाति ते ॥ २२
सर्वं व्याप्तमिदं ब्रह्मन्प्राणिभिः प्राणिजीवनैः ।
मत्स्या ग्रसन्ते मत्स्यांश्च तत्र किं प्रतिभाति ते ॥ २३
सत्त्वैः सत्त्वानि जीवन्ति बहुधा द्विजसत्तम ।
प्राणिनोऽन्योन्यभक्षाश्च तत्र किं प्रतिभाति ते ॥ २४
चङ्क्रम्यमाणा जीवांश्च धरणीसंश्रितान्बहून् ।
पद्भ्यां घ्नन्ति नरा विप्र तत्र किं प्रतिभाति ते ॥ २५
उपविष्टाः शयानाश्च घ्नन्ति जीवाननेकशः ।
ज्ञानविज्ञानवन्तश्च तत्र किं प्रतिभाति ते ॥ २६
जीवैर्ग्रस्तमिदं सर्वमाकाशं पृथिवी तथा ।
अविज्ञानाच्च हिंसन्ति तत्र किं प्रतिभाति ते ॥ २७
अहिंसेति यदुक्तं हि पुरुषैर्विस्मितैः पुरा ।
के न हिंसन्ति जीवान्वै लोकेऽस्मिन्द्विजसत्तम ।
बहु संचिन्त्य इह वै नास्ति कश्चिदहिंसकः ॥ २८
अहिंसायां तु निरता यतयो द्विजसत्तम ।

---

$K_{3.4}$ $D_{1-3.5}$ S (except $G_3$; $T_1$ om.) सु- (for च). $Ś_1$ $K_{1.2}$ बीजान्यन्यानि ब°. — $K_1$ om. $19^f$–$20^a$. — $^f$) = (var.) $13^f$; = $20^d$ etc. $K_2$ B Dc $D_3$ $M_2$ मे (as in old printed ed. !) (for ते). — After 19, $B_2$ reads 24, *repeating* it in its proper place.

**20** $K_1$ om. $20^a$ (cf. v.l. 19); $K_3$ om. (hapl.) 20. — $^a$) $B_1$ $G_{1.2}$ धान्यजीवानि. — $^b$) $G_{2.4}$ तृणा° (for व्रीह्या°). — $^c$) $Ś_1$ $K_{1.2}$ भूतानि; $G_{2.4}$ जीवा हि; $M_2$ बीजानि (for जीवानि). — $^d$) = (var.) $13^f$; = $19^d$ etc. B Dc मे (as in old printed ed. !) (for ते).

**21** $^a$) $K_{1.2}$ अपाक्रम्य; $K_3$ $G_{2.4}$ अप्या°; $K_4$ अथ वान्य-; $Dc_1$ $Dn_3$ $D_{4.6}$ $T_2$ आध्याक्रम्य; $D_2$ अध्यारुह्य; $D_3$ अभ्याक्रम्य; $T_1$ बुध्या°. $Ś_1$ K $B_4$ $D_{1-3.5}$ चैव (for चापि). — $D_5$ om. (hapl.) $21^{bc}$. — $^b$) $K_{1.2}$ वै (for च). — $^c$) B Dc Dn $D_{1.4.6}$ $G_3$ वृक्षांस्तथौषधीश्चापि ($B_4$ °श्चैव); $D_3$ (marg. *sec. m.*) वृक्षान्महौषधीश्चैव. — $^d$) $K_1$ गच्छंति (for छिन्दन्ति). $G_4$ छिंदंतो भक्षयंति च (cf. $21^b$).

**22** $^a$) $T_1$ जीवाश्च; $T_2$ $M_2$ °पि; $G_{2.4}$ °नि (for जीवा हि). $T_2$ $G_{2.4}$ बहुशो (for बहवो). $D_1$ राजन्; $T_1$ विप्र (for ब्रह्मन्). — $D_2$ om. (hapl.) $22^b$–$23^a$; $G_4$ om. $22^{cd}$. — $^d$) $B_{2-4}$ $Dc_2$ मे (as in old printed ed. !) (for ते).

**23** $D_2$ om. $23^a$ (cf. v.l. 22); $T_1$ M om. (hapl.) 23–24. — $^a$) $T_2$ $G_{1.2.4}$ जगदिदं (for इदं ब्रह्मन्). — $^b$) $Ś_1$ $K_{1-3}$ $B_{1.2}$ $D_{4.6}$ $G_{2.3}$ प्राणजीवनैः. — $^c$) $B_{2-4}$ D (except $D_{1-3.5}$) $G_3$ transp. मत्स्याः and मत्स्यान्. $Ś_1$ K ग्रसंति. — $^d$) $B_{2.3}$ Dc मे (for ते).

**24** $K_2$ $D_2$ T $G_{1.4}$ M om. 24 (for $T_1$ M cf. v.l. 23). — $^a$) $G_2$ जीवैर्जीवा हि जीवंति. — $^d$) $B_{2-4}$ $Dn_1$ मे (for ते).

**25** $^a$) $Dn_2$ $D_6$ $G_3$ चंक्रम्यमाणाञ्. $Ś_1$ $K_{1.2}$ जीवाश्च. — $^b$) T धरणीं. $D_5$ अपि (for बहून्). $Ś_1$ $K_1$ धरणीं संश्रिता द्विज; $K_3$ धरणीसंभृतान्बहून्. — $^c$) $Ś_1$ तांस्तु; $D_5$ S (except $G_3$) ब्रह्मन् (for विप्र). — $^d$) $B_{2-4}$ Dc मे (for ते).

**26** $D_3$ om. 26–27; $D_2$ om. 26. — $^a$) $B_1$ $G_1$ उपविष्टाञ्छयानांश्च. — $^b$) $K_3$ चैतान् (for जीवान्). $Ś_1$ $K_{1.2}$ अशेषतः; $K_{3.4}$ $D_5$ अचेतसः; $D_1$ असंशयं (for अनेकशः). — $^c$) $T_1$ विज्ञानतस्तथाज्ञानं; $T_2$ $G_{1.2.4}$ अज्ञानादथ वा ज्ञानात्; M विजानंतस्तथाज्ञानात्. — $^d$) $B_{2-4}$ Dc $Dn_2$ मे (for ते).

**27** $D_{3.6}$ $T_1$ om. 27 (for $D_3$ cf. v.l. 26); $G_4$ om. $27^a$–$28^b$. — $^a$) $Ś_1$ $K_{1.2}$ जनैर् (for जीवैर्). $Ś_1$ K $D_{1.2.5}$ व्याप्तम् (for ग्रस्तम्). — $T_2$ $G_2$ om. $27^{cd}$. — $^c$) $K_{1.2}$ $D_1$ °ज्ञानाश्च. $M_1$ एकैकं च विहिंसंति. — $^d$) $B_{2-4}$ $Dc_2$ मे (for ते).

**28** $G_4$ om. $28^{ab}$ (cf. v.l. 27). — $^a$) $G_1$ हिंसंतीति (for अहिंसेति). — $^b$) $T_1$ च स्मृतैः; $G_1$ विस्तृतैः; $M_2$ विस्मृतैः (for विस्मितैः). — $^c$) $Ś_1$ $K_{1-3}$ $D_{1-3.5}$ को; $G_1$ ते (for के). $K_2$ नु (for न). $Ś_1$ $K_{1-3}$ $D_{1-3.5}$ हिंसति. S (except $G_3$) जीवांश्च. — $^e$) K $D_{2.3}$ इह; $D_1$ इति (for बहु). $T_1$ $G_2$ M संचित्यम्. $K_{1.2}$ B Dc Dn $D_{4.6}$ $G_3$ इति; $K_{3.4}$ $D_{1-3}$ बहु (for इह). $Ś_1$ इह संचित्यमानोपि.

**29** $^a$) $G_{1.2.4}$ अहिंसाधर्मनिरता. — $^c$) $Ś_1$ $K_1$ कुर्वतेव; $K_2$ °ते न (for °न्त्येव). $T_1$ M कुर्वतामपि हिंसा च; $G_{2.4}$ तेषामपि हि सा ब्रह्मन्. — $^d$) $T_1$ अल्पतरो; $M_2$ °परा. $G_2$ [अ]भवत् (for भवेत्).

कुर्वन्त्येव हि हिंसां ते यत्नादल्पतरा भवेत् ॥ २९
आलक्ष्याश्चैव पुरुषाः कुले जाता महागुणाः ।
महाघोराणि कर्माणि कृत्वा लज्जन्ति वै न च ॥ ३०
सुहृदः सुहृदोऽन्यांश्च दुर्हृदश्चापि दुर्हृदः ।
सम्यक्प्रवृत्तान्पुरुषान्न सम्यगनुपश्यतः ॥ ३१
समृद्धैश्च न नन्दन्ति बान्धवा बान्धवैरपि ।
गुरूंश्चैव विनिन्दन्ति मूढाः पण्डितमानिनः ॥ ३२
बहु लोके विपर्यस्तं दृश्यते द्विजसत्तम ।
धर्मयुक्तमधर्मं च तत्र किं प्रतिभाति ते ॥ ३३
वक्तुं बहुविधं शक्यं धर्माधर्मेषु कर्मसु ।
स्वकर्मनिरतो यो हि स यशः प्राप्नुयान्महत् ॥ ३४

इति श्रीमहाभारते आरण्यकपर्वणि एकोनद्विशततमोऽध्यायः ॥ १९९ ॥

# २००

मार्कण्डेय उवाच ।
धर्मव्याधस्तु निपुणं पुनरेव युधिष्ठिर ।
विप्रर्षभमुवाचेदं सर्वधर्मभृतां वरः ॥ १
श्रुतिप्रमाणो धर्मो हि वृद्धानामिति भाषितम् ।

C. 3. 13843
B. 3. 209. 2
K. 3. 213. 2

**30** a) Ś$_1$ आलक्षाश्चैव; $K_2$ अलक्ष्म्या°; $K_3$ $B_3$ $Dc_2$ $D_{1. 3. 5}$ अलक्ष्या° ($D_1$ °क्षा°); $B_4$ आलक्ष्याश्चापि; $T_1$ $G_4$ अलक्षितोपि ($G_4$ °ता हि); $T_2$ $G_{1. 2}$ M आलक्षिता हि ($M_2$ °तापि). $T_1$ पुरुषः. — b) $T_1$ कुले जातो °गुणः. — M om. $30^c$–$31^d$. — c) $K_4$ (m as in text) कार्याणि; $D_2$ सर्वा° (for कर्मा°). — d) $K_{1. 2}$ $D_3$ T $G_3$ (after corr.). 4 नैव च; $B_1$ चैव ह; $B_2$ $Dn_2$. $n_3$ (marg. *sec. m.* as in text) वै द्विज; Dc वै नृपाः; $D_4$ $G_3$ (before corr.) वै नृप (for वै न च).

**31** M om. 31 (cf. v.l. 30). — a) $D_5$ दुर्हृदो (for सुहृदो). $B_2$ सुहृदोसुहृदोन्यांश्च. — b) $K_2$ $B_2$ $D_5$ T $G_{2. 4}$ सुहृदश्चापि (for दुर्हृद°). — c) $K_3$ सम्यक्प्रवृत्ताः पुरुषा. — d) Ś$_1$ $K_1$ $D_{2. 4}$ अनुपश्यत ($D_2$ °ते). $K_3$ $D_{1. 5}$ $G_1$ असम्यगनुपश्यतः ($D_1$ °श्य च; $G_1$ °श्यति); $K_4$ स सम्यगनु-दृश्य च; Dc सम्यगर्थं न पश्यतः; $T_1$ सम्यगेवानुपश्यतः; $T_2$ $G_{2. 4}$ सम्यगेव न पश्यति.

**32** a) Ś$_1$ K $D_{1-3}$ सु($D_1$ अ)समृद्धैर्न; $M_2$ स समृद्धैश्च. Ś$_1$ $K_1$ निंदंति; $B_2$ निंद्यंते. $T_2$ सम्यश्चैश्च (sic) न लज्जंति; $G_1$ स्वस्थानात्प्रच्याविताः स्युर्. — Ś$_1$ $K_1$ om. (hapl.) $32^{bc}$. — c) $B_4$ अपि; T $G_{1. 2}$ चापि (for चैव). Dc गुरूंश्चैव विनिघ्नंति; $G_4$ °श्च नापि नंदंति; M °श्चैवाभिनंदंति. — d) $B_4$ शीघ्रं; $D_5$ मूर्खाः. S (except $G_3$) मूढा निश्चितमानिनः ($T_1$ °निनं; $M_1$ °नसाः).

**33** a) $G_4$ M लोकं. $B_{2. 4}$ [ऽ]पि (for वि-). — b) Ś$_1$ $D_5$ चेह; $K_{1. 2}$ चैव (for द्विज-). — c) $D_1$ अयुक्तं; $D_2$ $M_1$ अधर्म्यं; $G_1$ अधर्मश्च. — d) $B_{2. 4}$ मे (for ते).

**34** a) Ś$_1$ K $D_{1-3. 5}$ transp. वक्तुं and शक्यं. — b) Ś$_1$ $K_{1. 2}$ $D_{1. 3}$ $M_1$ धर्म्याधर्म्ये($K_2$ °र्मे)षु. — After $34^{ab}$, $G_1$ ins.:

1020* वेदधर्माविरुद्धं यत्प्रमाणैः प्रतितं शुभम् ।

— $G_1$ om. $34^{cd}$. — c) $K_4$ $D_2$ $G_4$ स्वधर्म°. — d) $M_2$ संशमं (for स यशः). $G_4$ नरः (for महत्).

Colophon. — *Major parvan:* $K_2$ $T_2$ $G_{2. 4}$ आरण्य; $Dc_2$ वन (!). — *Sub-parvan:* $G_1$ मार्कंडेयसमस्या. Ś$_1$ $K_{1. 2}$ $D_5$ (all om. sub-parvan name) mention only धर्मव्याधो($K_1$ $D_5$ व्याधो)पाख्यान; $K_{3. 4}$ B Dc Dn $D_{1-4. 6}$ $G_3$ $M_2$, likewise, only पतिव्रतोपाख्यान. — *Adhy. name:* Ś$_1$ हिंसानिर्णयः; $G_1$ धर्मव्याधकौशिकसंवादः. — *Adhy. no.* (figures, words or both): $Dn_1$ (*sup. lin.*). $n_3$ $D_1$ 207; $Dn_2$ 206; $T_1$ $G_1$ M ($M_2$ *sup. lin.*) 202 ($M_2$ orig. 204); $T_2$ 201; $G_{2. 4}$ 203. — *Śloka no.:* Dn 39.

## 200

**1** a) $K_4$ B $D_{4. 6}$ $G_3$ निपुणः. — d) Ś$_1$ $B_3$ सर्वधर्म-विदां; $D_2$ सर्वं धर्मभृतां; $D_5$ धर्म्यं धर्म°. $K_{2-4}$ $B_{1-3}$ $D_{4. 5}$ वर. $B_4$ सर्वभूतहिते रतः.

**2** Before 2, Ś$_1$ $K_2$ $G_1$ ins. धर्मव्याधः; $K_{1. 3. 4}$ B D T $G_{2. 3}$ M व्याध उ° (resp. व्याधः). — a) $B_{1-3}$ Dc Dn $D_{4. 6}$ $T_2$ $G_3$ [ऽ]यं; $G_4$ च (for हि). Ś$_1$ K $D_{1-3. 5}$

C. 3. 13843
B. 3. 209. 2
K. 3. 213. 2

सूक्ष्मा गतिर्हि धर्मस्य बहुशाखा ह्यनन्तिका ॥ २
प्राणात्यये विवाहे च वक्तव्यमनृतं भवेत् ।
अनृतं च भवेत्सत्यं सत्यं चैवानृतं भवेत् ॥ ३
यद्भूतहितमत्यन्तं तत्सत्यमिति धारणा ।
विपर्ययकृतोऽधर्मः पश्य धर्मस्य सूक्ष्मताम् ॥ ४
यत्करोत्यशुभं कर्म शुभं वा द्विजसत्तम ।
अवश्यं तत्समाप्नोति पुरुषो नात्र संशयः ॥ ५
विषमां च दशां प्राप्य देवान्गर्हति वै भृशम् ।
आत्मनः कर्मदोषाणि न विजानात्यपण्डितः ॥ ६
मूढो नैकृतिकश्चापि चपलश्च द्विजोत्तम ।
सुखदुःखविपर्यासो यदा समुपपद्यते ।
नैनं प्रज्ञा सुनीतं वा त्रायते नैव पौरुषम् ॥ ७
यो यमिच्छेद्यथा कामं तं तं कामं समश्नुयात् ।
यदि स्यादपराधीनं पुरुषस्य क्रियाफलम् ॥ ८
संयताश्चापि दक्षाश्च मतिमन्तश्च मानवाः ।
दृश्यन्ते निष्फलाः सन्तः प्रहीणाः सर्वकर्मभिः ॥ ९
भूतानामपरः कश्चिद्धिंसायां सततोत्थितः ।
वञ्चनायां च लोकस्य स सुखेनेह जीवति ॥ १०
अचेष्टमानमासीनं श्रीः कंचिदुपतिष्ठति ।
कश्चित्कर्माणि कुर्वन्निह न प्राप्यमधिगच्छति ॥ ११

---

श्रुतिः प्रमाणं धर्मस्य. — $^{b}$) T1 M2 इह ; T2 G2. 4 अभि- (for इति). D5 शासनं (for भाषितम्). Ś1 K1. 2 B1–3 Dc Dn D4. 6 G3 इति वृद्धानुशासनं. — $^{d}$) K2 ह्यनंत्यका ; K4 D1. 2 T2 G1 M2 ह्यनंतका (T2 °ता) ; G2. 4 ह्यनिंदिता.

**3** $^{a}$) K3 B D (except D1–3. 5) T1 G3. 4 M2 प्राणांतिके ; K4 प्राणव्यये. B1 विवादे. — $^{b}$) Ś1 कर्तव्यम् (for वक्तव्यम्). D2 चरेत् (for भवेत्). — K1 om. (hapl.) $3^{cd}$. — $^{c}$) K4 B Dc Dn D4. 6 T1 G1. 3 M अनृतेन ; D5 अनृतं वै. G1 M वदेत् (for भवेत्). — $^{d}$) K3. 4 B2. 4 D1 सत्ये चैव ; B1. 3 Dc Dn D4. 6 T1 G1. 3 M सत्येनैव (for सत्यं चैव). T1 G1 M वदेत् (for भवेत्).

**4** $^{a}$) Dc अत्यर्थं. — $^{b}$) B4 धर्मिणां ; D4 T2 M2 धारणात् ; D5 सत्तम. — $^{c}$) G2 विपर्यास°. — After 4, G2 ins.:

1021* यत्करोत्यशुभं कर्म पश्य धर्मस्य सूक्ष्मताम् ।

**5** $^{a}$) Ś1 K D1–3. 5 यः (for यत्). T1 [अ]शुचि (for [अ]शुभं). — $^{b}$) Dn G3 यदि (for द्विज-). T G1. 2. 4 M शुभं वापि द्विजोत्तम. — After $5^{ab}$, T1 ins.:

1022* अस्य कर्तुर्गतिं सर्वां वक्ष्यामि द्विजसत्तम ।

— $^{c}$) T1 भक्षयन् (for अवश्यं). Ś1 K D1–3. 5 फलमाप्नोति ; G4 तमवा°.

**6** G2 om. $6^{a}$–$7^{b}$. — $^{a}$) B1 हि ; T G1. 4 M2 तु (for च). B1 Dn प्राप्तो (for प्राप्य). — $^{b}$) B1. 4 देवं ; G1 देशान्. K1–3 D2 M1 गर्हति वै ; B4 गर्हयते ; D1. 5 अर्हति वै. — $^{c}$) T1 कर्मणः (for आत्मनः). Ś1 K2 °दोषैर्हि ; K1 °दोषं हि ; K4 D2. 3 °दोषान्वै ; B2. 3 °दोषांश्च ; B4 °दोषं तु ; D1 °दोषं वै ; D5 °दोषत्वं ; T G1. 2 M °दोषेण ; G4 °दोषाणां. — $^{d}$) Dc च जानाति (for विजा°). Ś1 K B2 D1. 2. 5 न वि(D1 नैव)जानंत्यपंडिताः.

**7** G2 om. $7^{ab}$ (cf. v.l. 6). — $^{a}$) Dn2. n3 D1 नैष्कृतिक°. Ś1 K2 D5 मूढा नैकृतिकाश्चापि (D5 °श्चैव). — $^{b}$) Ś1 K2 D5 चपलाश्च. K2 Dc2 D2. 4 °त्तमः. K1 चपला द्विजसत्तम. — T G1. 4 M ins. after 7 : G2 (which om. $6^{a}$–$7^{b}$) ins. after 5 :

1023* शुभं बध्नाति वै कर्म पुरुषः पापनिश्चयः ।

[T1 आशु (for शुभं). M अशुभं कर्म वै कर्म (M1 °र्म बध्नाति).]

— $7^{cdef}$ = (var.) B. 12. 331. 1. — $^{c}$) K3. 4 °विपर्ययैर् ; B1 D3 T1 G1 M °सैर् ; B2–4 Dc2 D2 °से ; Dn °सान् (!) ; D1 °सं ; D4. 6 G3 °साद्. — $^{d}$) B4 Dn सदा (for यदा). G4 समभिपद्यते. — $^{e}$) T1 दैवं ; G1 नैतं ; G2 एनं. Dn1 M2 प्रजा. T2 G2. 4 सुनीतिर्. — $^{f}$) Ś1 K D1–3. 5 न च (for नैव). T1 G1 M त्राति नैव च पौरुषं.

**8** $^{a}$) K3. 4 D2. 3 यं (for यो). — $^{b}$) K2 तं ते ; T1 ततः ; G1 M1 तथा ; G2. 4 स तं (for तं तं). Ś1 K2. 3 D2 उपाश्नुयात् ; K1. 4 B3. 4 D1. 3 अवाप्नुयात् ; B1. 2 Dn D4. 6 G3 स आप्नुयात् ; Dc M1 समाप्नु° ; D5 उपाश्नुते ; G1 समश्नुते (for °यात्). — $^{c}$) Ś1 K1. 2. 4 D1–3. 5 G2. 4 यदि स्यान्न (G4 °न्ना-) परा°. — $^{d}$) B2 Dn D4. 6 T1 G3 पौरुष°.

**9** $^{c}$) T2 निष्कुलाः ; some MSS. निःफलाः. — $^{d}$) Ś1 K1. 2 प्रहीनाः. K3. 4 D1. 5 °कर्मसु.

**10** $^{b}$) Ś1 K2 सततोद्यतः ; K1 अपरोद्यतः. — $^{d}$) K4 D5 T G1. 2. 4 M1 सुखेनैव (D5 °न हि). T G4 M2 जीर्यंते ; G1. 2 युज्यते (for जीवति). B Dc Dn D4. 6 G3 स सुखी जीवते सदा (B4 सुखेनैवेह जीवति).

**11** $^{a}$) B1–3 D (except D1–3. 5) G3 अचेष्टमपि चासीनं. — $^{b}$) Ś1 K1. 2 B2 D5 °तिष्ठते ; B1 °सर्पति ; B3 Dc °गच्छति. — $^{c}$) Ś1 K D1–3. 5 कुर्वाणो ; B3 गच्छंति (for कुर्वन्निह). B4 कस्यचित्कुर्वतः कर्म. — $^{d}$) K3 G2 M न प्राश्यम् ; K4 B1. 2

देवानिष्ट्वा तपस्तप्त्वा कृपणैः पुत्रगृद्धिभिः ।
दशमासधृता गर्भे जायन्ते कुलपांसनाः ॥ १२
अपरे धनधान्यैश्च भोगैश्च पितृसंचितैः ।
विपुलैरभिजायन्ते लब्धास्तैरेव मङ्गलैः ॥ १३
कर्मजा हि मनुष्याणां रोगा नास्त्यत्र संशयः ।
आधिभिश्चैव बाध्यन्ते व्याधैः क्षुद्रमृगा इव ॥ १४
ते चापि कुशलैर्वैद्यैर्निपुणैः संभृतौषधैः ।
व्याधयो विनिवार्यन्ते मृगा व्याधैरिव द्विज ॥ १५
येषामस्ति च भोक्तव्यं ग्रहणीदोषपीडिताः ।
न शक्नुवन्ति ते भोक्तुं पश्य धर्मभृतां वर ॥ १६
अपरे बाहुबलिनः क्लिश्यन्ते बहवो जनाः ।
दुःखेन चाधिगच्छन्ति भोजनं द्विजसत्तम ॥ १७

इति लोकमनाक्रन्दं मोहशोकपरिप्लुतम् ।
स्रोतसासकृदाक्षिप्तं ह्रियमाणं बलीयसा ॥ १८
न म्रियेयुर्न जीर्येयुः सर्वे स्युः सार्वकामिकाः ।
नाप्रियं प्रतिपश्येयुर्वशित्वं यदि वै भवेत् ॥ १९
उपर्युपरि लोकस्य सर्वो गन्तुं समीहते ।
यतते च यथाशक्ति न च तद्वर्तते तथा ॥ २०
बहवः संप्रदृश्यन्ते तुल्यनक्षत्रमङ्गलाः ।
महच्च फलवैषम्यं दृश्यते कर्मसंधिषु ॥ २१
न कश्चिदीशते ब्रह्मन्स्वयंग्राहस्य सत्तम ।
कर्मणां प्राकृतानां वै इह सिद्धिः प्रदृश्यते ॥ २२
यथा श्रुतिरियं ब्रह्मञ्जीवः किल सनातनः ।
शरीरमध्रुवं लोके सर्वेषां प्राणिनामिह ॥ २३

C. 3. 13865
B. 3. 209. 23
K. 3. 213. 24

---

Dc $D_1$ नाप्राप्यम्; $B_4$ न चार्थम् (for न प्राप्यम्).

**12** $^{b}$) $K_1$ °कर्मभिः; $K_2$ $D_5$ °गृद्धिभिः; $K_4$ $T_2$ $G_{1.2.4}$ $M_1$ °गृध्नुभिः. — $^{c}$) Ś$_1$ $K_{1.2.4}$ $B_4$ $D_{1-3}$ दश मासान्; $B_{2.3}$ °मासं (for °मास-). S (except $G_3$) गर्भा.

**13** $Dc_2$ om. $13^{ab}$. — $^{b}$) $B_4$ कोपैश्च; $G_2$ भोग्यैश्च. — $^{c}$) $K_3$ $G_4$ अपि; $D_3$ चापि; $D_1$ अधि-; $T_1$ अथ (for अभि-). — $^{d}$) Ś$_1$ $K_{1.2}$ लब्धा; $T_1$ $G_4$ बद्धास्. $T_1$ $G_4$ इव (for एव). — After 13, S (except $G_3$) ins.:

1024* न देहजा मनुष्याणां व्याधयो द्विजसत्तम ।

**14** $^{a}$) $D_{5.6}$ $G_3$ कर्मजो; $T_2$ कर्मात्मा. — $^{b}$) $B_1$ Dc भोगा; $D_{5.6}$ $T_2$ $G_3$ रोगो (for रोगा). — $T_1$ $M_2$ om. $14^{c}$–$15^{d}$. — $^{c}$) $G_1$ $M_1$ व्याधिभिश्च. The old printed ed. read व्याधयो विनिवार्यंते, which was *not* found in any MS. — $^{d}$) $T_2$ $G_{1.2.4}$ $M_1$ व्यालैः.

**15** $T_1$ $M_2$ om. 15 (cf. v.l. 14). — $^{a}$) $K_1$ वैद्ये; $K_2$ $Dn_3$ वेद्यैर्; $G_2$ वंद्यैर्. — $^{b}$) Ś$_1$ विपुलैः (for निपुणैः). — $^{c}$) $K_3$ विनिवर्तंते. — $^{d}$) Ś$_1$ $K_{1.3.4}$ Dc $D_{2.3}$ $T_2$ $G_1$ मृगव्याधैर् ($T_2$ °लैर्). $K_{3.4}$ $D_{1-3.5}$ द्विपाः (for द्विज).

**16** $^{a}$) $K_2$ $G_4$ एषाम्; $T_1$ तेषाम्. — $^{b}$) S (except $G_3$) °रोग° (for °दोष°). — $^{c}$) Dc ते दोषं; $D_1$ भोक्तव्यं; $T_1$ भोक्तुं च (for ते भोक्तुं). — $^{d}$) S (except $G_3$) चेष्टितुं पूर्वकर्मणा (T °तुं पुण्यकर्मणः; M °तं पश्य कर्मणः).

**17** $T_1$ $M_2$ om. 17. — $^{a}$) Ś$_1$ $K_{1.2.4}$ $D_{1-3.5}$ वह्नि° (for बाहु°). — $^{b}$) $K_2$ $B_{2.3}$ Dn $D_{2.4.6}$ $G_3$ क्लिश्यंति; $K_4$ दृश्यंते; $B_1$ तुष्यंति.

**18** $^{a}$) $B_4$ $T_2$ °क्रांतं (for °क्रन्दं). — $^{b}$) $B_1$ मोहशोकपरायणं; $B_4$ $T_1$ $G_{1.2.4}$ M देह($B_4$ मोह-; $T_1$ देव)शंकापरिप्लुतं. — $^{c}$) $K_3$ कालेन; $K_4$ $B_2$ Dc $D_{1-3}$ श्रोतसा. $K_3$ आसक्तं; $K_4$ $D_{1-3}$ आकृष्टं. — $^{d}$) Ś$_1$ $K_{1.3}$ ह्रियमानं; $T_1$ प्रीयमाणं. Ś$_1$ $K_{1.2.4}$ $D_{1-3.5}$ विलोकय (for बली°).

**19** $^{a}$) Ś$_1$ $K_{3.4}$ $B_3$ $D_{1-3.5}$ $G_4$ $M_1$ जीवेयुर्. — $G_4$ om. (hapl.) $19^{bc}$. — $^{b}$) $K_{2.4}$ $B_3$ Dn $D_{3-6}$ $G_3$ सर्वकामिकाः; $T_1$ स्वर्ग°. — $^{d}$) $T_1$ वश्यं च; $G_1$ स्वयशो; $G_{2.4}$ विधिश्च; $M_1$ स्ववशो; $M_2$ वशं च (for वशित्वं). $G_{2.4}$ नो (for वै).

**20** $^{a}$) $M_1$ लोकोयं (for लोकस्य). — $^{b}$) Ś$_1$ K $B_4$ $D_{1-3.5}$ अभीप्सते (for समीहते). — $^{d}$) $K_4$ $D_{3.5}$ यथा. $T_1$ न तथा वर्तते च तत्.

**21** $^{a}$) $G_1$ वस्तव: (for बहवः). — $^{c}$) $B_{2.4}$ Dn $D_{4.6}$ $G_3$ तु (for च). Ś$_1$ फलवैफल्यं. — $^{d}$) $B_4$ सर्वकर्मसु; $D_5$ S (except $G_3$) कर्मसिद्धिषु. — After 21, $D_{1-3}$ ins.:

1025* वहन्ति शिबिकामन्ये यान्त्यन्ये शिबिकागताः ।

**22** $^{a}$) $K_3$ $B_{2.3}$ D (except $D_5$) $G_3$ केचिद् (for कश्चिद्). Ś$_1$ $K_{1.2.4}$ $D_5$ $G_{2.4}$ दृश्यते; $B_1$ गीयते; T $G_1$ $M_1$ ईहते (for ईशते). — $^{b}$) $K_4$ $B_2$ $Dc_1$ $Dn_1$. $n_2$. $n_3$ (before corr.) $D_{2-6}$ $M_2$ °ग्राह्यस्य; $G_{1.2}$ °ग्राहश्च. $G_4$ संग्रहे (for सत्तम). — $^{c}$) $K_3$ $Dc_1$ $Dn_1$. $n_2$ $D_4$ T $G_{3.4}$ कर्मणा-. $B_4$ $D_1$ $T_2$ $G_{2.4}$ $M_2$ प्रकृ°. Ś$_1$ $K_{1.2.4}$ $D_{1.3.5}$ हि (for वै). — $^{d}$) Dc देहसिद्धिः; $T_1$ इह संधिः.

**23** $^{a}$) T $G_{2.4}$ तथा.

अद्भुतस्य प्रिया भार्या तस्याः पुत्रो विद्रूरथः ।
यावन्तः पावकाः प्रोक्ताः सोमास्तावन्त एव च ॥ २५
अत्रेश्चाप्यन्वये जाता ब्रह्मणो मानसाः प्रजाः ।
अत्रिः पुत्रान्स्रष्टुकामस्तानेवात्मन्यधारयत् ।
तस्य तद्ब्रह्मणः कायान्निर्हरन्ति हुताशनाः ॥ २६
एवमेते महात्मानः कीर्तितास्तेऽग्नयो मया ।
अप्रमेया यथोत्पन्नाः श्रीमन्तस्तिमिरापहाः ॥ २७
अद्भुतस्य तु माहात्म्यं यथा वेदेषु कीर्तितम् ।
तादृशं विद्धि सर्वेषामेको ह्येष हुताशनः ॥ २८
एक एवैष भगवान्विज्ञेयः प्रथमोऽङ्गिराः ।
बहुधा निःसृतः कायाज्ज्योतिष्टोमः क्रतुर्यथा ॥ २९
इत्येष वंशः सुमहानग्नीनां कीर्तितो मया ।
पावितो विविधैर्मन्त्रैर्हव्यं वहति देहिनाम् ॥ ३०

इति श्रीमहाभारते आरण्यकपर्वणि द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥

# २१३

मार्कण्डेय उवाच ।
अग्नीनां विविधो वंशः कीर्तितस्ते मयानघ ।
शृणु जन्म तु कौरव्य कार्तिकेयस्य धीमतः ॥ १
अद्भुतस्याद्भुतं पुत्रं प्रवक्ष्याम्यमितौजसम् ।

C. 3. 14242
B. 3. 223. 2
K. 3. 225. 2

---

काळिमा; $T_2$ कलमा; $G_1$ काशिका; $M_2$ कयिमा (for कपिला). — $K_3$ om. (? hapl.) $24^e$–$25^d$. — $^e$) $B_3$ नित्याः (m नद्यः as in text). $B_1$ दिष्ट्यानां; $B_3$ $D_2$ धिष्ट्या°; $G_2$ धृष्ण्या° (for धिष्ण्या°). — $^f$) $G_1$ प्रतिष्ठिताः (also प्रकीर्तिताः as in text).

**25** $K_3$ om. 25 (cf. v.l. 24). — $^a$) $Ś_1$ $K_{1.2}$ अथ तस्य; $T_2$ अहुतस्य (for अद्भुतस्य). — $^b$) $K_1$ B D (except $D_{2.3.5}$) $T_1$ $G_3$ तस्य; $G_1$ मम (for तस्याः). $Ś_1$ $K_{1.2.4}$ $D_{2.3.5}$ विभूरिति; B Dc Dn $D_{1.4.6}$ $G_3$ विभू(Dc °दू)रसिः; $T_1$ विद्धरथः; $T_2$ वधूरथः. — $^d$) $D_2$ ग्रहास् (for सोमास्). $B_2$ हि; Dn $D_{1.4.6}$ G तु (for च).

**26** $^a$) $Ś_1$ K $D_{1-3.5}$ चैव (for चापि). — $^b$) $K_4$ ब्रह्मणा; Dc ब्राह्मणो. $Ś_1$ K B Dc $D_{2-6}$ मानसी ($Dc_2$ $D_{5.6}$ °सीः) (for °साः). $Ś_1$ $K_{1.2}$ $B_{2-4}$ $D_{3.4}$ प्रजा (for प्रजाः). — $^c$) $Ś_1$ $K_1$ $B_1$ अत्रेः; S (except $G_3$) अग्निः (for अत्रिः). $Ś_1$ $K_3$ $B_{1.4}$ Dc $D_{4.6}$ स्रष्टुकामान् ($K_3$ $Dc_1$ °कामाः); $K_1$ $D_2$ द्रष्टुकामाः ($D_2$ °कामः); $Dn_1$ सुष्टुकामान्; $T_1$ स्नुषुवे तान् (for स्रष्टुकामः). — $^d$) $K_2$ [अ]वार°; $G_{1.4}$ [अ]थार°; $M_1$ [अ]कार° (for [अ]धार°). — $^e$) $T_1$ ततस् (for तस्य). $Ś_1$ $K_{2.3}$ $B_1$ $D_{1.5}$ T M तान्; $B_4$ $D_{2.3}$ ते; $G_{1.2.4}$ च (for तद्). $Dc_2$ $D_5$ कार्यान् (for कायान्). — $^f$) $B_1$ निर्दहंति; $B_4$ निर्वहंति; $D_{2.3}$ निरहंति; $T_1$ निर्हरेत्तु; $G_2$ निर्हरंत. $K_{1.3}$ $Dc_2$ $D_1$ हुताश($D_1$ °शि)नः; $Dn_3$ T M हुताशनान् ($T_1$ °त्).

**27** $K_{1.2}$ om. (hapl.) 27–28. — $^a$) $Ś_1$ महाकायाः; $Dc_2$ °त्मानं (for °त्मानः). — $^b$) $T_1$ तु (for ते). $D_1$ महानघ (for ऽग्नयो मया). $D_2$ मताः; $T_2$ $G_{1.2}$ यथा; $G_4$ तथा (for मया). — $^c$) $T_1$ °मेयबलो° (for °मेया यथो°).

**28** $K_{1.2}$ om. 28 (cf. v.l. 27). — $^a$) $D_5$ $G_4$ अत्यद्भुतस्य (for अद्भुतस्य तु). $M_1$ च (for तु). — $^b$) $K_3$ $T_1$ $G_4$ देवे° (for वेदे°). — $^c$) $D_2$ तद्देशं (for तादृशं). $T_1$ सर्वं त्वम् (for सर्वेषाम्). — $^d$) $Ś_1$ $G_3$ ह्येषु; $D_1$ ह्येव; $D_5$ ह्येको (for ह्येष).

**29** $^a$) $K_1$ एकम्; $K_2$ एष; $D_3$ एवम् (for एक). — $^b$) $Ś_1$ $K_{1.2}$ $G_2$ M परमोंगिराः; $T_2$ परमां°; $D_1$ $G_{1.4}$ प्रथमां° (for प्रथमोऽङ्गिराः). — $^c$) $B_4$ निर्जितः; $T_1$ विस्तृताः; $G_2$ निसृताः (for निःसृतः). $Dc_2$ कार्यांज; $T_1$ कार्यां (for कायाज्). — $^d$) $T_1$ °ष्टोमे; M °ष्टोमात् (for °ष्टोमः). $D_5$ तथा (for यथा).

**30** $^c$) $K_3$ $D_3$ याचितो; B Dc Dn $D_{4-6}$ $G_3$ योचितो; $D_1$ एधितो; $G_{1.2.4}$ M पावको (for पावितो).

Colophon. — *Major parvan:* $Ś_1$ $K_2$ $Dn_2$ $T_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* $G_1$ मार्कंडेयसमस्या. $K_{1.3}$ B D $G_3$ $M_1$ (all om. sub-parvan name) mention only आंगिरस (followed in $M_1$ by समाप्त). — *Adhy. name:* $Dn_1$. $n_2$ $D_4$ $G_3$ अग्निसमुद्भवः. — *Adhy. no.* (figures, words or both): $Dn_1$ 221; $Dn_2$ 220; $D_1$ 224; T $G_{1.3}$ M ($M_2$ *inf. lin.*) 214; $G_{2.4}$ $M_2$ (orig.) 216. — *Śloka no.:* $Dn_1$. $n_2$ $D_{1.6}$ 32.

C. 3. 14242
B. 3. 223. 2
K. 3. 225. 2

जातं सप्तर्षिभार्याभिर्ब्रह्मण्यं कीर्तिवर्धनम् ॥ २
देवासुराः पुरा यत्ता विनिघ्नन्तः परस्परम् ।
तत्राजयन्सदा देवान्दानवा घोररूपिणः ॥ ३
वध्यमानं बलं दृष्ट्वा बहुशस्तैः पुरंदरः ।
स्वसैन्यनायकार्थाय चिन्तामाप भृशं तदा ॥ ४
देवसेनां दानवैर्यो भग्नां दृष्ट्वा महाबलः ।
पालयेद्वीर्यमाश्रित्य स ज्ञेयः पुरुषो मया ॥ ५
स शैलं मानसं गत्वा ध्यायन्नर्थमिमं भृशम् ।
शुश्रावार्तस्वरं घोरमथ मुक्तं स्त्रिया तदा ॥ ६
अभिधावतु मा कश्चित्पुरुषस्त्रातु चैव ह ।
पतिं च मे प्रदिशतु स्वयं वा पतिरस्तु मे ॥ ७

पुरंदरस्तु तामाह मा भैर्नास्ति भयं तव ।
एवमुक्त्वा ततोऽपश्यत्केशिनं स्थितमग्रतः ॥ ८
किरीटिनं गदापाणिं धातुमन्तमिवाचलम् ।
हस्ते गृहीत्वा तां कन्यामथैनं वासवोऽब्रवीत् ॥ ९
अनार्यकर्मन्कस्मात्त्वमिमां कन्यां जिहीर्षसि ।
वज्रिणं मां विजानीहि विरमास्याः प्रबाधनात् ॥ १०

केश्युवाच ।

विसृजस्व त्वमेवैनां शक्रैषा प्रार्थिता मया ।
क्षमं ते जीवतो गन्तुं स्वपुरं पाकशासन ॥ ११

मार्कण्डेय उवाच ।

एवमुक्त्वा गदां केशी चिक्षेपेन्द्रवधाय वै ।

---

## 213

**1** Before the ref., T G1. 2. 4 ins. :

1055*
वैशंपायनः ।
श्रुत्वेमां धर्मसंयुक्तां धर्मराजः कथां शुभाम् ।
पुनः पप्रच्छ तमृषिं मार्कण्डेयं तपस्विनम् ।
युधिष्ठिरः ।
कुमारस्तु यथा जातो यथा चाग्नेः सुतोऽभवत् ।
यथा रुद्राच्च संभूतो गङ्गायां कृत्तिकासु च ।
एतदिच्छाम्यहं श्रोतुं कौतूहलमतीव मे ।

— M1 om. the ref. — ab) K4 B1–3 Dn1. n2 D4. 6 G3 विविधा वंशाः कीर्तितास्ते. — c) Ś1 K1–3 Dc D1–3. 5 T1 च (for तु). T2 G1. 2. 4 जन्म त्वं शृणु कौरव्य.

**2** a) T1 कर्म; M2 पश्य (for पुत्रं). — b) Ś1 K4 B1. 2 D1–3 G3 [अ]मितौजसः; K2 G1. 2. 4 M महौ(K2 °तौ)जसः. — c) K1 B D (except D1–3. 5) G3 ब्रह्मर्षि- (for सप्तर्षि-). K4 D1–3 -भार्यासु; T1 -भार्यायां (for -भार्याभिर्).

**3** a) B1 यत्नाद् (for यत्ता). — b) B3 D1 T1 विनिघ्नंति; M1 व्यनिघ्नंत. — c) D3 यत्रा° (for तत्रा°). K2 सर्व-; D3 तदा (for सदा). — d) D5 °दर्शिनः (for °रूपिणः).

**4** a) K2 लब्ध्वा (for दृष्ट्वा). — b) B4 बहुभिस्तैः; D5 बहुशस्त्रैः; T2 भीषणास्त्रैः (for बहुशस्तैः). — T2 om. $4^{c}$–$5^{d}$. — c) B Dn D4. 6 G3 स (for स्व-). — d) G1. 2. 4 M चिंतां स मनसा(G1 समनुसं-)वहत्.

**5** T2 om. 5 (cf. v.l. 4). — a) B1. 4 Dn1. n2 हि; B2 D5 T1 G1 यैर् (for यो). — b) G1. 2. 4 हतां (for भग्नां). — d) T1 M2 संज्ञेयः (for स ज्ञेयः). B2 पुरुषोत्तमः.

**6** a) Ś1 सशैलमानसं; D2 सशैलं कांचनं. — b) K3 भृशं; Dn D4. 6 T2 G3 इदं; D1–3 अमुं (for इमं). Ś1 K1–3 तदा (for भृशम्). — d) K1 मया सूक्तं; B2–4 अर्थयुक्तं; G1. 2. 4 अथो मुक्तं. Ś1 तदा स्त्रिया (by transp.); K1 स्त्रिया मुदा.

**7** a) K2 D5 अभिधावत; T2 अभिभूयास्तु. N (except Ś1 K1. 2) T1 G3. 4 M1 मां (for मा). — b) D3 T1 त्रातुमेव ह (T1 हि); D5 त्रातुमर्हति. K2. 4 G1. 2. 4 हि; B3 च (for ह). — c) D2 प्रदश्यंतु; D3 प्रादिशतु. — d) T1 श्रियं (for स्वयं). Ś1 D6 ते (for मे).

**9** b) S (except T1 G3) °नद्धम् (for °मन्तम्). — c) B1. 3. 4 Dn D4. 6 G3 कन्यां तां (by transp.). — d) K4 B2 T1 G1 [ए]नां (for [ए]नं). — After 9, K1. 2 ins. :

1056* केशिन्ननिच्छतीं कन्यां विजने वरयस्व माम् ।
मयि शास्तरि दुष्टानां वज्रहस्ते मदोदिते ।

**10** Ś1 K1 om. 10. — a) K2. 3 B4 °कर्म; T2 G1 M2 °कर्मा (for °कर्मन्). K2 कृत्वा त्वं; G2 अस्माकं (for कस्मात्त्वं). — c) T2 G1 M1 मा (for मां). T2 [अ]भिजानीहि. — d) T1 अस्यां; T2 G1. 2. 4 अस्मात् (for अस्याः). T1 G1. 2. 4 M प्रमाथनात्; T2 °माथिनः (for °बाधनात्).

**11** T2 G1 om. the ref. — a) T2 कैशिजाशु (sic) (for विसृजस्व). K2 T G1. 4 [ए]तां (for [ए]नां). — b) K1 अथैनं वासवोब्रवीत्. — c) B1 क्षेमं ते; B2 प्रेक्षंते (for क्षमं ते). K1 जीवितुं; D5 G1. 4 जीवता; G2 °नो (for °तो). — d) Ś1 K1. 2 स्वपुरे.

**12** B3. 4 Dn D4. 6 S om. the ref. — b) D1. 3. 5 च (for वै). T2 G1. 2. 4 चिक्षेपेंद्राय वै तदा.

**13** b) Ś1 क्रुद्धः केशी (by transp.). D2 ह्यवासृजत्; T1 अपासृ°. — After $13^{ab}$, S (except G3 M2) ins. :

तामापतन्तीं चिच्छेद मध्ये वज्रेण वासवः ॥ १२
अथास्य शैलशिखरं केशी क्रुद्धो व्यवासृजत् ।
तदापतन्तं संप्रेक्ष्य शैलशृङ्गं शतक्रतुः ।
बिभेद राजन्वज्रेण भुवि तन्निपपात ह ॥ १३
पतता तु तदा केशी तेन शृङ्गेण ताडितः ।
हित्वा कन्यां महाभागां प्राद्रवद्भृशपीडितः ॥ १४
अपयातेऽसुरे तस्मिंस्तां कन्यां वासवोऽब्रवीत् ।
कासि कस्यासि किं चेह कुरुषे त्वं शुभानने ॥ १५

कन्योवाच ।

अहं प्रजापतेः कन्या देवसेनेति विश्रुता ।
भगिनी दैत्यसेना मे सा पूर्वं केशिना हृता ॥ १६
सहैवावां भगिन्यौ तु सखीभिः सह मानसम् ।
आगच्छावेह रत्यर्थमनुज्ञाप्य प्रजापतिम् ॥ १७
नित्यं चावां प्रार्थयते हर्तुं केशी महासुरः ।
इच्छत्येनं दैत्यसेना न त्वहं पाकशासन ॥ १८
सा हृता तेन भगवन्मुक्ताहं त्वद्बलेन तु ।
त्वया देवेन्द्र निर्दिष्टं पतिमिच्छामि दुर्जयम् ॥ १९

इन्द्र उवाच ।

मम मातृष्वसेया त्वं माता दाक्षायणी मम ।
आख्यातं त्वहमिच्छामि स्वयमात्मबलं त्वया ॥ २०

कन्योवाच ।

अबलाहं महाबाहो पतिस्तु बलवान्मम ।
वरदानात्पितुर्भावी सुरासुरनमस्कृतः ॥ २१

इन्द्र उवाच ।

कीदृशं वै बलं देवि पत्युस्तव भविष्यति ।
एतदिच्छाम्यहं श्रोतुं तव वाक्यमनिन्दिते ॥ २२

कन्योवाच ।

देवदानवयक्षाणां किंनरोरगरक्षसाम् ।
जेता स दुष्टो दुष्टानां महावीर्यो महाबलः ॥ २३
यस्तु सर्वाणि भूतानि त्वया सह विजेष्यति ।

C. 3. 14265
B. 3. 224. 9
K. 3. 226. 9

---

1057* महामेघप्रतीकाशं चलत्पावकसंकुलम् ।
— $^{c}$) Ś$_1$ $K_{3.4}$ $B_{1-3}$ Dc $D_{2-4}$ $M_1$ तम् (for तद्). $K_1$ चिच्छेद; $T_2$ वेगेन; $G_{1.2.4}$ M वज्रेण (for संप्रेक्ष्य). — $^{e}$) S (except $G_3$) वेगेन (for वज्रेण). — $^{f}$) $K_{3.4}$ $B_{1.3}$ $D_{2.3.5}$ S (except $G_3$) च (for ह).

**14** $^{ab}$) $B_1$ पपाताशु (for पतता तु). Ś$_1$ $K_{1.2}$ तेन केशी (by transp.). — $^{d}$) $K_3$ भृशताडितः; $T_1$ भयपीडितः.

**15** $^{c}$) $T_1$ $M_1$ किं त्वेह. — $^{d}$) $G_2$ वरा° (for शुभा°). — After 15, all MSS. (except Ś$_1$ $K_{1-3}$ $D_5$ $G_3$) ins. an addl. colophon (*adhy. no.:* $Dn_1$ 222; $Dn_2$ 221; $D_1$ 225; T $G_1$ M [$M_3$ *inf. lin.*] 215; $G_{2.4}$ $M_2$ [orig.] 217).

**16** $^{a}$) $T_1$ अपां° (for प्रजा°). — $^{c}$) $K_1$ B $Dn_{1.}$ $n_2$ $D_{4.6}$ $G_{3.4}$ मे दैत्यसेना (by transp.). — $^{d}$) $B_4$ या (for सा). $K_4$ (*sup. lin.* as in text) $Dc_1$ हता (for हृता).

**17** $^{a}$) N $G_{1.3}$ $M_2$ सदैवावां. — $^{b}$) $K_4$ Dc $Dn_3$ T $G_{1.3.4}$ सखिभिः. Ś$_1$ $K_{1.2}$ मानद; $D_3$ °से; $G_4$ °सः (for °सम्). — $^{c}$) $T_1$ $G_{1.2.4}$ आगच्छाव ($T_1$ °त्येच्छा) विहारार्थम्.

**18** $^{a}$) Ś$_1$ $K_2$ चैनां; $D_5$ वाचा; $T_1$ त्वावां (for चावां). — $^{b}$) Ś$_1$ $K_2$ देशे देशे; $K_4$ केशी हर्तुं (by transp.); $G_1$ गंतुं केशी. $K_3$ Dc $Dn_3$ $D_5$ °बलः; $D_{1.2.4}$ °सुर (for °सुरः). — $^{c}$) M ऐच्छदे($M_2$ °ते)नं (for इच्छत्येनं). — $^{d}$) $K_2$ $B_{1-3}$ Dn $D_{4.6}$ $G_3$ चाहं (for त्वहं).

**19** $^{a}$) $B_{1-3}$ $Dc_1$ $Dn_{1.}$ $n_3$ $D_{4.6}$ $T_1$ $G_3$ [अ]नेन (for तेन). — $^{c}$) $G_1$ पुरा (for त्वया). — $^{d}$) S (except $G_3$) दुर्लभं (for दुर्जयम्).

**20** $G_4$ om. the ref. — $^{a}$) $D_3$ °सेव (for °सेया). — $^{b}$) Ś$_1$ $K_{1.2}$ तथा; $B_4$ च मे (for मम). — $^{c}$) K D (except $D_{1-3.5}$) $T_1$ $G_{1-3}$ आख्यातुं.

**21** $^{a}$) $T_2$ अलभ्या° (for अबला°). $D_3$ °भाग (for °बाहो).

**22** $D_4$ transp. 22 and 23. — $^{a}$) $K_4$ $B_{1-3}$ Dn $D_{1.4-6}$ $G_3$ तु; $D_3$ च (for वै). — $^{d}$) $M_1$ वाक्याद् (for वाक्यम्).

**23** $D_4$ transp. 22 and 23. — $^{b}$) Ś$_1$ $K_{2.3}$ $B_2$ $D_{1-3.5}$ गंधर्वो° (for किंनरो°). — $^{c}$) $B_{1-3}$ Dc Dn $D_{4.6}$ $G_3$ यो (for स). $K_4$ $D_{1-3}$ देवो दुष्टानां; $B_{1-3}$ Dc Dn $D_{4.6}$ $G_3$ दुष्टदैत्यानां ($B_{1.3}$ °दस्रानां; $B_3$m °दैत्यानां) (for दुष्टो दुष्टानां). $D_5$ जेता सदैव दुष्टानां.

**24** $D_4$ om. 24$^{ab}$. — $^{a}$) Ś$_1$ $K_{1-3}$ $B_{1.3}$ $D_{1.2.3}$ (before corr.).$_5$ यः स; $T_1$ स तु (for यस्तु). Dc यः सर्वभूतभूतानि; $D_3$ (by corr. *sec. m.*) यः सर्वाणि च भूतानि. — $^{b}$) S (except $G_3$) सार्धं (for सह). $D_3$ विजेष्यते.

C. 3. 14265
B. 3. 224. 9
K. 3. 226. 9

स हि मे भविता भर्ता ब्रह्मण्यः कीर्तिवर्धनः ॥ २४

मार्कण्डेय उवाच ।

इन्द्रस्तस्या वचः श्रुत्वा दुःखितोऽचिन्तयद्भृशम् ।
अस्या देव्याः पतिर्नास्ति यादृशं संप्रभाषते ॥ २५
अथापश्यत्स उदये भास्करं भास्करद्युतिः ।
सोमं चैव महाभागं विशमानं दिवाकरम् ॥ २६
अमावास्यां संप्रवृत्तं मुहूर्ते रौद्रमेव च ।
देवासुरं च संग्रामं सोऽपश्यदुदये गिरौ ॥ २७
लोहितैश्च घनैर्युक्तां पूर्वां संध्यां शतक्रतुः ।
अपश्यल्लोहितोदं च भगवान्वरुणालयम् ॥ २८
भृगुभिश्चाङ्गिरोभिश्च हुतं मन्त्रैः पृथग्विधैः ।
हव्यं गृहीत्वा वह्निं च प्रविशन्तं दिवाकरम् ॥ २९
पर्व चैव चतुर्विंशं तदा सूर्यमुपस्थितम् ।
तथा धर्मगतं रौद्रं सोमं सूर्यगतं च तम् ॥ ३०
समालोक्यैकतामेव शशिनो भास्करस्य च ।
समवायं तु तं रौद्रं दृष्ट्वा शक्रो व्यचिन्तयत् ॥ ३१
एष रौद्रश्च संघातो महान्युक्तश्च तेजसा ।
सोमस्य वह्निसूर्याभ्यामद्भुतोऽयं समागमः ।
जनयेद्यं सुतं सोमः सोऽस्या देव्याः पतिर्भवेत् ॥ ३२
अग्निश्चैतैर्गुणैर्युक्तः सर्वैरग्निश्च देवता ।
एष चेज्जनयेद्गर्भं सोऽस्या देव्याः पतिर्भवेत् ॥ ३३
एवं संचिन्त्य भगवान्ब्रह्मलोकं तदा गतः ।
गृहीत्वा देवसेनां तामवन्दत्स पितामहम् ।
उवाच चास्या देव्यास्त्वं साधु शूरं पतिं दिश ॥ ३४

---

**25** T$_2$ G$_{1.2.4}$ M$_1$ om. the ref. — $^b$) Ś$_1$ K$_{1.2}$ ततः (for भृशम्). — $^d$) D$_3$ सा प्रभा° ; G$_4$ समभा° (for संप्रभा°). K$_2$ यादृशेमं प्रभा° ; T$_1$ यादृशः संभविष्यति.

**26** $^a$) G$_1$ मतये (for उदये). — $^c$) B$_2$ D$_5$ महाभाग; D$_2$ S (except G$_{1.3}$) महात्मानं. — $^d$) G$_{1.2.4}$ प्रविशंतं (for विश°).

**27** $^a$) Ś$_1$ K$_{1.2}$ अमावस्यां. Ś$_1$ K$_{1-3}$ D$_{1-3.5}$ च संवृत्तां (D$_1$ °त्तं); K$_4$ B Dc Dn D$_{4.6}$ G$_3$ प्रवृत्तायां (for संप्रवृत्तं). — $^b$) K$_4$ B Dc Dn D$_{4.6}$ G$_3$ °र्ते रौद्र एव तु (B$_{1.3.4}$ D$_6$ च). — $^c$) B$_1$ तु (for च). K$_1$ संग्रामे.

**28** $^a$) T$_1$ लोहितां च. K$_3$ गुणै° ; B$_1$ परै° (for घनै°). — $^b$) T$_1$ G$_1$ M$_2$ पूर्वसंध्यां. — $^d$) S (except T$_1$ G$_3$) मघ° (for भग°). D$_1$ वरुणोदयं; G$_1$ °णालयात्.

**29** S (except G$_3$) transp. 29$^{ab}$ and 29$^{cd}$. B$_4$ om. 29$^{cd}$. — $^c$) D$_{2.3}$ हविर् (for हव्यं). M$_2$ गृहाय हव्यं (for हव्यं गृहीत्वा). K$_3$ हव्यं (for वह्निं). — $^d$) K$_2$ प्रविशंति; B$_3$ प्रविशञ्च (m °शन्तं as in text).

**30** $^a$) Ś$_1$ सर्वं चैव; K$_1$ सर्वदैवं; K$_2$ सर्वदैव; K$_3$ पर्वतैव; G$_3$ पर्व चैवं. S (except T$_1$ G$_3$) चतुर्विंशत्. — $^c$) Ś$_1$ K$_{1.2}$ B$_3$ Dc D$_{1.5}$ ततो; T$_2$ G$_4$ तदा (for तथा). Ś$_1$ K$_{1.2}$ धर्मफलं रौद्रं (K$_2$ रात्रौ); Dc$_2$ D$_{2.3.5}$ M धर्मबलं रौद्रं; T G सूर्यं वह्निगतं (G$_3$ धर्मं गतं रौद्रं). — $^d$) Ś$_1$ K B$_3$ Dc Dn$_2$. n$_3$ D$_{1-4}$ सोम- (for सोमं). Ś$_1$ K$_{1.2}$ D$_1$ तत्; Dc Dn$_3$ सः; D$_{2.3.5}$ यत् (for तम्).

**31** D$_2$ om. (hapl.) 31 (cf. v.l. 30). — $^a$) Ś$_1$ K$_{3.4}$ B$_4$ Dc D$_{3.5}$ G$_{1.2.4}$ M$_1$ एवं; T$_1$ एकं (for एव). — $^c$) K$_2$ तं रात्रौ; D$_3$ रौद्रं तद् (for तं रौद्रं). — $^d$) K B D (D$_2$ om.) G$_3$ [अ]न्व(K$_2$ वि)चित° ; T$_1$ M$_2$ [अ]प्य-चित° (for व्यचिन्त°). — After 31, K$_2$ B D (except D$_{2.3}$) G$_3$ ins.:

1057* सूर्याचन्द्रमसोर्घोरं दृश्यते परिवेषणम् ।
एतस्मिन्नेव रात्र्यन्ते महद्युद्धं तु शंसति ।
सरित्सिन्धुरपीयं तु प्रत्यसृग्वाहिनी भृशम् ।
शृगालिन्यग्निवक्त्रा च प्रत्यादित्यं विराविणी ।

**32** $^b$) K$_3$ उक्त° ; D$_6$ मुक्त° (for युक्त°). — $^c$) Ś$_1$ K$_{1.2}$ transp. सोम- and सूर्य-; T$_1$ transp. वह्नि- and सूर्य-. — $^d$) Dc Dn$_3$ अद्भुतोपि; T$_2$ °तस्तु (for °तोऽयं). — $^e$) K$_1$ यः; B$_2$ स्वं (for यं). — $^f$) = 33$^d$. G$_{1-4}$ [ऽ]सौ (for ऽस्या).

**33** Ś$_1$ K$_{1.2}$ om. (hapl.) 33. — $^a$) K$_3$ अग्निश्च तैर्; B$_4$ D$_2$ T G$_2$ M अग्निश्चैभिर्; G$_{1.4}$ अथानेकैर्. T M$_2$ गुणैः सर्वैः; G$_1$ गुणैरग्निः; G$_4$ गुणानग्निः (for गुणैर्युक्तः). — $^b$) K$_{3.4}$ D$_{1.5}$ सर्वैरेताश्च देवताः; B$_4$ D$_{2.3}$ S (except G$_3$) अ(D$_{2.3}$ M$_1$ ह्य)ग्निः सर्वाश्च (B$_4$ च सर्व-) देवताः. — $^c$) D$_{1.3}$ G$_{1.2.4}$ वै; D$_5$ T$_1$ यं (for चेज्).

**34** $^a$) G$_2$ मघ° (for भग°). — $^b$) Ś$_1$ K Dc Dn$_3$ D$_{1-3.5}$ गतः प्रभुः; B$_2$ गतस्तदा (for तदा गतः). — $^d$) K$_{1.4}$ B$_1$m Dc$_1$ Dn$_2$. n$_3$ D$_{3.4}$ अवदत्स (D$_3$ °त्तं); B$_{1.2.4}$ अविदत्स; Dc$_2$ D$_{1.2.5}$ अवंदत; S (except G$_3$) ववंदे स (T$_2$ च). — $^e$) Dc त्वं साधु; S (except G$_3$) देव त्वं (for देव्यास्त्वं). — $^f$) Dc देव्याः (for साधु).

**35** $^a$) K$_4$ B$_{1.2.4}$ मयै° ; T$_1$ यदै° (for यथै°). — $^c$)

ब्रह्मोवाच ।

यथैतच्चिन्तितं कार्यं त्वया दानवसूदन ।
तथा स भविता गर्भो बलवानुरुविक्रमः ॥ ३५
स भविष्यति सेनानीस्त्वया सह शतक्रतो ।
अस्या देव्याः पतिश्चैव स भविष्यति वीर्यवान् ॥ ३६

मार्कण्डेय उवाच ।

एतच्छ्रुत्वा नमस्तस्मै कृत्वासौ सह कन्यया ।
तत्राभ्यगच्छद्देवेन्द्रो यत्र देवर्षयोऽभवन् ।
वसिष्ठप्रमुखा मुख्या विप्रेन्द्राः सुमहाव्रताः ॥ ३७
भागार्थं तपसोपात्तं तेषां सोमं तथाध्वरे ।
पिपासवो ययुर्देवाः शतक्रतुपुरोगमाः ॥ ३८
इष्टिं कृत्वा यथान्यायं सुसमिद्धे हुताशने ।
जुहुवुस्ते महात्मानो हव्यं सर्वदिवौकसाम् ॥ ३९
समाहूतो हुतवहः सोऽद्भुतः सूर्यमण्डलात् ।
विनिःसृत्याययौ वह्निर्वाग्यतो विधिवत्प्रभुः ।
आगम्याहवनीयं वै तैर्द्विजैर्मन्त्रतो हुतम् ॥ ४०
स तत्र विविधं हव्यं प्रतिगृह्य हुताशनः ।
ऋषिभ्यो भरतश्रेष्ठ प्रायच्छत दिवौकसाम् ॥ ४१
निष्क्रामंश्चाप्यपश्यत्स पत्नीस्तेषां महात्मनाम् ।
स्वेष्वाश्रमेषूपविष्टाः स्नायन्तीश्च यथासुखम् ॥ ४२
रुक्मवेदिनिभास्तास्तु चन्द्रलेखा इवामलाः ।
हुताशनार्चिप्रतिमाः सर्वास्तारा इवाद्भुताः ॥ ४३
स तद्गतेन मनसा बभूव क्षुभितेन्द्रियः ।
पत्नीर्दृष्ट्वा द्विजेन्द्राणां वह्निः कामवशं ययौ ॥ ४४

C. 3. 14289
B. 3. 224. 33
K. 3. 226. 33

---

D2. 3 संभ° (for स भ°). Dc Dn3 भर्ता (for गर्भो). — d) B4 इंद्र°; Dc2 Dn3 D1 गुरु°; S (except T1 G3) उग्र° (for उरु°).

**36** a) Dc Dn3 भविष्यति च (for स भवि°). — c) T1 चार्हः (for चैव). — d) Dc2 D3 भविष्यति स (by transp.); G1 संभविष्यति.

**37** All MSS. om. the ref.! — b) Ś1 स (for [अ]सौ). Ś1 K1. 2 सहकन्यकः. — d) K4 D1–3 ब्रह्म°; T1 G1. 2. 4 M1 सप्त° (for देव°). — e) A few MSS. वशिष्ठ°. B1 सर्वे; D2 विप्रा (for मुख्या). — f) Dc2 D2 तु; M1 स- (for सु-). B Dc1 Dn1. n2 D4. 6 G3 -महाबलाः (B4 -महौजसः); T G1. 2. 4 °प्रभाः (for °व्रताः).

**38** a) K2 भगार्थं; Dc2 D3 भो° (for भा°). K1 तपसोपार्थं; K2 B1m °पातुं; B2–4 D (except D1–3. 5) G3 तपसोधातुं (B3m °धान्तं) (for °पात्तं). — b) K3 B3 (m as in text) सोमस्र. G1. 2. 4 तदा° (for तथा°). K B1. 3 (m as in text) D1. 2. 3 (*sup. lin.* as in text). 5 T2 [अ]परे (for [अ]ध्वरे). — c) K4 पिपासया. K1. 2. 4 Dc D2 T G2 M [अ]भ्य(Dc2 °प्य)युर् (for ययुर्).

**39** a) K2 इष्टं (for इष्टिं), and °न्यायं (for °न्यायं). — b) K3 B2 सुसमृद्धे; Dc2 °मिद्ध-. — d) Dc2 G1 सर्वे; G2. 4 M1 सर्वं (for सर्व-). Dc -दिवौकसः.

**40** a) Ś1 K2 सोपाहूतो; B3 समाहृतो (m °हूतो as in text); T2 °हितो. — a) K2 Dc2 D4. 6 सोद्भूतः (for सोऽद्भुतः). — c) K1. 4 B1. 2. 4 D (for D2 see below) G2. 3 ययौ (for [आ]ययौ). — D2 om. (hapl.) from °सृत्य up to विवि- (in 41a). — d) B4 संश्रितो; T1 पार्श्व°; T2 पश्य°; G1. 2. 4 सूर्य°; M1 शाश्व° (for वाग्य°). — e) Dn3 D1. 6 अगम्य- (for आगम्य). D4 [आ]हवनीये स्वे. — f) B1 द्विजैर्मंत्रहुतो हुतं; B4 तैः समस्तं हुतं हविः.

**41** D2 om. स तत्र विवि- (cf. v.l. 40). — a) T2 सततं; G1. 2. 4 स तु तं (for स तत्र). D5 विहितं; G1 विधिवत् (for विविधं). Dc द्रव्यं (for हव्यं). — c) B4 मुनि° (for ऋषि°). — d) Ś1 प्रायात्स्थानाद्; B1 प्रादित्सत; B2 प्रयच्छति (for प्रायच्छत).

**42** a) Ś1 [अ]भ्यगच्छत्स; K1. 2 [अ]भ्यगच्छंत; K3 D1. 5 G1. 2 M2 [अ]भ्यपश्यत्स; T1 तास्तु गच्छंतीः (for [अ]प्यपश्यत्स). — b) Ś1 द्विजा° (sic) (for महा°). — c) K2 B4 Dc Dn D4. 6 G3 स्वेष्वासनेषु; K3 श्रेष्ठाश्रमे°; B2 श्रेष्ठासने°; T2 G2 दृष्ट्वाश्रमे°. T1 वसतीः (for [उ]पविष्टाः). Ś1 स्वस्वाश्रमोपविष्टास्ताः. — d) K2 पतिभिश्च; K4 D2. 3. 5 स्नाताश्चैव; B Dn D1. 4. 6 G3 स्वप(D1. 4. 6 °पं)तीश्च; Dc स्नातीश्चैव. Ś1 सुखासुखं; B2. 4 Dn D1. 4. 6 G3 तथा सुखं; Dc2 सुखावहं; T2 G2 पतिव्रताः.

**43** a) T2 कुश- (for रुक्म-). A few MSS. °वेदी° (for °वेदि°). G1 तत्र (for तास्तु). — b) B1 °रेखा (for °लेखा). — T2 om. 43cd. — c) B1–3 D5 °र्चिःप्रतिमाः. — d) B4 [उ]द्गताः (for [अ]द्भुताः).

**44** K1 om. from 44 up to 3. 214. 21. — a) Ś1 K2 सततोद्गतेन म° (hypermetric!); B2 Dn1. n2 D1. 4. 6 G3 स तत्र तेन म°. — c) D4 शक्या मया द्रष्टुं स्प्रष्टुं (cf. 46ab). — d) Ś1 K2 B4 °वशं गतः; M °वशातुरः.

C. 3. 14290
B. 3. 224. 34
K. 3. 226. 34

स भूयश्चिन्तयामास न न्याय्यं क्षुभितोऽस्मि यत् ।
साध्वीः पत्नीर्द्विजेन्द्राणामकामाः कामयाम्यहम् ॥ ४५
नैताः शक्या मया द्रष्टुं स्प्रष्टुं वाप्यनिमित्ततः ।
गार्हपत्यं समाविश्य तस्मात्पश्याम्यभीक्ष्णशः ॥ ४६
संस्पृशन्निव सर्वास्ताः शिखाभिः काञ्चनप्रभाः ।
पश्यमानश्च मुमुदे गार्हपत्यं समाश्रितः ॥ ४७
निरुष्य तत्र सुचिरमेवं वह्निर्वशं गतः ।
मनस्तासु विनिक्षिप्य कामयानो वराङ्गनाः ॥ ४८
कामसंतप्तहृदयो देहत्यागे सुनिश्चितः ।
अलाभे ब्राह्मणस्त्रीणामग्निर्वनमुपागतः ॥ ४९
स्वाहा तं दक्षदुहिता प्रथमं कामयत्तदा ।
सा तस्य छिद्रमन्वैच्छच्चिरात्प्रभृति भामिनी ।
अप्रमत्तस्य देवस्य न चापश्यदनिन्दिता ॥ ५०
सा तं ज्ञात्वा यथावत्तु वह्निं वनमुपागतम् ।
तत्त्वतः कामसंतप्तं चिन्तयामास भामिनी ॥ ५१
अहं सप्तर्षिपत्नीनां कृत्वा रूपाणि पावकम् ।
कामयिष्यामि कामार्तं तासां रूपेण मोहितम् ।
एवं कृते प्रीतिरस्य कामावाप्तिश्च मे भवेत् ॥ ५२

इति श्रीमहाभारते आरण्यकपर्वणि त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥

---

**45** K1 om. 45 (cf. v.l. 44). — [a]) B1–3 Dn1. n2 D4. 6 G3 भूयः सं( D4. 6 G3 स)चिंत°. — [b]) B Dn1. n2 D4. 6 G3 °तो ह्यहं; Dc Dn3 D5 °तस्य मे (for °तोऽस्मि यत्). — Ś1 om. from 45[cd] up to 3. 214. 21. — [c]) K2 B Dc Dn D1. 4–6 G3 साध्व्यः ( Dc Dn3 सत्यः) पत्नयो. — [d]) B1. 3 Dc Dn3 D4. 6 G3 अकाम्याः (for °माः).

**46** Ś1 K1 om. 46 (cf. v.l. 45, 44). — [a]) D3 (by corr.) न ताः (for नैताः). — [b]) K4 चा° (for वा°). G1 निमि° (for [अ]निमि°). — [c]) B3 °सृत्य; K4 Dc D1–3. 5 M °श्रित्य (for °विश्य).

**47** Ś1 K1 om. 47 (cf. v.l. 45, 44). Before 47, K2 B D (except D1–3. 5) G3 ins. मार्कंडेय उ°. — [b]) B4 °प्रभः (for °प्रभाः). — [c]) B4 स (for च).

**48** Ś1 K1 om. 48 (cf. v.l. 45, 44). — [b]) B4 S (except G3) ततो (for एवं). K3. 4 Dc D2. 3. 5 T G1. 2. 4 वनं (for वशं). — M2 om. (hapl.) 48[c]–49[a]. — [c]) K4 D2. 3 विनिःक्षिप्य; T1 विनिष्क्रम्य.

**49** Ś1 K1 M2 om. 49 (cf. v.l. 45, 44, 48). — [b]) K2 B Dn D3. 4. 6 G3 °त्याग-; K3 Dc D1. 2. 5 °न्यासे; K4 न्यास- (for °त्यागे). K2 B Dc Dn D4. 6 G3 -विनिश्चितः; D2 सुनिश्चलः. — [d]) K2 B1. 3 Dn1. n2 D4. 6 G3 °गमत्; D3 °श्रितः (for °गतः).

**50** Ś1 K1 om. 50 (cf. v.l. 45, 44). — [b]) T1 G1. 2. 4 M2 प्रथमा; M1 भार्या सा (for प्रथमं). K3. 4 Dc1 D1–3 कामयत्यलं; Dc2 °यत्फलं; D5 °येत्फलं (for °यत्तदा). — [c]) B2. 4 T G1. 2. 4 तत्र (for तस्य). B1. 4 T G1. 2. 4 अन्वि° (for अन्वै°). — [d]) K2 B Dn1. n2 D4. 6 G3 भाविनी; K3. 4 Dc D1–3. 5 भारत (for भामिनी). — M om. (hapl.) 50[e]–51[d]. — [f]) K2 B Dn1. n2 D4–6 G3 न च (Dn2 D5 चा-) पश्यत्य°; K4 Dc1 न च पश्यद°.

**51** Ś1 K1 M om. 51 (cf. v.l. 45, 44, 50). — [a]) B2 यथा वक्तुं; D1 तथा सुभ्रूर्; T G1. 2. 4 यथावृत्तं (for °वत्तु). — [c]) B4 यत्नतः; D1 सा ततः (for तत्त्व°). — [d]) K2 B Dc1 Dn D4. 6 G3 भाविनी (for °मि°).

**52** Ś1 K1 om. 52 (cf. v.l. 45, 44). — [c]) B4 T1 G1 M1 रम° (for काम°). K2. 4 B1. 3 D (except D1–3. 5) G3 कामार्ता. — [f]) G1. 4 कामस्याप्ति° (for कामावाप्ति°).

Colophon om. in Ś1 K1. — *Major parvan:* K2 Dn2 T2 G2. 4 आरण्य. — *Sub-parvan:* G1 मार्कंडेयसमस्या. K3. 4 B1–3 D G3 (all om. sub-parvan name) mention only आंगिरस (D1 आंगिरसोपाख्यान). — *Adhy. name:* B2. 4 स्कंदोत्पत्तिः; Dc Dn3 M2 कुमारोत्पत्तिः; T2 कुमारोत्पत्तिकथनं; G1 कुमारसंभवः. — *Adhy. no.* (figures, words or both): Dn1 223; Dn2 222; D1 226; T G1 M (M2 *inf. lin.*) 216; G2. 4 M2 (orig.) 218. — *Śloka no.:* Dn1. n2 D1. 6 42.

## 214

☞ Ś1 K1 om. 3. 214. 1–21 (cf. v.l. 3. 213. 45, 44). The MSS. are ignored up to st. 21.

**1** G2 om. the ref. — [b]) K2 लोल-; T1 शिव- (for शील-). Dc Dn3 -समन्विता (for -गुणान्विता). — [c]) G1. 4 तत् (for सा). B4 [अ]प्रतिमं; G4 प्रतिमं (for प्रथमं). D3 transp. रूपं and कृत्वा (in [d]). — [e]) Many N MSS. °भ्यासं (for °भ्याशं). — [f]) Dc तं प्रोवाच; S (except G3) उवाच च (for तं चोवाच).

# २१४

मार्कण्डेय उवाच ।

शिवा भार्या त्वङ्गिरसः शीलरूपगुणान्विता ।
तस्याः सा प्रथमं रूपं कृत्वा देवी जनाधिप ।
जगाम पावकाभ्याशं तं चोवाच वराङ्गना ॥ १
मामग्ने कामसंतप्तां त्वं कामयितुमर्हसि ।
करिष्यसि न चेदेवं मृतां मामुपधारय ॥ २
अहमङ्गिरसो भार्या शिवा नाम हुताशन ।
सखीभिः सहिता प्राप्ता मन्त्रयित्वा विनिश्चयम् ॥ ३

अग्निरुवाच ।

कथं मां त्वं विजानीषे कामार्तमितराः कथम् ।
यास्त्वया कीर्तिताः सर्वाः सप्तर्षीणां प्रियाः स्त्रियः ॥ ४

शिवोवाच ।

अस्माकं त्वं प्रियो नित्यं बिभीमस्तु वयं तव ।
त्वच्चित्तमिङ्गितैर्ज्ञात्वा प्रेषितास्मि तवान्तिकम् ॥ ५
मैथुनायेह संप्राप्ता कामं प्राप्तं द्रुतं चर ।
मातरो मां प्रतीक्षन्ते गमिष्यामि हुताशन ॥ ६

मार्कण्डेय उवाच ।

ततोऽग्निरुपयेमे तां शिवां प्रीतिमुदायुतः ।
प्रीत्या देवी च संयुक्ता शुक्रं जग्राह पाणिना ॥ ७
अचिन्तयन्ममेदं ये रूपं द्रक्ष्यन्ति कानने ।
ते ब्राह्मणीनामनृतं दोषं वक्ष्यन्ति पावके ॥ ८
तस्मादेतद्रक्ष्यमाणा गरुडी संभवाम्यहम् ।
वनान्निर्गमनं चैव सुखं मम भविष्यति ॥ ९
सुपर्णी सा तदा भूत्वा निर्जगाम महावनात् ।
अपश्यत्पर्वतं श्वेतं शरस्तम्बैः सुसंवृतम् ॥ १०
दृष्टीविषैः सप्तशीर्षैर्गुप्तं भोगिभिरद्भुतैः ।

C. 3. 14309
B. 3. 225. 11
K. 3. 227. 12

---

**2** $^{a}$) S (except $T_1$ $G_3$) कामसंपन्नां. — $^{c}$) $K_3$ $Dn_3$ $D_1$ न करिष्यसि (by transp.); $B_3$ करिष्यामि न; Dc $D_5$ न करिष्यामि. $K_4$ $B_4$ $D_{2.3}$ न चेत्करिष्यसे देव. — $^{d}$) $D_5$ मां मृताम् (by transp.). — After 2, S (except $G_3$) ins.:

1059* तवाप्यधर्मः सुमहान्भविता वै हुताशन ।

**3** $G_{1.4}$ om. (hapl.) $3^{ab}$. — $^{c}$) $K_2$ श्लिष्टाभिः; $K_{3.4}$ Dc $Dn_3$ $D_{1-3.5}$ सर्वा°; $B_{1.3}$ ज्ञाति°; $B_{1m.2.4}$ $Dn_1$. $n_2$ $D_{4.6}$ $G_3$ शिष्टा° (for सखी°). $K_2$ $B_{1m.2.3}$ $Dn_1$. $n_2$ $D_{4.6}$ $G_3$ प्रहिता (for स°).

**4** $^{a}$) Dc $D_2$ त्वं मां (by transp.). S (except $G_3$) विजानासि (for °नीषे). — $^{d}$) $B_4$ वशाः (for प्रियाः).

**5** $T_1$ om. the ref. — $^{b}$) $K_3$ बिभेम; T M बिभ्यामस् (for बिभीमस्). — $^{c}$) Dc $Dn_3$ $D_{1-3.5}$ त्विंगितै° (for इङ्गितै°).

**6** $^{a}$) $T_1$ [ए]व (for [इ]ह). $K_3$ $Dn_1$ $D_{3.5}$ T $G_{1.2.4}$ M सं($T_1$ सु)प्राप्तां; $B_1$ (m as in text) °तुष्टा; $B_4$ °तप्ता. — $^{b}$) Dc $Dn_3$ $D_{1.3}$ कामात् (for कामं). $D_{2.3}$ वर (for चर). T $G_{1.2.4}$ M कामाच्चैव द्रुतं ($T_2$ °च्चोपद्रुतां) च मां ($T_1$ त्विमां). — After $6^{ab}$, S (except $G_3$) ins.:

1060* उपयन्तुं महावीर्य पूर्वमेव त्वमर्हसि ।

— $K_{3.4}$ S (except $G_3$) om. $6^{cd}$. — $^{c}$) $B_{2.4}$ $D_2$ यातरो; Dn $D_3$ जामयो; $D_1$ यात्स्वन्या (for मातरो).

**7** $B_2$ om. (? hapl.) 7–9 with the ref. — $^{b}$) $K_3$ प्रति; $K_4$ प्रीतो; Dc $Dn_3$ $D_{2.3.5}$ प्रीतां (for प्रीति-). $B_4$ °मुदान्वितः. T $G_{1.2.4}$ M शिवां प्रीत उ($T_1$ M प्रीतिमु)दावहत् ($T_2$ °हरत्). — $^{c}$) $K_2$ B $Dn_1$. $n_2$ $D_{4.6}$ $G_3$ समायुक्ता (for च सं°). $K_{3.4}$ Dc $Dn_3$ $D_{1-3.5}$ प्रीत्या ($K_4$ Dc $D_3$ °ता) च देवी संयुक्ता. — $^{d}$) $K_4$ युक्तं (m as in text); S (except $G_3$ $M_2$) शुक्लं (for शुक्रं); cf. v.l. $12^{d}$.

**8** $B_2$ om. 8 (cf. v.l. 7). — $^{a}$) $K_3$ विचरंत्या; B ($B_2$ om.) Dc $Dn_3$ $D_{1-3.5}$ व्यचिंतयन्; S (except $G_3$) साचिंत° (for अचिन्त°). Dc $Dn_3$ मामकं; $T_1$ मदीयं (for ममेदं). $T_1$ $G_4$ वै (for ये). — $^{b}$) M पश्यंति (for द्रक्ष्यन्ति). Dc $Dn_3$ केचन (for कानने). — $^{c}$) $T_2$ अहिता; $G_2$ अहितं; $G_4$ प्रकृतं (for अनृतं). — $^{d}$) $D_1$ द्रक्ष्यंति (for व°). $K_{2.3}$ $B_1$ Dc $D_{4.6}$ $T_2$ $G_{1.3}$ M पावकं ($K_2$ °कः; $B_1$ Dc $D_{4.6}$ $G_3$ °क); $D_{1-3.5}$ °कात्.

**9** $B_2$ om. 9 (cf. v.l. 7). — $^{a}$) $M_2$ त्वेतद् (for एतद्). $K_3$ रक्षणाय; $G_4$ M रक्षमाणा. — $^{d}$) $T_2$ चैव (for मम).

**10** $^{a}$) $T_2$ $G_{1.2.4}$ $M_2$ ततो (for तदा). — $^{b}$) $G_{1.4}$ ततो (for महा-). T $G_2$ M निर्गत्य (M °म्य) महतो वनात् ($T_1$ वनतो महत्). — $^{c}$) $G_1$ सर्वतः (for पर्वतं).

C 3. 14310
B 3. 225. 11
K. 3. 227. 12

रक्षोभिश्च पिशाचैश्च रौद्रैर्भूतगणैस्तथा ।
राक्षसीभिश्च संपूर्णमनेकैश्च मृगद्विजैः ॥ ११
सा तत्र सहसा गत्वा शैलपृष्ठं सुदुर्गमम् ।
प्राक्षिपत्काञ्चने कुण्डे शुक्रं सा त्वरिता सती ॥ १२
शिष्टानामपि सा देवी सप्तर्षीणां महात्मनाम् ।
पत्नीसरूपतां कृत्वा कामयामास पावकम् ॥ १३
दिव्यरूपमरुन्धत्याः कर्तुं न शकितं तया ।
तस्यास्तपःप्रभावेण भर्तृशुश्रूषणेन च ॥ १४
षट्कृत्वस्तत्तु निक्षिप्तमग्ने रेतः कुरूत्तम ।
तस्मिन्कुण्डे प्रतिपदि कामिन्या स्वाहया तदा ॥ १५
तत्स्कन्नं तेजसा तत्र संभृतं जनयत्सुतम् ।
ऋषिभिः पूजितं स्कन्नमनयत्स्कन्दतां ततः ॥ १६
षट्शिरा द्विगुणश्रोत्रो द्वादशाक्षिभुजक्रमः ।
एकग्रीवस्त्वेककायः कुमारः समपद्यत ॥ १७
द्वितीयायामभिव्यक्तस्तृतीयायां शिशुर्बभौ ।
अङ्गप्रत्यङ्गसंभूतश्चतुर्थ्यामभवद्गुहः ॥ १८
लोहिताभ्रेण महता संवृतः सह विद्युता ।
लोहिताभ्रे सुमहति भाति सूर्य इवोदितः ॥ १९
गृहीतं तु धनुस्तेन विपुलं लोमहर्षणम् ।
न्यस्तं यत्त्रिपुरघ्नेन सुरारिविनिकृन्तनम् ॥ २०
तद्गृहीत्वा धनुःश्रेष्ठं ननाद बलवांस्तदा ।
संमोहयन्निवेमान्स त्रीँल्लोकान्सचराचरान् ॥ २१
तस्य तं निनदं श्रुत्वा महामेघौघनिस्वनम् ।
उत्पेततुर्महानागौ चित्रश्चैरावतश्च ह ॥ २२

---

**11** $^{a}$) $K_2$ दंष्ट्राविषैः. $B_2$ सप्तशीर्षैर्दंष्ट्राविषैर् (by transp.). — $^{b}$) $K_3$ $T_1$ अद्भुतं; $D_3$ उद्धतैः (for अद्भुतैः). — $^{d}$) $B_4$ गुप्तं; S (except $G_3$) दुष्टैर् (for रौद्रैर्). — $^{e}$) $G_2$ संकीर्णम् (for संपूर्णम्). — After 11, S (except $G_3$) ins.:

1061* नदीप्रस्रवणोपेतं नानातरुलताचितम् ।

**12** $^{b}$) $B_4$ $D_1$ °श्रृंगं (for °पृष्ठं). — $^{c}$) $B_2$ कुंजे; $D_3$ भांडे (for कुण्डे). — $^{d}$) S (except $G_3$) शुक्लं (for शुक्रं); cf. v.l. 7$^{d}$. $T_2$ $G_2$ सत्वरिता; $G_4$ संत्व°; M सुत्व°. $K_2$ $B_{1-3}$ $Dn_{1.}$ $n_2$ $D_{4.6}$ $G_3$ शुभा (for सती).

**13** $^{a}$) $K_2$ $B_{1-3}$ Dn $D_{4.6}$ $G_3$ सप्ता° (for शिष्टा°). $K_{3.4}$ Dc $D_{1-3.5}$ देवीनां (for सा देवी). — $^{c}$) $B_4$ पत्नीनां रूपकं कृत्वा. — $^{d}$) $G_{1.2.4}$ $M_1$ रम° (for काम°).

**14** $^{a}$) $K_{3.4}$ $B_3$ Dc $Dn_3$ $D_{1-3}$ $G_2$ M दिव्यं (for दिव्य-). — $^{b}$) $K_2$ शक्यते; $B_{1.3}$ $D_3$ शकितुं (for शकितं). — $^{c}$) Dc $Dn_3$ अस्या° (for तस्या°). Some MSS. °प्रभावेन. — $^{d}$) $D_1$ $T_2$ $G_{1.4}$ M भर्तुः (for भर्तृ-).

**15** $^{a}$) $Dc_1$ $Dn_3$ $D_2$ $T_2$ $G_{1.2.4}$ तत्र (for तत्तु). Some MSS. निःक्षिप्तम्. — $^{b}$) $K_3$ $B_3$ Dc $D_{1-3.5}$ $T_2$ $G_1$ M अग्नि- (for अग्ने). $K_{3.4}$ $B_{3.4}$ Dc $Dn_3$ $D_{1-3.5}$ M °द्वह (for °त्तम). — $^{c}$) $T_1$ प्रक्षिपंत्याः (for प्रतिपदि). — $^{d}$) $B_2$ कृतं; $D_{1.2}$ तथा; $D_5$ तया; M सह (for तदा).

**16** $^{a}$) $T_2$ रेतसां; $G_{1.2}$ तेजसां (for तेजसा). Dc तस्य (for तत्र). — $^{b}$) $K_{2-4}$ B D $G_3$ संवृतं; T $M_2$ °भूतं (for °भृतं). $K_4$ Dc $D_{1-3.5}$ त्वसृजत् (for जनयत्). — $^{c}$) $B_{1.3}$ $G_{1.4}$ $M_1$ स्कंदम् (for स्कन्नम्). — $^{d}$) $B_1$ S (except $G_3$) जनयत्; $D_{2.3}$ अगमत्; $D_5$ मनसा (for अनयत्). $K_{3.4}$ $B_3$ Dc $Dn_3$ $D_3$ $T_2$ M तु ($D_3$ नु) तत्; $B_2$ $D_5$ गतं; $D_1$ सुतं; $D_2$ नु यत् (for ततः).

**17** $^{c}$) $K_4$ $D_{2.3}$ च (for तु). $K_2$ $B_{1-3}$ $Dn_{1.}$ $n_2$ $D_{4.6}$ $G_3$ एकग्रीवैकजठरः.

**18** $^{a}$) $D_1$ अपि व्यक्तस्; $D_{2.3}$ अभिव्यक्तिस्. — $^{c}$) $T_1$ अथ (for अङ्ग-). S (except $G_3$) °संपूर्णः (for °संभूतः). — $^{d}$) $T_2$ गुरुः (for गुहः).

**19** $D_2$ om. 19$^{ab}$. — $^{b}$) $K_{3.4}$ $B_1$ $T_1$ $M_2$ स सविद्युता. $G_{2.4}$ स विदिद्युते (for सह वि°). $K_2$ विद्युता सह संवृतः. — $^{c}$) $K_4$ लोहिताभ्रैः. Dc $D_{4.6}$ °भ्रेषु महति; $T_1$ °भ्रेण सुमहान्.

**20** $^{b}$) $B_2$ बहुलं (for विपुलं). S (except $G_3$) रोम° (for लोम°). — $^{d}$) $Dc_2$ $D_{2-4}$ पुरारि- (for सुरारि-). $K_2$ $T_2$ $G_{1.2.4}$ सु($K_2$ $T_2$ पु)रारातिनिकृं°; $B_4$ सुरारिविनिवर्तनं; $T_1$ तत्सुरात्रनिकृं°.

**21** $^{b}$) $K_3$ ननंद; $K_4$ $B_4$ Dc $Dn_3$ $D_{1-3}$ T M ननर्द (for ननाद). $K_4$ बलवत्तरं; $B_3$ भगवांस्तदा; $D_5$ बलवत्तदा. — $^{c}$) $D_{2.3}$ $G_1$ स मोह°. T M इमान्सर्वान्; $G_{1.2.4}$ इमाँल्लोकान् (for इवेमान्स). — $^{d}$) $K_3$ $B_4$ Dc $D_{2.3}$ $T_1$ लोकांस्त्रीन् (by transp.); $G_{1.2.4}$ गुहस्त्रीन्.

**22** $Ś_1$ $K_1$ resume! — $^{a}$) $Ś_1$ $K_{1-3}$ $D_{1.2.5}$ तस्य सं-; $Dc_2$ स तस्य (for तस्य तं). — $^{b}$) $B_4$ S (except $G_3$) महामेघोदधिप्रभं ($M_1$ °स्वनं).

**23** $^{a}$) $D_2$ तौ चापतंतौ. — $^{b}$) $Ś_1$ $K_{2.3}$ $B_{2.3}$ $Dn_1$ $D_{4-6}$ $G_3$ स बालोर्कसम°; $K_4$ बालार्कसदृश°. — $K_3$ om.

तावापतन्तौ संप्रेक्ष्य स बालार्कसमद्युतिः ।
द्वाभ्यां गृहीत्वा पाणिभ्यां शक्तिं चान्येन पाणिना ।
अपरेणाग्निदायादस्ताम्रचूडं भुजेन सः ॥ २३
महाकायमुपश्लिष्टं कुक्कुटं बलिनां वरम् ।
गृहीत्वा व्यनदद्भीमं चिक्रीड च महाबलः ॥ २४
द्वाभ्यां भुजाभ्यां बलवान्गृहीत्वा शङ्खमुत्तमम् ।
प्राध्मापयत भूतानां त्रासनं बलिनामपि ॥ २५
द्वाभ्यां भुजाभ्यामाकाशं बहुशो निजघान सः ।
क्रीडन्भाति महासेनस्त्रींल्लोकान्वदनैः पिबन् ।
पर्वताग्रेऽप्रमेयात्मा रश्मिमानुदये यथा ॥ २६
स तस्य पर्वतस्याग्रे निषण्णोऽद्भुतविक्रमः ।
व्यलोकयदमेयात्मा मुखैर्नानाविधैर्दिशः ।
स पश्यन्विविधान्भावांश्चकार निनदं पुनः ॥ २७
तस्य तं निनदं श्रुत्वा न्यपतन्बहुधा जनाः ।
भीताश्चोद्विग्नमनसस्तमेव शरणं ययुः ॥ २८
ये तु तं संश्रिता देवं नानावर्णास्तदा जनाः ।
तानप्याहुः पारिषदान्ब्राह्मणाः सुमहाबलान् ॥ २९
स तूत्थाय महाबाहुरुपसान्त्व्य च ताञ्जनान् ।
धनुर्विकृष्य व्यसृजद्बाणाञ्श्वेते महागिरौ ॥ ३०
बिभेद स शरैः शैलं क्रौञ्चं हिमवतः सुतम् ।
तेन हंसाश्च गृध्राश्च मेरुं गच्छन्ति पर्वतम् ॥ ३१
स विशीर्णोऽपतच्छैलो भृशमार्तस्वरान्रुवन् ।
तस्मिन्निपतिते त्वन्ये नेदुः शैला भृशं भयात् ॥ ३२
स तं नादं भृशार्तानां श्रुत्वापि बलिनां वरः ।

C. 3. 14333
B. 3. 225. 35
K. 3. 227. 36

---

(hapl.) 23[c]–25[d]. — [c]) D1 सर्वौ (for द्वाभ्यां). — [e]) D6 अपरं च (for °रेण). Ś1 K1. 4 D3 °दायादं; B2. 3 Dc D2 °दायाद्यं. — [f]) Ś1 K1. 2. 4 D2. 3 महाभयं (for भुजेन सः).

**24** K3 om. 24 (cf. v.l. 23). — [a]) K4 G1. 4 M1 उपाश्लिष्टं; T1 उपक्लिष्टं; T2 उपादिष्टं. — [b]) D1–3. 5 T G2. 4 M1 वरः (for वरम्). — [c]) K2 विनदं; B1 व्यानदन् (for व्यनदद्). G1. 3. 4 भीमश्च. — [d]) B Dn1 D4. 6 G3 °भुजः; Dn2 °सुरः (for °बलः).

**25** K3 om. 25 (cf. v.l. 23). — [a]) T2 G1. 2. 4 बलवद् (for °वान्). — [b]) B4 बलम् (for शङ्खम्). — [c]) D3 T2 G2. 4 प्रध्मापयत. — [d]) Ś1 K1 वरं; K3 वरः (for अपि).

**26** [b]) B1–3 Dn1. n2 D4. 6 [S]भिजघान; T1 [S]पि ज°; T2 [S]प्याज°; G1. 2. 4 व्याज°; M [S]भ्य(M2 °भ्या)हनच्च (for निजघान). B2. 4 Dn D1. 3–6 G3 ह (for सः). — [d]) K1 D3 (*sup. lin. sec. m.* as in text) कारान्; K3. 4 M करान् (for लोकान्). — D2 G1 om. (hapl.) 26[f]–27[c]. — [f]) Ś1 K2. 3 Dc D3 रश्मिवान्.

**27** D2 G1 om. 27[abc] (cf. v.l. 26). — [a]) D3 श्वेतस्य (for स तस्य). — [b]) K1 °दर्शनः (for °विक्रमः). — [d]) K3 °दिशौ° (for °विधै°). — [e]) K3 अपश्यद् (for स पश्यन्). T1 पापान् (for भावान्). — [f]) D1 निनदस्स्वनः (for निनदं पुनः).

**28** [a]) Ś1 K1–3 D5 सं- (for तं) — Ś1 om. (hapl.) 28[c]–29[b]. — [c]) G1. 2. 4 हि (for च). — [d]) S (except G3) गताः (for ययुः).

**29** Ś1 om. 29[ab] (cf. v.l. 28). — [a]) K1 यत्ते (for ये तु). K1 संश्रितं; K3 संसृता (for संश्रिता). Dc देवा. — K3 om. 29[cd]. — [c]) K2 B2 Dc1 Dn3 D2. 4 अस्य; B4 T1 G1. 2 M तस्य; Dn1. n2 अथ; D3 अभि- (for अपि). Ś1 K2 पार्षदान्वै; K1 M पार्षदान् (catalectic); Dn1 D4 G1 परिषदान्. T2 G4 तांस्तदा तुष्टुवुः सर्वे. — [d]) Ś1 K1 B1. 3. 4 Dn2 D2–4. 6 T1 G1. 3 ब्राह्मणान्; K4 ब्रह्मण्यात् (for ब्राह्मणाः). B3 ब्राह्मणानां महाबलान्; M2 ब्राह्मणाः सुमहाबलाः.

**30** [a]) Ś1 सतूर्याय; K1 संतूर्णाय; K2 संतूस्याय (sic) (for स तूत्थाय). — [b]) K3 उपशांत्या च; Dc2 उपसांत्वत; T2 अवसांत्व्य च (for उपसान्त्व्य च). K1 उपसंध्यं गताञ्जनान्. — [c]) Ś1 D5 व्यकृष्य. Dc [अ]भ्यसृजद्; D2. 3 T2 G1 M [अ]वसृ° (for व्यसृ°). — [d]) D3 M बाणं (for बाणान्). D4. 6 श्वेत- (for श्वेते).

**31** [a]) Ś1 K2 च (for स). D2. 3 G1 M1 शरः (for शरैः). — [b]) Ś1 परं (for सुतम्).

**32** [a]) K4 D2. 5 स विस्ती(K4m °शी)र्णो; Dc स वि-(Dc2 च)कीर्णो; T2 स तु शीर्णो. — [b]) K1. 2 °स्वनान्; B4 T1 G1. 4 °स्वरं; D5 T2 G2 °स्वरो (for °स्वरान्). Ś1 K1–3 D1–3 T1 ब्रुवन्; B4 T2 G2 M1 नदन्; G1. 4 M2 रवन् (for रुवन्). — [c]) B4 T1 तु (for नि-). Ś1 K1. 2 शैले (for त्वन्ये). — [d]) B Dn1. n2 D3. 6 G3 तदा; T2 बलात् (for भयात्). — After 32, S (except G3) ins.:

1062* घोरमार्तस्वरं सर्वे दृष्ट्वा क्रौञ्चं विदारितम्।

**33** [a]) Ś1 K2 S (except T2 G3) भयार्तानां (for

C. 3. 14334
B. 3. 225. 35
K. 3. 227. 36

न प्राव्यथदमेयात्मा शक्तिमुद्यम्य चानदत् ॥ ३३
सा तदा विपुला शक्तिः क्षिप्ता तेन महात्मना ।
बिभेद शिखरं घोरं श्वेतस्य तरसा गिरेः ॥ ३४
स तेनाभिहतो दीनो गिरिः श्वेतोऽचलैः सह ।
उत्पपात महीं त्यक्त्वा भीतस्तस्मान्महात्मनः ॥ ३५
ततः प्रव्यथिता भूमिर्व्यशीर्यत समन्ततः ।
आर्ता स्कन्दं समासाद्य पुनर्बलवती बभौ ॥ ३६
पर्वताश्च नमस्कृत्य तमेव पृथिवीं गताः ।
अथायमभजल्लोकः स्कन्दं शुक्लस्य पञ्चमीम् ॥ ३७

इति श्रीमहाभारते आरण्यकपर्वणि चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥

# २१५

**मार्कण्डेय उवाच ।**
ऋषयस्तु महाघोरान्दृष्ट्वोत्पातान्पृथग्विधान् ।
अकुर्वञ्शान्तिमुद्विग्ना लोकानां लोकभावनाः ॥ १
निवसन्ति वने ये तु तस्मिंश्चैत्ररथे जनाः ।

---

भृशा°). — $^{b}$) D2 जयिनां (for बलि°). — $^{c}$) K4 B1 Dn1. n3 G3 प्राव्यव°; D1 [अ]प्रहृष्य° (for प्राव्यथ°). — $^{d}$) K3 नानदत्; K4 D1. 5 संनदन्; D2. 3 नादयन् (for चानदत्).

**34** $^{a}$) T M नदता; G1. 2. 4 न तदा (for सा तदा). K1. 3. 4 B D G3 विमला (for विपुला). — $^{b}$) Ś1 K D1–3. 5 T G1. 2 [अ]मितात्मना (for महा°). — $^{c}$) T1 G1. 2. 4 M क्रोधात्; T2 रोषात् (for घोरं). — $^{d}$) M2 क्रौंच° (for श्वेत°). T1 शक्तिः श्वेतस्य सा गिरेः.

**35** $^{a}$) Ś1 K1. 2 पपाता° (for स तेना°). B D (except D2. 5) G दीर्णो (B1 वीरो) (for दीनो). — $^{b}$) G1. 4 श्वेतोपलैः (for श्वेतोऽचलैः). — $^{c}$) T1 G1. 2. 4 पलायत; M अपलायन् (for उत्पपात). G1. 2. 4 जहीत्युक्त्वा (for महीं त्यक्त्वा). T2 पालयन्प्रजहीत्युक्त्वा. — $^{d}$) Ś1 K B1. 3 Dc Dn3 D1–3 G4 तस्य; B2 च स; Dn1. n2 D4. 6 G3 स सु- (for तस्मान्).

**36** $^{a}$) D1 प्रचलिता (for प्रव्य°). — $^{b}$) G1 विशी° (for व्यशी°). — K3 om. (hapl.) from समा° (in 36$^{c}$) up to स्कन्दं (in 37$^{d}$). — $^{c}$) Ś1 अपाश्रित्य; K1. 2 उपाश्रित्य; K4 B4 Dc Dn3 D1–3 समाश्रित्य; S (except G3) नमस्कृत्य (for समासाद्य).

**37** K3 om. up to स्कन्दं (cf. v.l. 36); T1 om. 37$^{ab}$. — $^{a}$) Ś1 नदीश्चैव; K2 नदीस्तत्र; Dc2 नमस्तुभ्यं (for नमस्कृत्य). — $^{b}$) Ś1 K2 M2 तामेव (for तमेव). — $^{c}$) K4 B2. 3 Dn D4–6 G3 [ए]नम्; D1 ताम् (for [अ]यम्). Ś1 K1. 2 B4 अभवल्लोके (for अभजल्लोकः). — $^{d}$) Dc2 D2 शुक्र° (for शुक्ल°). Ś1 K2 Dc2 M2 पंचमी; B1 सप्तमी.

Colophon. — *Major parvan:* Ś1 K2 Dn2 T2 G2. 4 आरण्य. — *Sub-parvan:* G1 मार्कंडेयसमस्या. K3. 4 B1–3 Dc1 Dn D1. 3–6 M (all om. sub-parvan name) mention only आंगिरस. — *Adhy. name:* B4 Dc1 Dn2. n3 D4. 6 G2. 3 कुमारोत्पत्तिः; Dn1 कुमारोपाख्यानं; T2 G1 M कुमारसंभवः. — *Adhy. no.* (figures, words or both): Dn1 224; Dn2 223; D1 227; T G1 M (M2 *inf. lin.*) 217; G2. 4 M2 (orig.) 219. — *Śloka no.:* Dn1. n2 39; D1. 6 40.

## 215

**1** After the ref., B Dc Dn D3 (marg. *sec m.*). 4. 6 G3 ins.:

1063* तस्मिञ्जाते महासत्त्वे महासेने महाबले ।
　　समुत्तस्थुर्महोत्पाता घोररूपाः पृथग्विधाः ।
　　स्त्रीपुंसोर्विपरीतं च तथा द्वंद्वानि यानि च ।
　　ग्रहा दीप्ता दिशः खं च ररास च मही भृशम् ।

[(L. 1) B1–3 महात्मनि (for °सेने). — (L. 4) B1. 3 ननाम (for ररास).]

— T1 G1. 2 ins. after the ref.: T2 G4 before the ref.:

1064* इत्येतद्विविधाकारं वृत्तं शुक्लस्य पञ्चमीम् ।
　　ततो युद्धं महद्घोरं षष्ठ्यां वृत्तं जनाधिप ।

— $^{a}$) Ś1 K Dc D1–3. 5 सु-; B Dn D4. 6 G3 च; M तान् (for तु). Ś1 K1. 2 B2–4 °भागा (for °घोरान्). — $^{b}$) K4 B1–3 Dn D1. 4. 6 G3 समंततः (for पृथग्विधान्). — $^{d}$) Ś1 K Dc Dn3 D1–3. 5 शांति° (for लोक°).

**2** $^{a}$) Ś1 K1–3 Dc Dn3 D1–3. 5 निवासस्तु वने येषां. — $^{c}$) Ś1 K2 °ब्रुवश्चैव. K3 नो अर्थः; B3 नो लब्धः (for नो-

तेऽब्रुवन्नेष नोऽनर्थः पावकेनाहृतो महान् ।
संगम्य षड्भिः पत्नीभिः सप्तर्षीणामिति स्म ह ॥ २
अपरे गरुडीमाहुस्त्वयानर्थोऽयमाहृतः ।
यैर्दृष्टा सा तदा देवी तस्या रूपेण गच्छती ।
न तु तत्स्वाहया कर्म कृतं जानाति वै जनः ॥ ३
सुपर्णी तु वचः श्रुत्वा ममायं तनयस्त्विति ।
उपगम्य शनैः स्कन्दमाहाहं जननी तव ॥ ४
अथ सप्तर्षयः श्रुत्वा जातं पुत्रं महौजसम् ।
तत्यजुः षट् तदा पत्नीर्विना देवीमरुन्धतीम् ॥ ५
षड्भिरेव तदा जातमाहुस्तद्वनवासिनः ।
सप्तर्षीनाह च स्वाहा मम पुत्रोऽयमित्युत ।
अहं जाने नैतदेवमिति राजन्पुनः पुनः ॥ ६
विश्वामित्रस्तु कृत्वेष्टिं सप्तर्षीणां महामुनिः ।
पावकं कामसंतप्तमदृष्टः पृष्ठतोऽन्वगात् ।
तत्तेन निखिलं सर्वमवबुद्धं यथातथम् ॥ ७
विश्वामित्रस्तु प्रथमं कुमारं शरणं गतः ।
स्तवं दिव्यं संप्रचक्रे महासेनस्य चापि सः ॥ ८
मङ्गलानि च सर्वाणि कौमाराणि त्रयोदश ।
जातकर्मादिकास्तस्य क्रियाश्चक्रे महामुनिः ॥ ९
षड्वक्त्रस्य तु माहात्म्यं कुक्कुटस्य च साधनम् ।
शक्त्या देव्याः साधनं च तथा पारिषदामपि ॥ १०
विश्वामित्रश्चकारैतत्कर्म लोकहिताय वै ।
तस्मादृषिः कुमारस्य विश्वामित्रोऽभवत्प्रियः ॥ ११
अन्वजानाच्च स्वाहाया रूपान्यत्वं महामुनिः ।
अब्रवीच्च मुनीन्सर्वान्नापराध्यन्ति वै स्त्रियः ।
श्रुत्वा तु तत्त्वतस्तस्मात्ते पत्नीः सर्वतोऽत्यजन् ॥ १२

C. 3. 14355
B. 3. 226. 17
K. 3. 228. 15

ऽनर्थः). — d) Ś1 K1–3 कृतो; K4 D5 हतो; B Dc Dn D4. 6 G3 M2 [आ]हितो (B1 हितो) (for [आ]हृतो). — e) B2 षड्भिः पत्नीभिः संगम्य (by transp.).

**3** b) Dn1. n2 S (except G3 M2) तया; D2 तथा (for त्वया). — d) Dn2 T2 G2. 4 गच्छति (for °ती). — f) T1 कोयं (for कृतं). K1. 3 वै जनाः; D5 तत्वतः; G4 वै द्विजाः (for वै जनः).

**4** Dc2 om. 4ab. — a) Ś1 K1–3 Dc1 D1–3. 5 तद् (for तु). B4 S (except G3) ततः (for वचः). — b) Ś1 K Dc1 D1. 5 [इ]ह (for [इ]ति). — d) D5 अहोहं (for आहा°).

**5** a) K4 ज्ञात्वा (for श्रुत्वा). — b) K3 भूतं (for जातं). — c) D2 स्वास्तदा; D5 स्वस्वकाः (for षट् तदा). — d) K3 चैकाम् (for देवीम्).

**6** a) T1 एवं. G4 ततो (for तदा). — c) Ś1 K2 महर्षीन्; K1 महर्षिम् (for सप्तर्षीन्). K4 D2 वै (for च). — e) S (except G3) हेतुर् (for जाने). — f) Ś1 K1. 2. 4 D2. 3. 5 [अ]जल्पत् (for राजन्).

**7** a) T G1 स (for तु). — b) Dc °मतिः (for °मुनिः). — c) B3 °संमत्तम् (for °संतप्तम्). — d) K2 आदृष्टुं (for अदृष्टः), and अनुगात् (for अन्व°). — e) G2. 4 तत्वेन (for तत्तेन). B4 तेन कर्माखिलं सर्वं. — f) T2 G1. 2. 4 अवबुध्य. B1 यथा तथा; B2 यथायथं.

**8** ab) Ś1 K2. 4 transp. प्रथमं and शरणं. T1 प्रथमः; G1. 2. 4 धर्मात्मा (for प्रथमं). — c) B2 नित्यं; T2 देवं (for दिव्यं). D3 स प्रचक्रे; G1 प्रचक्रेथ. — d) Ś1 K2 °देवस्य (for °सेनस्य). B1 चाशिषः; T1 चाह सः (for चापि सः).

**9** a) Ś1 K1. 3. 4 B1. 3m D2. 3 M2 मंडलानि च; D1 आगमोक्तानि. T1 G1 वि(T1 च)चित्राणि (for च सर्वाणि). — c) T1 G1. 2. 4 M1 °दिकान् (for °दिकाः). Ś1 K Dc D1–3. 5 तत्र; T1 G1. 2. 4 M चापि; T2 चैव (for तस्य). — d) S (except G3) तस्य (for क्रियाश्च).

**10** Ś1 om. (hapl.) 10a–12b. — a) T1 G1 षण्मुखस्य च; T2 G2. 4 M षण्मूर्ध्नस्तस्य (for षड्वक्त्रस्य तु). B च (for तु). — b) Dc2 कुमुद° (for कुक्कुट°). Ś1 K2. 4 B1. 2 Dc1 Dn D3–6 G1. 3 तु (for च). — c) D1 भक्त्या (for शक्त्या). B4 शक्त्यादिसाधनं चैव. — d) K1 D2 तदा (for तथा). K4 B2. 3 Dc2 Dn3 D1–3 G2. 4 M परिषदाम्; B4 वै पर्षदाम्. G1 पार्षतानां तथैव च.

**11** Ś1 om. 11 (cf. v.l. 10). — b) T2 सर्वं; G2. 4 सर्वं- (for कर्म). — d) S (except T2 G3) दृढं (for ऽभवत्).

**12** Ś1 K3 om. 12ab (for Ś1 cf. v.l. 10). — a) K1 M अजानंस्तत्; K4 अज्ञानात्तत्; B1 Dc D1–3 अजानात्तत् (for अन्वजानात्). T1 G1 च तत्स्वाहा; T2 G2. 4 तदा स्वाहा (for च स्वाहाया). D6 स्वाहातत्त्वमजानन्स. — b) K2 रूपाणि त्वं; D5 रूपाणि तु; G1. 4 रूपादुत्थं (for रूपान्यत्वं). — c) B4 S (except G3) अथा(B4 स चा)ब्रवी-

C. 3. 14355
B. 3. 226. 17
K. 3. 228. 16

स्कन्दं श्रुत्वा ततो देवा वासवं सहिताब्रुवन् ।
अविषह्यबलं स्कन्दं जहि शक्राशु माचिरम् ॥ १३
यदि वा न निहंस्येनमद्येन्द्रोऽयं भविष्यति ।
त्रैलोक्यं संनिगृह्यास्मांस्त्वां च शक्र महाबलः ॥ १४
स तानुवाच व्यथितो बालोऽयं सुमहाबलः ।
स्रष्टारमपि लोकानां युधि विक्रम्य नाशयेत् ॥ १५
सर्वास्त्वद्याभिगच्छन्तु स्कन्दं लोकस्य मातरः ।
कामवीर्या घ्नन्तु चैनं तथेत्युक्त्वा च ता ययुः ॥ १६
तमप्रतिबलं दृष्ट्वा विषण्णवदनास्तु ताः ।
अशक्योऽयं विचिन्त्यैवं तमेव शरणं ययुः ॥ १७
ऊचुश्चापि त्वमस्माकं पुत्रोऽस्माभिर्धृतं जगत् ।
अभिनन्दस्व नः सर्वाः प्रस्नुताः स्नेहविक्लवाः ॥ १८
ताः संपूज्य महासेनः कामांश्चासां प्रदाय सः ।
अपश्यदग्निमायान्तं पितरं बलिनां बली ॥ १९
स तु संपूजितस्तेन सह मातृगणेन ह ।
परिवार्य महासेनं रक्षमाणः स्थितः स्थिरम् ॥ २०
सर्वासां या तु मातॄणां नारी क्रोधसमुद्भवा ।
धात्री सा पुत्रवत्स्कन्दं शूलहस्ताभ्यरक्षत ॥ २१

---

त्तान्सप्तर्षीन्. — $^{d}$) S (except G$_{3}$) युष्मत्पत्नीष्वयं शिशुः. — $^{ef}$) K$_{3.4}$ D$_{1-3.5}$ [अ]पि (for तु). K$_{3}$ B$_{1}$ D$_{5}$ तत्वं तस्मात्ते; B$_{2}$ Dc तद्वचस्तस्मात् (for तत्त्वतस्तस्मात्). S (except G$_{3}$) षट्सु जातो हुतवहात् ते चाग्ने(T$_{1}$ तेन ता-; T$_{2}$ G$_{4}$ तेजोग्ने-; M$_{1}$ तास्तेग्ने-; M$_{2}$ ताश्चाग्ने)स्त्वग्रतोत्यजन्.

**13** Before 13, K$_{2}$ B D (except D$_{2.3}$) S ins. मार्कंडेय उ° (resp. मार्कंडेयः). — $^{a}$) D$_{5}$ स्तुत्वा (for श्रुत्वा). K$_{1.4}$ B$_{4}$ Dn D$_{1.4-6}$ G$_{3}$ तदा (for ततो). — $^{b}$) Ś$_{1}$ सहसा°; B$_{1}$ सर्वतो°; D$_{3}$ ते सहा° (for सहिता°). S (except G$_{3}$) सहिताः शक्रमब्रुवन्. — $^{d}$) G$_{1}$ जहि शक्राशुभं चिरात्.

**14** $^{a}$) Ś$_{1}$ K$_{1.2}$ विहिंस्ये°; T$_{1}$ G$_{1.4}$ निहिं° (for निहं°). — $^{b}$) K$_{3}$ D$_{1}$ महेंद्रो; B Dn D$_{4.6}$ G$_{3}$ देवेंद्रो; T$_{2}$ अन्येंद्रो (for अद्येन्द्रो). Ś$_{1}$ K$_{1.2.4}$ न; B$_{2}$ वै (for ऽयं). Ś$_{1}$ K$_{2}$ भविष्यसि. — D$_{2}$ om. 14$^{cd}$. — $^{c}$) K$_{2.3}$ B$_{1.3.4}$ Dc D$_{4-6}$ G$_{3}$ त्रैलोक्ये (for °क्यं). T G$_{1.2.4}$ च (for सं-). M त्रैलोक्यस्य निगृह्यास्मान्. — $^{d}$) K$_{4}$ Dn$_{1}$. n$_{3}$ D$_{1.4.6}$ T$_{2}$ G$_{3}$ °बल (for °बलः).

**15** T$_{1}$ om. (hapl.) 15$^{ab}$. — After 15$^{ab}$, B$_{3}$ ins. 1065*. — $^{c}$) B$_{1}$ भूतानां; G$_{2}$ लोकस्य (for लोकानां). — K$_{2}$ B$_{2.4}$ D (except D$_{1-3.5}$) G$_{3}$ ins. after 15 : B$_{3}$, after 15$^{ab}$ :

1065* न बालमुत्सहे हन्तुमिति शक्रः प्रभाषते ।
तेऽब्रुवन्नास्ति ते वीर्यं यत एवं प्रभाषसे ।

**16** $^{a}$) K$_{3}$ D$_{5}$ T$_{2}$ [अ]पि; D$_{2}$ नि-; D$_{3}$ [आ]शु; T$_{1}$ G$_{1}$ [अ]प- (for [अ]भि-). — $^{b}$) T$_{1}$ G$_{1}$ सर्व- (for स्कन्दं). D$_{5}$ स्कंदस्य लोकमातरः. — $^{c}$) T$_{1}$ °वीर्याद्; G$_{4}$ °वीर्यं (for °वीर्या). Dc घ्नत; T$_{2}$ G$_{4}$ यांतु (for घ्नन्तु). Ś$_{1}$ K$_{2}$ शरैस् (for चैनं). — $^{d}$) K$_{3}$ M तु (for च). T$_{1}$ G$_{1}$ यथा ययुः; T$_{2}$ G$_{2.4}$ यथातथं (for च ता ययुः).

**17** Ś$_{1}$ K$_{1}$ D$_{2}$ om. (hapl.) 17. — $^{b}$) K$_{2-4}$ Dc D$_{1.3}$ G$_{2.4}$ तदा; T$_{2}$ ततः (for तु ताः). — $^{c}$) K$_{3}$ D$_{3}$ T G$_{1}$ [ए]व; Dc [इ]दं; D$_{5}$ [ए]तत्; G$_{4}$ [ए]नं (for [ए]वं). — T$_{1}$ G$_{1}$ गताः (for ययुः). — After 17, T$_{1}$ G$_{1}$ read 3. 216. 1$^{a}$–3$^{d}$ (omitting them in their proper place).

**18** $^{a}$) K$_{4}$ B$_{1-3}$ Dn D$_{1.4.6}$ G$_{3}$ चैनं (for चापि). Ś$_{1}$ K$_{1.2}$ अस्माभिः (for अस्माकं). — $^{b}$) K$_{1}$ वीरः; K$_{2}$ B D (except D$_{1-3.5}$) G$_{3}$ भव (for ऽस्माभिर्). Ś$_{1}$ K$_{1.4}$ D$_{1-3}$ कृतो बली; K$_{2}$ B Dc Dn D$_{4.6}$ G$_{3}$ महाबलः; K$_{3}$ D$_{5}$ कृतां- (D$_{5}$ °तों)जलिः (for धृतं जगत्). — D$_{1}$ om. (hapl.) 18$^{c}$–19$^{d}$. — $^{c}$) K$_{1}$ °नंदत (for °नन्दस्व). T G$_{1.2.4}$ अभिनंद्य ततः (T$_{1}$ G$_{1}$ °नंदत ताः; T$_{2}$ °नंद्य तु ताः) सर्वाः. — $^{d}$) K$_{3}$ D$_{2}$ प्रस्नुताः; K$_{4}$ (m as in text) प्रजासु; G$_{1}$ स तु ताः; G$_{2-4}$ प्रस्तुताः- G$_{2.4}$ M स्नेहविक्लबाः. — After 18, B$_{1.3}$ (both marg.) Dn D$_{4.6}$ G$_{3}$ ins.:

1066* तासां तद्वचनं श्रुत्वा पातुकामः स्तनान्प्रभुः ।

**19** D$_{1}$ om. 19 (cf. v.l 18). — $^{b}$) Dc कामः (for कामान्). Ś$_{1}$ K$_{1.2}$ Dc वै; K$_{3}$ D$_{2.3}$ च (for सः). — $^{d}$) T$_{1}$ G$_{2.4}$ M$_{1}$ बलिनं (for °नां). D$_{5}$ वरं (for बली). B$_{4}$ पुरतः पितरं बली.

**20** $^{b}$) K$_{3.4}$ D$_{1-3.5}$ तु; B$_{4}$ Dc च; S (except G$_{3}$) तं (for ह). — $^{c}$) Ś$_{1}$ K$_{1.2}$ D$_{1}$ °व्रज्य (for °वार्य). D$^{1}$ °त्मानं (for °सेनं). — $^{d}$) G$_{1}$ ततः; G$_{2}$ तथा; G$_{4}$ स्थिरः (for स्थितः). Ś$_{1}$ K$_{1.2}$ चिरं; K$_{3.4}$ D$_{3.5}$ T$_{1}$ M स्थिरः; B$_{1.3}$ Dc Dn D$_{4.6}$ G$_{3}$ शिवः; D$_{2}$ [अ]भितः (for स्थिरम्). B$_{2.4}$ रक्षमाणास्तु तत् (B$_{4}$ °णास्ततः) स्थिताः; D$_{1}$ पुत्रवत्पर्यरक्षत (= 22$^{d}$); T$_{2}$ रक्षमाणा व्यतस्थिरे.

**21** $^{a}$) D$_{1}$ तत्तु; D$_{2}$ चैव (for या तु). — $^{c}$) B Dn D$_{4.6}$ G$_{3}$ स्व- (for सा). — $^{d}$) K$_{2}$ [अ]भिरक्षतः; T G$_{1.4}$ ह्यरक्षत (for [अ]भ्यरक्षत).

लोहितस्योदधेः कन्या क्रूरा लोहितभोजना ।
परिष्वज्य महासेनं पुत्रवत्पर्यरक्षत ॥ २२

अग्निर्भूत्वा नैगमेयश्छागवक्त्रो बहुप्रजः ।
रमयामास शैलस्थं बालं क्रीडनकैरिव ॥ २३

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥

# २१६

मार्कण्डेय उवाच ।
ग्रहाः सोपग्रहाश्चैव ऋषयो मातरस्तथा ।
हुताशनमुखाश्चापि दीप्ताः पारिषदां गणाः ॥ १
एते चान्ये च बहवो घोरास्त्रिदिववासिनः ।
परिवार्य महासेनं स्थिता मातृगणैः सह ॥ २
संदिग्धं विजयं दृष्ट्वा विजयेप्सुः सुरेश्वरः ।
आरुह्यैरावतस्कन्धं प्रययौ दैवतैः सह ।
विजिघांसुर्महासेनमिन्द्रस्तूर्णतरं ययौ ॥ ३
उग्रं तच्च महावेगं देवानीकं महाप्रभम् ।
विचित्रध्वजसंनाहं नानावाहनकार्मुकम् ।
प्रवराम्बरसंवीतं श्रिया जुष्टमलंकृतम् ॥ ४
विजिघांसुं तदायान्तं कुमारः शक्रमभ्ययात् ।
विनदन्पथि शक्रस्तु द्रुतं याति महाबलः ।
संहर्षयन्देवसेनां जिघांसुः पावकात्मजम् ॥ ५

C. 3. 14374
B. 3. 227. 7
K. 3. 228. 35

---

**22** $^{b}$) Ś1 K Dc D1. 3. 5 सह मातृगणेन तु (Ś1 K1. 2 ह). — $^{c}$) D1 °त्मानं (for °सेनं). — $^{d}$) K3 D2 M2 परिरक्षत; T2 समभाषत (for पर्य°).

**23** T1 G1. 2. 4 read 23 after 3. 217. 8 (cf. v.l. 17). — $^{a}$) Ś1 K2. 3 D1–3 T1 M नैगमेशः (Ś1 K3 T1 M2 °षः; M1 °षुः); T2 G1. 2. 4 ततश्चैनं (for नैगमेयः). — $^{b}$) Ś1 महाप्रजः; K2 बहुस्रजः; K4 बहुव्रजः (for °प्रजः). — $^{c}$) B1 शैलस्तं; T2 °स्य (for °स्थं). — $^{d}$) = (var.) 3. 31. $36^{d}$. K3 T2 बाल- (for बालं).

Colophon om. in T G1. 2. 4. — *Major parvan:* Ś1 K2 Dn2 आरण्य. — *Sub-parvan:* K3. 4 B1–3 Dc1 Dn D2–6 G3 (all om. sub-parvan name) mention only आंगिरस. — *Adhy. name:* B2 Dn D4. 6 G3 स्कंदोत्पत्तिः; B3. 4 Dc1 कुमारोत्पत्तिः. — *Adhy. no.* (figures, words or both): Dn1. n3 225; Dn2 224; D1 228; M (M2 *inf. lin.*) 218 (M2 orig. 220). — *Śloka no.:* Dn1. n3 D6 29; Dn2 28; D1 24.

## 216

**1** T G1. 2. 4 om. the ref. T1 G1 read $1^{a}$–$3^{d}$ after 3. 215. 17. T2 om. $1^{a}$–$3^{d}$. — $^{a}$) K1. 2 D1. 2. 5 चोप°; G2 M सोम° (for सोप°). — $^{b}$) B1 मातरश्चर्षयस्तथा. — $^{c}$) B Dn D4. 6 G3 चैव (for चापि). — $^{d}$) K4 B1. 2 Dn D1. 4. 6 G3 दृप्ताः. D1. 2. 4. 6 T1 G1. 2. 4 पारिषदा. Dc गणैः. Ś1 K1. 2 दीप्ताक्षाः (K2 °ख्याः) पार्षदां गणाः; B4 दीप्ताः सर्वे सपार्षदाः.

**2** For T G1 cf. v.l. 1. — $^{b}$) K1–3 °नादिनः (for °वासिनः). — $^{d}$) Ś1 K1–3 D1–3. 5 भूत° (for मातृ°).

**3** For T G1 cf. v.l. 1. G2 M om. (hapl.) $3^{abcd}$. — $^{a}$) T1 विषयं (for विजयं). — $^{b}$) B2 विजयेच्छुः. B4 T1 G1. 4 पुरंदरः (for सुरे°). — $^{c}$) Ś1 K D1. 3 [ऐ]रावण°. — After $3^{cd}$, K2 B D (except D1. 2; D3 marg.) G3 ins.:
1067* आदाय वज्रं बलवान्सर्वैर्दैवगणैर्वृतः ।
— $^{f}$) Ś1 K B1. 3. 4 Dc D1–3. 5 तदा (K3 तथा) (for ययौ).

**4** $^{a}$) B2–4 Dn T1 G1. 2 तं च; B1 T2 तस्य (for तच्च). B1–3 Dn D4. 6 G3 °नादं; T1 °देवं (for °वेगं). — $^{b}$) B1. 3 °भुज (for °प्रभम्). — Ś1 K1. 2 om. $4^{cd}$.

**5** $^{a}$) B4 विजयेप्सुं. K1. 4 B1–3 D (except D1. 2. 5) G3 तमायांतं. — $^{b}$) K3. 4 B D (except D1–3) G3 अन्वयात्; T2 अन्वियात् (for अभ्य°). — $^{c}$) K4 B4 D1–3. 5 M1 विनर्दन्. B1–3 Dn D4. 6 G3 पार्थे; T1 G1 परि- (for पथि). B1–3 Dn D4. 6 G3 देवेशो (for शक्रस्तु). T2 स वियत्पथि शक्रस्तु; G2. 4 वियत्पतिः स शक्रस्तु. — $^{d}$) D3 हंतुं; T1 G1 रौद्रं; T2 श्रुतं (for द्रुतं). G2. 4 आयान् (for याति). T M2 °बलं (for °बलः). — $^{e}$) Ś1 Dc1 D3 स हर्षयन्. T2 °गणान् (for °सेनां).

**6** $^{c}$) B Dn D4. 6 T1 G3 अथ; M1 अभि-; M2 अपि

विनयान्नियमांश्चापि सदा सर्वात्मना श्रिता ॥ ३३
मृदून्सतः सत्यशीलान्सत्यधर्मानुपालिनः ।
आशीविषानिव क्रुद्धान्पतीन्परिचराम्यहम् ॥ ३४
पत्याश्रयो हि मे धर्मो मतः स्त्रीणां सनातनः ।
स देवः सा गतिर्नान्या तस्य का विप्रियं चरेत् ॥ ३५
अहं पतीन्नातिशये नात्यश्ने नातिभूषये ।
नापि परिवदे श्वश्रूं सर्वदा परियन्त्रिता ॥ ३६
अवधानेन सुभगे नित्योत्थानतयैव च ।
भर्तारो वशगा मह्यं गुरुशुश्रूषणेन च ॥ ३७
नित्यमार्यामहं कुन्तीं वीरसूं सत्यवादिनीम् ।
स्वयं परिचराम्येका स्नानाच्छादनभोजनैः ॥ ३८
नैतामतिशये जातु वस्त्रभूषणभोजनैः ।
नापि परिवदे चाहं तां पृथां पृथिवीसमाम् ॥ ३९
अष्टावग्रे ब्राह्मणानां सहस्राणि स्म नित्यदा ।
भुञ्जते रुक्मपात्रीषु युधिष्ठिरनिवेशने ॥ ४०
अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः ।
त्रिंशद्दासीक एकैको यान्बिभर्ति युधिष्ठिरः ॥ ४१
दशान्यानि सहस्राणि येषामन्नं सुसंस्कृतम् ।
ह्रियते रुक्मपात्रीभिर्यतीनामूर्ध्वरेतसाम् ॥ ४२
तान्सर्वानग्रहारेण ब्राह्मणान्ब्रह्मवादिनः ।
यथार्हं पूजयामि स्म पानाच्छादनभोजनैः ॥ ४३
शतं दासीसहस्राणि कौन्तेयस्य महात्मनः ।

C. 3. 14694
B. 3. 233. 46
K. 3. 234. 48

चैव (for चापि). T2 विनयाचारसंयुक्ता. — $^{d}$) B2 सर्वा-नुपा- (for सर्वात्मना). B4 D4. 6 G3 सर्वात्मना सदा श्रिता.

**34** $^{b}$) T1 G1 M2 सर्व- (for सत्य-). Ś1 K2 -पातिनः; Dc D3 -यायिनः; T1 G1 M1 -वर्तिनः (for -पालिनः). — $^{d}$) Ś1 K1. 2 भर्तॄन्; T1 G1 भीता (for पतीन्).

**35** $^{a}$) Dc धर्मो मे (by transp.); D1 यो धर्मो. — $^{c}$) K2. 3 सदेव (for स देवः). K2. 3 S (except G3) स (for सा). K1. 2 नान्यस्; D3 T2 G2. 4 नार्यास् (for नान्या). — $^{d}$) Ś1 तस्याः. B1 ह्यप्रियं; T2 न प्रियं (for विप्रियं).

**36** B2 om. $36^{ab}$. — $^{b}$) K2 °भूषणे; B4 °दूषये; G4 °भक्षये (for °भूषये). D1 नात्यश्नीयां न भूषये; D5 नात्यश्नामि न भू°. — $^{c}$) Ś1 K1. 2 च; K3. 4 B1. 4 Dn2 D1–3. 5 T2 M [अ]ति-; B2 वा (for [अ]पि). Ś1 K B1 D1–3. 5 पर्यवदे (K3. 4 °चरे; D2 °वदेत्). B4 S (except G3) श्वश्रूं परिवदे (by transp.). — $^{d}$) B4 तयाहं; T1 G1. 2. 4 सदाहं; T2 M जात्वहं (for सर्वदा). S (except G3 M1) पति° (for परि°).

**37** $^{a}$) K1 अवदानेन; K3 अवमा°; T1 G1 अभ्युत्था° (for अवधा°). — $^{b}$) K2–4 °त्थानतथैव; B Dn D4. 6 G3 °स्थित-तयैव; T1 G1 °त्थानावगामि; T2 G2 °त्थाना भवामि; G4 °त्थानानिवामि (sic); M1 °त्थानेन चैव. M1 ह (for च). — $^{c}$) G4 भर्तॄणां वशमागम्य. — $^{d}$) N (except Ś1) G3 °शुश्रूषयैव च.

**38** $^{c}$) B1–3 D (except D1–3. 5) G3 [ए]तां (for [ए]का). — $^{d}$) = (var.) $43^{d}$. B2–4 Dc1 Dn D4. 6 G1. 3 पाना° (for स्नाना°).

**39** Ś1 om. (hapl.) 39–43; K1. 2 Dn1 om. (hapl.) $39^{ab}$. — $^{a}$) K3. 4 B4 Dc D1–3. 5 नैनाम्; S (except G3) न चापि (for नैताम्). — $^{b}$) B4 वस्त्रभूषणसेवनैः; Dc G2 M °भोजनभूषणैः; T1 वस्त्राभरणभोजनैः. — K3 om. (hapl.) $39^{c}$–$43^{d}$; D3 om. (? hapl.) $39^{c}$–$40^{d}$. — $^{c}$) K4 नाति-; B1–3 Dc2 Dn3 D6 G3 नाहं (for नापि). K1. 2. 4 B1. 4 D1. 2. 5 पर्यवदे. B1 D4. 6 G3 वादं; B2. 3 Dc वाचं; D1. 5 वाहं (for चाहं). T G1. 2. 4 M न चाप्य-तिवदे वाचा. — $^{d}$) K4 पृथां तां (by transp.); B1 पृथां च; D5 तां पृथ्वीं.

**40** Ś1 K2. 3 D3 om. 40 (for Ś1 K3 D3 cf. v.l. 39). — $^{ab}$) B1 D5 M अष्टाशीति-; G1. 2. 4 अष्टादश- (for अष्टा-वग्रे). K1 सहस्राणि (for ब्राह्म°). — K1 om. (hapl.) $40^{b}$–$41^{a}$. K4 B1. 4 Dc D1. 2. 5 S (except G3) transp. ब्राह्म° and सह°. B4 तु; T G1. 2 च (for स्म). — $^{c}$) B1 T1 G1. 4 °पात्रेषु; Dc °पात्रीभिर्. — After $40^{c}$, G1 reads $41^{bcd}$, $42^{abc}$, $40^{d}$, $41^{a}$, $42^{d}$. — $^{d}$) T1 याज्ञिका गृहमेधिनः (cf. $41^{b}$).

**41** Ś1 K3 om. 41 (cf. v.l. 39); K1 om. $41^{a}$ (cf. v.l. 40); T1 om. $41^{ab}$. — For G1 cf. v.l. 40. — $^{b}$) K4 D2. 3 M ब्राह्मणा; G1 याज्ञिका (for स्नातका). — $^{c}$) K1 Dc D3 °द्दासीकमेकैकं; K2 °द्दासीक एकैकं.

**42** Ś1 K3 om. 42 (cf. v.l. 39). — For G1 cf. v.l. 40. — $^{b}$) K2 एषा°; T G1. 4 M तेषा° (for येषा°). T1 सुसत्कृतं. — $^{c}$) Dc D4. 6 G3 क्रियते; T G1. 2. 4 M2 भुंजते; M1 दीयते. B4 रुक्मपात्रीषु; T1 G1. 4 °पात्रेषु.

**43** Ś1 K3 om. 43 (cf. v.l. 39). — $^{b}$) Dn D4. 6 G3 वेद° (for ब्रह्म°). — $^{c}$) T2 G2 पूजयामः स्म (G2 तान्); G4 पूजयामास. — $^{d}$) = (var.) $38^{d}$. D5 T1 G1. 4 M1 स्नाना°; T2 M2 याना°; G2 धना°.

C. 3. 14694
B. 3. 233. 46
K. 3. 234. 48

कम्बुकेयूरधारिण्यो निष्ककण्ठ्यः स्वलंकृताः ॥ ४४
महार्हमाल्याभरणाः सुवर्णाश्चन्दनोक्षिताः ।
मणीन्हेम च बिभ्रत्यो नृत्यगीतविशारदाः ॥ ४५
तासां नाम च रूपं च भोजनाच्छादनानि च ।
सर्वासामेव वेदाहं कर्म चैव कृताकृतम् ॥ ४६
शतं दासीसहस्राणि कुन्तीपुत्रस्य धीमतः ।
पात्रीहस्ता दिवारात्रमतिथीन्भोजयन्त्युत ॥ ४७
शतमश्वसहस्राणि दश नागायुतानि च ।
युधिष्ठिरस्यानुयात्रमिन्द्रप्रस्थनिवासिनः ॥ ४८
एतदासीत्तदा राज्ञो यन्महीं पर्यपालयत् ।
येषां संख्याविधिं चैव प्रदिशामि शृणोमि च ॥ ४९
अन्तःपुराणां सर्वेषां भृत्यानां चैव सर्वशः ।
आ गोपालाविपालेभ्यः सर्वं वेद कृताकृतम् ॥ ५०
सर्वं राज्ञः समुदयमायं च व्ययमेव च ।
एकाहं वेद्मि कल्याणि पाण्डवानां यशस्विनाम् ॥ ५१
मयि सर्वं समासज्य कुटुम्बं भरतर्षभाः ।
उपासनरताः सर्वे घटन्ते स्म शुभानने ॥ ५२
तमहं भारमासक्तमनाधृष्यं दुरात्मभिः ।
सुखं सर्वं परित्यज्य रात्र्यहानि घटामि वै ॥ ५३
अधृष्यं वरुणस्येव निधिपूर्णमिवोदधिम् ।
एकाहं वेद्मि कोशं वै पतीनां धर्मचारिणाम् ॥ ५४
अनिशायां निशायां च सहायाः क्षुत्पिपासयोः ।
आराधयन्त्याः कौरव्यांस्तुल्या रात्रिरहश्च मे ॥ ५५
प्रथमं प्रतिबुध्यामि चरमं संविशामि च ।

---

**44** $G_2$ om. 44$^{ab}$. — $^{a}$) $T_1$ $G_{1.4}$ $M_2$ दास्यः; $T_2$ दश- (for दासी-). $T_2$ $G_4$ $M_2$ -सहस्राणां. $D_5$ अष्टाशीति-सहस्राणि.

**45** $^{b}$) $K_{1-3}$ $B_{1.3}$ Dc $D_{1.5}$ S (except $T_2$ $G_3$) सुवस्त्रा°; $K_4$ $D_{2.3}$ सुवक्त्रा° (for सुवर्णा°). — $^{c}$) $K_2$ मणिर्हेम; M मणिहेम. $B_2$ त्रिश्रांता; $Dn_1$ $D_{1.3}$ S (except $T_2$ $G_3$) बिभ्रंत्यो. — $^{d}$) Dc गीतनृत्य° (by transp.); S नृत्त($G_3$ नित्य)गीत°.

**46** $^{a}$) $T_1$ $G_{1.2.4}$ $M_2$ नामानि (for नाम च). $B_4$ रूपाणि (for रूपं च). — $^{b}$) $Ś_1$ K Dc $D_{1-3.5}$ भोजनाच्छादनं तथा. — $^{c}$) $K_4$ सर्वमेव च; $T_2$ तासामेव च (for सर्वा°). — $^{d}$) $Ś_1$ चापि (for चैव).

**47** $K_4$ om. 47. — $^{a}$) $D_{2.5}$ शत- (for शतं). $Ś_1$ $K_3$ दाससहस्राणां; $K_{1.2}$ दासीसहस्राणां; $D_{1.5}$ दाससहस्राणि. — $^{b}$) $T_2$ $G_{2.4}$ M कौंतेयस्य महात्मनः (= 44$^{b}$). — $^{c}$) T $G_1$ $M_2$ पात्र°; $M_1$ पत्र°. $G_4$ दिवारात्रिम्. — $^{d}$) $B_1$ पूज° (for भोज°).

**48** $^{b}$) $T_1$ $G_{1.4}$ $M_1$ °नागशतानि. — $^{c}$) $G_2$ °ययुर् (for °यात्रम्).

**49** $^{b}$) T $G_{1.2}$ यदोर्वीं (for यन्महीं). $Ś_1$ परिपालयत्. — $^{c}$) $K_{1.2}$ $D_{1.5}$ S (except $G_3$) तेषां; $B_{2.3}$ एषां. $K_3$ B $Dn_1$. $n_3$ $M_1$ संख्यां (for सख्यां-). T $G_{1.2.4}$ $M_2$ -विधां; $M_1$ -भृतिं (for -विधिं). $B_3$ विधायैवं (for -विधिं चैव). — $^{d}$) $T_1$ $G_1$ $M_1$ वि($G_1$ च)जानती (for शृणोमि च).

**50** $^{ab}$) $K_4$ भृत्यानां सर्वेषां (by transp.). — $^{d}$) $Ś_1$ K Dc $D_{1-3.5}$ जाने (for वेद).

**51** $^{a}$) $K_2$ समुत्थायम्; $D_5$ समुदये (leaving hiatus!). — $G_1$ lacuna for 51$^{b}$–53$^{b}$. — $^{c}$) $D_3$ एकाहे. $K_3$ कल्याणं. — $^{d}$) $B_{1.2}$ $Dn_1$ $D_{4.6}$ $T_2$ $G_3$ यशस्विनि; $B_3$ °नीं; $Dn_2$. $n_3$ °नी.

**52** $G_1$ om. 52 (cf. v.l. 51). — $^{a}$) $K_{3.4}$ $B_1$ $D_{1.5}$ °साद्य (for °सज्य). $T_2$ किं सर्वं स ममासाद्य. — $^{b}$) $D_1$ परमर्षभाः; $D_5$ कृष्णवल्लभे (for भरत°). — $^{c}$) $Ś_1$ $K_{1.2}$ उपासने; $K_3$ °सना- (°सन-). $B_4$ T $G_{2.4}$ M -पराः (for -रताः). — $^{d}$) $K_3$ $B_{1.3}$ $D_{2-4.6}$ $G_3$ घटंति स्म; $B_2$ Dn $D_5$ घटयंति; $T_1$ $M_2$ घटंतेर्थान्; $T_2$ $G_4$ दयां यांति; $G_2$ यदा यांति. $B_{1-3}$ Dn $D_{4.6}$ $G_3$ वरानने; $M_2$ यथार्थता.

**53** $G_1$ om. 53$^{ab}$ (cf. v.l. 51). — $^{a}$) $K_{1.2}$ भरम् (for भारम्). $B_1$ अनिशम् (for आसक्तम्). — $^{b}$) $K_4$ °कृष्यं; $D_2$ °दृष्टं (for °धृष्यं). $T_2$ महा° (for दुरा°). — $^{c}$) $D_2$ सर्वं सुखं (by transp.). — $^{d}$) $T_1$ $G_1$ वदामि; $T_2$ वहामि. $K_{1.2}$ $D_1$ च (for वै).

**54** $^{a}$) $D_2$ अदृश्यं (for अधृष्यं). $Ś_1$ धनदस्येव; $K_{1.2}$ निधन°. — $^{b}$) $K_{3.4}$ $D_{1.2}$ $T_1$ $G_{1.2.4}$ $M_1$ निधिं (for निधि-). $Ś_1$ $K_{1.2}$ $D_3$ -पूर्वं (for -पूर्णम्). $Ś_1$ K $B_1$ $D_{1-3.5}$ महो° (for इवो°). — $^{c}$) $D_1$ वेद (for वेद्मि). $B_{1-3}$ Dc $D_{4.6}$ कोषं (for कोशं). — $^{d}$) $B_2$ धर्मचारिणी.

**55** $^{a}$) $T_1$ अनिद्रया; $G_1$ °द्राया (for °शायां). — $^{b}$) $Ś_1$ $K_1$ B $Dn_1$. $n_2$ $D_{2.5}$ $G_3$ सहाया; $K_2$ सहायात्; $K_3$ संहत्या; $T_2$ सहायां; $G_{1.2.4}$ विहाय. $B_3$ क्षुत्पिपासया. — $D_2$ om. 55$^{c}$–56$^{b}$. — $^{c}$) $B_{1.2.4}$ $Dc_2$ आराधयंत्या. $Ś_1$ कल्याण्याः; $K_1$ कल्याण्यां; $K_2$ कल्याणां; $G_2$ कौंतेयान्

नित्यकालमहं सत्ये एतत्संवननं मम ॥ ५६
एतज्जानाम्यहं कर्तुं भर्तृसंवननं महत् ।
असत्स्त्रीणां समाचारं नाहं कुर्यां न कामये ॥ ५७
तच्छ्रुत्वा धर्मसहितं व्याहृतं कृष्णया तदा ।
उवाच सत्या सत्कृत्य पाञ्चालीं धर्मचारिणीम् ॥ ५८
अभिपन्नास्मि पाञ्चालि याज्ञसेनि क्षमस्व मे ।
कामकारः सखीनां हि सोपहासं प्रभाषितुम् ॥ ५९

इति श्रीमहाभारते आरण्यकपर्वणि द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥

# २२३

द्रौपद्युवाच ।
इमं तु ते मार्गमपेतदोषं
वक्ष्यामि चित्तग्रहणाय भर्तुः ।
यस्मिन्यथावत्सखि वर्तमाना
भर्तारमाच्छेत्स्यसि कामिनीभ्यः ॥ १
नैतादृशं दैवतमस्ति सत्ये
सर्वेषु लोकेषु सदैवतेषु ।
यथा पतिस्तस्य हि सर्वकामा
लभ्याः प्रसादे कुपितश्च हन्यात् ॥ २
तस्मादपत्यं विविधाश्च भोगाः
शय्यासनान्यद्भुतदर्शनानि ।
वस्त्राणि माल्यानि तथैव गन्धाः

C. 3. 14712
B. 3. 234. 3
K. 3. 235. 3

---

(for कौरव्यान्). — [d]) $T_2$ तुल्यं (for तुल्या).

**56** $D_2$ om. 56[ab] (cf. v.l. 55). — [a]) $G_4$ परि° (for प्रति°). $T_1$ पतिधर्मं प्रबुध्यामि. — [c]) $T_2$ °कार्यम् (for °कालम्). $B_3$m $T_2$ $G_2$ मन्ये (for सत्ये). $T_1$ $G_1$ M नित्यं (M °त्य-) कालं परिचरे. — [d]) $T_1$ $G_1$ चैतत्; $G_4$ एतं; $M_2$ ह्येतत्. B Dc $D_4$ संवदनं; $D_2$ सर्वं मतं; $D_5$ संवलनं; $T_2$ संवेतनं. $T_2$ $G_{2.4}$ महत् (for मम).

**57** [b]) $B_{3.4}$ S (except $G_3$) भर्तुः (for भर्तृ-). B Dc $D_4$ -संवदनं; $T_1$ $G_1$ प्रियहितं; $T_2$ संवहनं. — [d]) Dc $D_1$ कारये; S (except $G_3$) रोच° (for काम°).

**58** Before 58, $B_{2-4}$ D (except $D_2$) $G_3$ ins. वैशं° उ°. — [a]) $K_1$ धर्मचरितं; $K_3$ °वचनं. — [b]) $Ś_1$ K Dc $D_{1-3.5}$ transp. व्याहृतं and कृष्णया.

**59** Before 59, S (except $G_3$ $M_2$) ins. सत्या. — [ab]) $D_5$ $G_1$ [अ]सि (for [अ]स्मि). — [c]) $K_3$ कामाकारः; $D_2$ कामकारं. $G_{2.4}$ वै (for हि). $G_1$ न मा कुरु सखित्वाच्च. — [d]) M सापहासं. $K_1$ प्रहासितुं; $B_1$ प्रकीर्तितं; Dn $D_3$ (by corr.). $_{4-6}$ $T_1$ $G_{1-3}$ प्रभाषितं.

Colophon. — *Major parvan:* $K_{1.2}$ $G_{1.2.4}$ आरण्य ($G_1$ preceded by श्रीमद्). — *Sub-parvan:* $Ś_1$ K $B_{1.4}$ Dc Dn $D_{1-3}$ $G_1$ $M_2$ द्रौपदीसत्यभामासंवाद; $B_2$ सत्यभामासं°; $B_3$ $D_{4.6}$ $G_3$ सत्यभामाद्रौपदीसं°; $D_5$ द्रौपदीसत्यासं°. — *Adhy. no.* (figures, words or both): Dn 232 ($Dn_2$ 231); $D_1$ 235; T $G_1$ 223; $G_{2.4}$ $M_2$ (*inf. lin.*) 225 ($M_2$ orig. 227); $M_1$ (erroneously) 125. — *Śloka no.:* $Dn_{2}$. $n_3$ 60; $D_{1.6}$ 61.

## 223

**1** [a]) $K_2$ $B_{1.3}$ T $G_1$ इदं (for इमं). $K_4$ उपेत्य (for अपेत-). $B_{2.4}$ D (except $D_{1-3.5}$) $G_3$ -मोहं (for -दोषं). — [c]) $B_{1-3}$ Dn $D_{4.6}$ $G_{1.3}$ अस्मिन्; Dc $D_{1.5}$ तस्मिन् (for यस्मिन्). $D_5$ पथि; $T_2$ $G_1$ सह (for सखि). — [d]) $Ś_1$ उद्वेत्स्यसि; $K_{1.2}$ इच्छेत्स्य°; $B_1$ आश्लिष्य°; $D_1$ आत्सेत्स्य°; $T_2$ आजेष्य°; $G_{1.2.4}$ आकर्ष° (for आच्छेत्स्य°).

**2** [a]) $B_1$ मन्ये; S (except $G_3$) किंचित् (for सत्ये). — [b]) $B_1$ च देवकेषु; $B_{2.3}$ Dn $D_{4.6}$ $G_3$ सदेवकेषु. — [c]) $K_1$ दैवतं; $B_3$m $Dn_2$. $n_3$ $D_{4-6}$ $G_3$ तुष्यति; $B_4$ $Dn_1$ तस्य तु (for तस्य हि). $K_1$ तस्य कामा; $K_2$ सर्वकामो; $K_4$ सर्वलोका; $B_1$ $D_5$ सर्वकामान्. — [d]) $B_1$ $D_5$ दद्यात् (for लभ्याः). B D (except $D_{1-3.5}$) $G_3$ प्रसादात्. $Ś_1$ $K_{1.2}$ $G_1$ कुपिते च (for °तश्च).

**3** [b]) B Dn $D_{4.6}$ $G_{1.3}$ [उ]त्तम° (for [अ]द्भुत°). — [c]) $Ś_1$ सुखं तथैव; $B_2$ तथैव गंधः. — [d]) $K_{2.4}$ स्वर्गस्य; $T_1$ स्वर्गं च. $K_1$ $B_{1-3}$ Dc $T_1$ $G_{2.4}$ लोके. $K_1$ (by

C. 3. 14712
B. 3. 234. 3
K. 3. 235. 3

स्वर्गश्च लोको विषमा च कीर्तिः ॥ ३
सुखं सुखेनेह न जातु लभ्यं
दुःखेन साध्वी लभते सुखानि ।
सा कृष्णमाराधय सौहृदेन
प्रेम्णा च नित्यं प्रतिकर्मणा च ॥ ४
तथाशनैश्चारुभिरग्र्यमाल्यै-
र्दाक्षिण्ययोगैर्विविधैश्च गन्धैः ।
अस्याः प्रियोऽस्मीति यथा विदित्वा
त्वामेव संश्लिष्यति सर्वभावैः ॥ ५
श्रुत्वा स्वरं द्वारगतस्य भर्तुः
प्रत्युत्थिता तिष्ठ गृहस्य मध्ये ।
दृष्ट्वा प्रविष्टं त्वरितासनेन
पाद्येन चैव प्रतिपूजय त्वम् ॥ ६
संप्रेषितायामथ चैव दास्या-
मुत्थाय सर्वं स्वयमेव कुर्याः ।
जानातु कृष्णस्तव भावमेतं
सर्वात्मना मां भजतीति सत्ये ॥ ७
त्वत्संनिधौ यत्कथयेत्पतिस्ते
यद्यप्यगुह्यं परिरक्षितव्यम् ।
काचित्सपत्नी तव वासुदेवं
प्रत्यादिशेत्तेन भवेद्विरागः ॥ ८
प्रियांश्च रक्तांश्च हितांश्च भर्तु-
स्तान्भोजयेथा विविधैरुपायैः ।
द्वेष्यैरपक्षैरहितैश्च तस्य
भिद्यस्व नित्यं कुहकोद्धतैश्च ॥ ९
मदं प्रमादं पुरुषेषु हित्वा
संयच्छ भावं प्रतिगृह्य मौनम् ।
प्रद्युम्नसाम्बावपि ते कुमारौ

corr. ). $_{2.4}$ Dc $D_{2.3.5}$ विमला ; B Dn $D_{1.4.6}$ $G_3$ विपुला ; T $G_{1.2.4}$ M विविधा (for विषमा). $T_2$ $G_1$ हि (for च).

**4** c) $D_5$ कृष्णं त्वम् (for सा कृष्णम्). — d) $K_4$ परिकर्मणा ; $B_4$ $T_1$ पति° (for प्रति°).

**5** a) $Ś_1$ $B_{1.2}$ $G_{3.4}$ तथासनैश्च ; $T_1$ स्नानासनैश्च (for तथाशनैश्च). $K_1$ B Dc $Dn_3$ $D_1$ $T_1$ $G_{1.3}$ चारुभिरग्र्° ; $K_4$ $D_{2.3}$ चारुहिरण्य°. — b) $K_3$ मंत्रैः ; $T_1$ हासैः ; $T_2$ भावैः ; $G_1$ गाढैः (for गन्धैः). — c) $Ś_1$ $K_2$ यस्याः (for अस्याः). $Ś_1$ $K_{1.2.4}$ सदा ; $B_4$ Dc S (except $G_3$) तथा (for यथा). — d) $K_1$ $D_1$ तामेव. B Dn $D_{4.6}$ $G_3$ तद्विधत्स्व (for सर्वभावैः).

**6** a) $K_3$ स्वयं ; Dc $D_{1.5}$ $T_1$ $G_1$ $M_1$ °नं (for °रं). — b) $D_3$ $G_1$ तस्य ; $G_4$ [उ]त्तिष्ठ (for तिष्ठ). — c) $G_1$ तरसासनेन. — d) B D (except $D_{1.3.5}$) $G_{2-4}$ चैनं (for चैव). $Ś_1$ $K_1$ प्रतिपूजयेच्च ; $K_2$ °येश्च ; $K_{3.4}$ $D_{1-3.5}$ °येस्त्वं ; B Dn $D_{4.6}$ $G_3$ °यस्व ; $G_1$ °यित्वा ; M प्रतिपादयेस्त्वं.

**7** a) $K_4$ $D_{1-3}$ त्वं (for सं-). S (except $G_3$) अपि (for अथ). — b) $B_4$ काम्यं ; S (except $G_3$) चैव (for सर्वं). S (except $G_3$) प्रतिकर्म (for स्वयमेव). B Dn $D_{4.6}$ $G_3$ कार्यं ($B_4$ सर्वं) ; Dc कुर्यात् (for कुर्याः). — c) $Ś_1$ S (except $G_3$ $M_3$) जानाति ; $K_1$ न जातु (for जानातु). $T_2$ चैव भावं (for भावमेतं). $K_1$ $D_2$ एवं ; $B_3$ एनं ; $T_1$ एतत् ; $G_{2.4}$ एव (for एतं). — d) $Ś_1$ $K_{1.2}$ $D_3$ मा (for मां).

**8** a) $T_2$ वचनं (for कथयेत्). — b) $B_2$ $T_2$ परिरक्षणीयं. — c) $B_2$ $D_{4.6}$ $G_3$ कच्चित् (for काचित्). — d) $K_3$ $D_5$ °विशेत् (for °दिशेत्). $K_2$ हि रागः ; $K_4$ विरागाः ; $D_2$ विरक्तः ; $T_2$ $G_1$ विकारः (for विरागः).

**9** a) $Ś_1$ $K_2$ मान्यांश्च ; $K_1$ [अ]मात्यां° ; $K_{3.4}$ Dc $D_{1-3.5}$ पथ्यां° ; S (except $G_3$) रम्यां° (for रक्तां°). — b) $Ś_1$ $K_{1.2}$ त्वं (for तान्). $T_2$ $G_2$ भोजयेस्त्वं ; $G_1$ भावयेस्त्वं ; $M_1$ पूजयेथा (for भोज°). — c) $Ś_1$ $K_{1.2}$ Dc $D_{1-3.5}$ अपथ्यैर् ; $K_2$ च पथ्यैर् ; $K_4$ अपेष्यैर् ; $B_{1.4}$ $Dn_1$ $T_2$ $G_{2.4}$ उपेक्ष्यैर् ; $B_{2.3}$ $Dn_3$ अपेक्ष्यैर् ; $G_1$ अवेक्ष्यैर् ; M अभव्यैर् (for अपक्षैर्). $K_1$ $Dn_3m$ विविधैः (for अहितैः). $Ś_1$ $K_2$ च भर्तुर् ; $K_1$ उपायैर् ; $T_1$ च सत्ये (for च तस्य). — d) $Ś_1$ $K_2$ बिभेष्व ; $K_1$ बिभेषि ; $K_3$ $D_5$ बिभीष्व ; $K_4$ Dc $D_3$ बिभ्यस्व ; $D_2$ बिभास्व ; $T_1$ नित्यस्य ; $T_2$ भिदस्व (for भिद्यस्व). $K_3$ °द्धलै° ; B Dc $Dn_{2.}n_3$ $D_{3.4.6}$ $G_3$ °द्यतै° ; $T_1$ $G_1$ °त्थितै° (for °द्धतै°).

**10** a) $K_4$ $Dn_3$ $D_1$ मंदं ; $D_3$ मद- (for मदं). T $G_1$ M तदप्रमादं ($T_2$ $G_1$ इदं प्रमाणं) पुरुषेषु कृत्वा ; $G_{2.4}$ नैवं प्रमाणं कुहकेषु कुर्याः. — b) $K_4$ $D_{2.3}$ T M मानं ; Dc भागं ; $G_1$ -माना ; $G_{2.4}$ -मानां (for भावं). $K_{1.2}$ B $D_{2.3}$ परि° (for प्रति°). $D_2$ $M_1$ मानं ; T -मांण ; $G_{1.4}$ -माणा ; $G_2$ वाचं (for मौनम्). — c) $K_3$ $B_3$ $Dn_1$ $D_{3-6}$ °शांबा° (for

नोपासितव्यौ रहिते कदाचित् ॥ १०
महाकुलीनाभिरपापिकाभिः
स्त्रीभिः सतीभिस्तव सख्यमस्तु ।
चण्डाश्च शौण्डाश्च महाशनाश्च
चौराश्च दुष्टाश्चपलाश्च वर्ज्याः ॥ ११

एतद्यशस्यं भगवेदनं च
स्वर्ग्यं तथा शत्रुनिबर्हणं च ।
महार्हमाल्याभरणाङ्गरागा
भर्तारमाराधय पुण्यगन्धा ॥ १२

इति श्रीमहाभारते आरण्यकपर्वणि त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥

# २२४

वैशंपायन उवाच ।
मार्कण्डेयादिभिर्विप्रैः पाण्डवैश्च महात्मभिः ।
कथाभिरनुकूलाभिः सहासित्वा जनार्दनः ॥ १
ततस्तैः संविदं कृत्वा यथावन्मधुसूदनः ।
आरुरुक्षू रथं सत्यामाह्वयामास केशवः ॥ २

सत्यभामा ततस्तत्र स्वजित्वा द्रुपदात्मजाम् ।
उवाच वचनं हृद्यं यथाभावसमाहितम् ॥ ३
कृष्णे मा भूत्तवोत्कण्ठा मा व्यथा मा प्रजागरः ।
भर्तृभिर्देवसंकाशैर्जितां प्राप्स्यसि मेदिनीम् ॥ ४
न ह्येवं शीलसंपन्ना नैवं पूजितलक्षणाः ।

C. 3. 14726
B. 3. 235. 5
K. 3. 236. 5

---

नाम्बा°). — d) Ś1 K1 (m as in text). 2 न हि ते (for रहिते).

11 a) T2 महात्म्यलीलाभिर् (for °कुलीनाभिर्). D2 पापकाभिः; M2 अपालिकाभिः. — b) Ś1 K1. 4 B4 D1 (before corr.). 2. 3. 5 T G2. 4 सखीभिः (for सतीभिः). 1 K D1–3 सह (for तव). — c) K4 चंड्यश्च शौंड्यश्च; 1 चंडप्रचंडाश्च. G1 M शौंड्य° (for शौण्डा°). — d) K4 चौर्यश्च; B1 D1–3 M1 चौर्यां°; T1 G3. 4 चोरा°; T2 G1 घोरा° (for चौरा°).

12 a) T1 G2. 4 रहस्यं (for यशस्यं). B D (except D3) G3 भगदैवतं; T1 G1. 2. 4 M °वेतनं. — b) Dn2 तदा; 3 यथा (for तथा). — c) T1 G1 °मालाभरणांग- (for माल्याभरणाङ्ग-). T1 -माला; T2 G1. 2. 4 -रागैर् (for -रागा). — d) Ś1 K1. 2 Dc पुण्यगंधे; K3 गंधपुण्ये; B1 पुण्यगंधि; 4 S (except G3) °गंधैः.

Colophon. — *Major parvan:* K1. 2 G2. 4 M2 आरण्य. — *Sub-parvan:* K B Dc Dn1. n3 D1–6 G1. 3 द्रौपदी(B4 कृष्णा)सत्यभामासंवाद (K4 सत्यभामाद्रौपदीसं°). — *Adhy. no.* (figures, words or both): Dn (Dn1 marg.) 233 (Dn2 232); D1 236; T G1 224; G2. 4 ( M2 *inf. lin.*) 226 (M2 orig. 228). — *Śloka no.:* in D1 12 (in D1 this figure is followed by 16).

## 224

1 b) B1. 2. 3 (m as in text) ब्राह्मणै° (for पाण्डवै°). — c) G1 °रूपाभिः; M1 °कूल्याभिः (for °कूलाभिः). — d) B Dn D4. 6 G3 सह स्थित्वा (for सहासित्वा).

2 K2 om. (hapl.) 2ab. — a) Ś1 K1 तां; K4 स (for तैः). — b) G2 पांडवैर् (for यथावन्). — d) S (except G3) भारत (for केशवः).

3 a) B2 तां तु (for तत्र). — b) K3 जित्वा च; Dc1 पूजित्वा; D1 अर्चित्वा; T1 रंजित्वा; G1 सस्वजे (for स्वजित्वा). — c) B2 सत्यं (for हृद्यं). — d) Ś1 K1–3 B4 Dn D1. 2. 5 M1 °भावं (for °भाव-). Ś1 K D1–3. 5 -समाहिता; T1 G1. 2. 4 -समन्वितं.

4 a) K3 ततोत्कंठा. — In D4, the portion of the text from °गरः (in b) up to 3. 225. 11a is lost on a missing fol. (343). — c) T1 (?gloss) °सदृशैर् (for °संकाशैर्).

5 D4 missing (cf. v.l. 4). — b) D3 नैव; G4 एवं; M1 स्त्रियः (for नैवं). K2. 4 Dc D1. 5 G4 °लक्षणा. — c) B1 आप्नु° (for प्राप्नु°). K3 Dc D5 क्लेशान्; T2 कालं (for क्लेशं). — d) D1 तथा (for यथा). Ś1 K1 D2 असितेक्षणा.

6 D4 missing (cf. v.l. 4). — a) Dc तु; D3 हि

C. 3. 14726
B. 3. 235. 5
K. 3. 236. 5

प्राप्नुवन्ति चिरं क्लेशं यथा त्वमसितेक्षणे ॥ ५
अवश्यं च त्वया भूमिरियं निहतकण्टका ।
भर्तृभिः सह भोक्तव्या निर्द्वंद्वेति श्रुतं मया ॥ ६
धार्तराष्ट्रवधं कृत्वा वैराणि प्रतियात्य च ।
युधिष्ठिरस्थां पृथिवीं द्रष्टासि द्रुपदात्मजे ॥ ७
यास्ताः प्रव्राजमानां त्वां प्राहसन्दर्पमोहिताः ।
ताः क्षिप्रं हतसंकल्पा द्रक्ष्यसि त्वं कुरुस्त्रियः ॥ ८
तव दुःखोपपन्नाया यैराचरितमप्रियम् ।
विद्धि संप्रस्थितान्सर्वांस्तान्कृष्णे यमसादनम् ॥ ९
पुत्रस्ते प्रतिविन्ध्यश्च सुतसोमस्तथा विभुः ।
श्रुतकर्मार्जुनिश्चैव शतानीकश्च नाकुलिः ।
सहदेवाच्च यो जातः श्रुतसेनस्तवात्मजः ॥ १०
सर्वे कुशलिनो वीराः कृतास्त्राश्च सुतास्तव ।
अभिमन्युरिव प्रीता द्वारवत्यां रता भृशम् ॥ ११
त्वमिवैषां सुभद्रा च प्रीत्या सर्वात्मना स्थिता ।
प्रीयते भावनिर्द्वंद्वा तेभ्यश्च विगतज्वरा ॥ १२
भेजे सर्वात्मना चैव प्रद्युम्नजननी तथा ।
भानुप्रभृतिभिश्चैनान्विशिनष्टि च केशवः ॥ १३
भोजनाच्छादने चैषां नित्यं मे श्वशुरः स्थितः ।
रामप्रभृतयः सर्वे भजन्त्यन्धकवृष्णयः ।
तुल्यो हि प्रणयस्तेषां प्रद्युम्नस्य च भामिनि ॥ १४
एवमादि प्रियं प्रीत्या हृद्यमुक्त्वा मनोनुगम् ।
गमनाय मनश्चक्रे वासुदेवरथं प्रति ॥ १५
तां कृष्णां कृष्णमहिषी चकाराभिप्रदक्षिणम् ।

---

(for च). $B_4$ कृष्णे (for भूमिर्). — $^{b}$) $B_4$ भूमिर् (for इयं). $T_1$ निःसृत° (for निहत°).

**7** $D_4$ missing (cf. v.l. 4). — $^{a}$) $K_1$ श्रुत्वा (for कृत्वा). — $^{b}$) $B_2$ प्रतिपत्य; $G_3$ °पात्य (for °यात्य). — $^{d}$) $K_4$ $D_{1-3}$ द्रक्ष्यसि; $B_1$ वीक्ष्यसे; $B_{2.3}$ Dc Dn $D_{4.6}$ $G_3$ द्रक्ष्यसे.

**8** $D_4$ missing (cf. v.l. 4). $D_2$ om. (hapl.) up to द्रक्ष्यसि. — $^{a}$) $T_1$ त्वां (for ताः). $K_4$ $B_{1.3}$ Dc $D_{1.3}$ $T_2$ $G_3$ प्रव्रज°; $T_1$ $G_2$ प्रव्रज्य° (for प्रव्राज°). Ś$_1$ तां (for त्वां). — $^{c}$) Ś$_1$ K $D_{1.3.5}$ गत° (for हत°). — $^{d}$) $B_1$ द्रक्ष्यसे. $B_2$ कुरुस्त्रियं; $T_2$ कुलस्त्रियः.

**9** $D_4$ missing (cf. v.l. 4). — $^{c}$) $T_2$ $G_{1.2}$ तान् (for सं-). — $^{d}$) $T_2$ त्वत्कृते; $G_1$ कृष्णे त्वं (for तान्कृष्णे). — After 9, Ś$_1$ $K_{1.2.4}$ $D_{1-3}$ ins.:

1097* ये च तत्र स्थिता राज्ञि तत्पक्षीयाः क्षितीश्वराः ।
तेषां कालः क्षितीशानां प्राप्तः कृष्णे दुरासदः ।

**10** $D_4$ missing (cf. v.l. 4). — $^{a}$) Ś$_1$ $K_{1-3}$ $D_5$ transp. ते and च. $D_1$ तु (for ते). $K_4$ $B_1$ $D_{2.3}$ तु; $D_1$ ते (for च). — $^{b}$) $K_3$ Dc $D_3$ $T_1$ श्रुत° (for सुत°). Ś$_1$ K $D_{1.3}$ तथा शिशुः; $B_1$ Dn $D_{2.6}$ $G_3$ तथाविधः; $T_1$ तथाभिभूः; $T_1$ $G_1$ च वर्धनः (for तथा विभुः). — $^{d}$) $D_{1.6}$ $G_3$ तु (for च). — $^{f}$) Ś$_1$ $K_{1.2}$ श्रु($K_1$ सु)तसोम° (for श्रुतसेन°).

**11** $D_4$ missing (cf. v.l. 4). — $^{b}$) $K_4$ कृतार्था° (for कृतास्त्रा°). — $^{c}$) K1m $G_1$ प्रीत्या (for प्रीता). — $^{d}$) K1m सुभद्रायां (for द्वारवत्यां). $T_1$ सुता (for रता).

**12** $D_4$ missing (cf. v.l. 4). — $^{a}$) $G_1$ [अ]पि (for च). — $^{b}$) $D_5$ $T_1$ प्रीता (for प्रीत्या). — $^{c}$) Ś$_1$ $K_1$ प्रीतये (for प्रीयते). Ś$_1$ B Dc Dn $D_{2.4.6}$ $G_3$ तव; $D_1$ चैव (for भाव-). $D_5$ °निर्बद्धा (for °निर्द्वंद्वा). — After 12, B ($B_1$ marg.) Dc Dn $D_3$ (marg. *sec. m.*)$_{.5.6}$ $G_3$ ins.:

1098* दुःखिता तेन दुःखेन सुखेन सुखिता तथा ।

**13** $D_4$ missing (cf. v.l. 4). — $^{a}$) $K_3$ भोजा; $K_4$ भजे; B Dc Dn $D_{1.6}$ $G_3$ भजेत् (for भेजे). $K_4$ $D_1$ T $G_{2.4}$ चैतान्; $D_3$ $G_1$ $M_1$ चैनान् (for चैव). $D_2$ भजेत भोजं सर्वात्मानं (sic). — $^{c}$) $K_{1.4}$ $B_2$ Dc $D_{2.3.5}$ चैतान् (for चैनान्). — $^{d}$) Ś$_1$ $K_2$ $T_1$ M न (for च).

**14** $D_4$ missing (cf. v.l. 4). — $^{a}$) Ś$_1$ चैनान्; $T_2$ $G_1$ तेषां (for चैषां). — $D_2$ om. (hapl.) $14^{bcde}$. — $^{b}$) A few MSS. स्वसुरः (for श्वशुरः). — $^{e}$) $K_1$ प्रत्यय° (for प्रणय°). — $^{f}$) B D (except $D_{1-3}$; $D_4$ missing) भाविनि; $T_2$ $G_4$ भामिनी.

**15** Before 15, $B_{3.4}$ (both marg.) $D_1$ $T_1$ $G_1$ M ins. वैशं° उ° (resp. वैशं°). $D_4$ missing (cf. v.l. 4). — $^{a}$) Ś$_1$ $K_{1.2.4}$ $B_4$ $D_{1-3.5}$ सांत्वं; $K_3$ Dn $D_{4.6}$ सत्यं; $B_{1-3}$ Dc $G_3$ सर्वं; $T_2$ प्रीता (for प्रीत्या). — $^{b}$) Ś$_1$ $K_{1.2}$ $B_1$ °रमं; Dc $T_2$ $G_1$ °गतं (for °नुगम्). — $^{c}$) Ś$_1$ $K_{2-4}$ $B_1$ Dc $D_{1.3.5}$ $G_{1.2.4}$ मतिं (for मनश्च).

**16** $D_4$ missing (cf. v.l. 4). — $^{a}$) Ś$_1$ $K_{1.2.4}$ $D_{1.5}$ $T_2$ $G_{1.4}$ तां कृष्णा °महिषीं. — $^{b}$) $K_4$ (by corr.) $D_5$ °प्रदक्षिणां. — $^{c}$) $B_1$ Dc शौरिः (for शौरेः). — $^{d}$) $K_{1.2.4}$ $B_{2-4}$ D (except $D_6$; $D_4$ missing) [अ]थ (for च). $B_{2-4}$ Dn $D_{5.6}$ भाविनी (for भामिनी). $B_1$ सत्य-

आरुरोह रथं शौरेः सत्यभामा च भामिनी ॥ १६
स्मयित्वा तु यदुश्रेष्ठो द्रौपदीं परिसान्त्व्य च ।
उपावर्त्य ततः शीघ्रैर्हयैः प्रायात्परंतपः ॥ १७

इति श्रीमहाभारते आरण्यकपर्वणि चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥ समाप्तं द्रौपदीसत्यभामासंवादपर्व ॥

# २२५

जनमेजय उवाच ।

एवं वने वर्तमाना नराग्र्याः
शीतोष्णवातातपकर्शिताङ्गाः ।
सरस्तदासाद्य वनं च पुण्यं
ततः परं किमकुर्वन्त पार्थाः ॥ १

वैशंपायन उवाच ।

सरस्तदासाद्य तु पाण्डुपुत्रा
जनं समुत्सृज्य विधाय चैषाम् ।
वनानि रम्याण्यथ पर्वतांश्च
नदीप्रदेशांश्च तदा विचेरुः ॥ २
तथा वने तान्वसतः प्रवीरा-
न्स्वाध्यायवन्तश्च तपोधनांश्च ।
अभ्याययुर्वेदविदः पुराणा-
स्तान्पूजयामासुरथो नराग्र्याः ॥ ३
ततः कदाचित्कुशलः कथासु
विप्रोऽभ्यगच्छद्भुवि कौरवेयान् ।
स तैः समेत्याथ यदृच्छयैव
वैचित्रवीर्यं नृपमभ्यगच्छत् ॥ ४
अथोपविष्टः प्रतिसत्कृतश्च
वृद्धेन राज्ञा कुरुसत्तमेन ।
प्रचोदितः सन्कथयांबभूव
धर्मानिलेन्द्रप्रभवान्यमौ च ॥ ५

C. 3. 14745
B. 3. 236. 5
K. 3. 237. 5

भामासहायवान्; $T_1$ $M_1$ कृष्णयानुगता शुभा.

**17** $D_4$ missing (cf. v.l. 4); $D_1$ om. 17. — [a]) Dc $D_5$ स्मितं कृत्वा; $T_1$ $G_1$ स स्मयित्वा; $G_{2.4}$ सांत्वयित्वा (for स्मयित्वा तु). $D_3$ च; $T_2$ स (for तु). — [b]) $B_3$ °शांत्य च; $D_2$ °सांत्वयन् (for °सान्त्व्य च). — [c]) $K_1$ $B_4$ $D_{2.3}$ $T_1$ $G_{1.3.4}$ °वृत्य (for °वर्त्य). $K_{3.4}$ $D_{2.3}$ रथं (for ततः). $Ś_1$ K $D_{2.3.5}$ शीघ्रं; $B_4$ शीघ्रो. — [d]) $K_3$ Dc $T_1$ $G_4$ M परंतप; B पुरं तदा; Dn $D_6$ $G_3$ पुरं स्वकं; $T_2$ $G_1$ नराधिप.

Colophon om. in $Ś_1$ $K_{1.2}$. $D_4$ missing. — *Major parvan:* $G_{2.4}$ आरण्य. — *Sub-parvan:* $K_4$ B Dc Dn $D_{2.3.6}$ $G_3$ द्रौपदीसत्यभामासंवाद; to it $K_4$ Dc $Dn_{1.n2}$ $D_{2.3}$ add समाप्त. — *Adhy. name:* $K_3$ $D_5$ वासुदेवाभिगमनं; $D_1$ वासुदेवाभिगमनोपाख्यानसमाप्तिः; $G_1$ कृष्णद्वारकाप्रवेशः. — *Adhy. no.* (figures, words or both): $B_4$ 306; Dn 234 ($Dn_2$ 233); $D_1$ $M_2$ (*inf. lin.*) 237 ($M_2$ orig. 229); T $G_1$ 225; $G_{2.4}$ $M_1$ 227. — *Śloka no.:* Dn $D_1$ 18.

## 225

**1** In $D_4$, 1–11[a] is lost on a missing fol. (cf. v.l. 3. 224. 4). — [b]) $Ś_1$ $K_2$ $B_{2.3}$ $Dn_{1.n3}$ $D_6$ $G_3$ °कर्षितांगाः; $D_1$ °कर्षिताश्च. — [c]) $G_1$ समा° (for तदा°). — [d]) $K_{3.4}$ $D_2$ किमकुर्वंन्स्म (for °कुर्वन्त).

**2** $D_4$ missing (cf. v.l. 1). — [a]) $Ś_1$ $K_{1.2}$ Dc च (for तु). — [b]) $T_1$ $M_1$ सतां च; $T_2$ $G_{1.2.4}$ $M_2$ विहाय (for विधाय). $Ś_1$ $K_2$ चैव; $K_1$ $G_3$ रक्षां; Dn $D_{1.3.4}$ वेशं ($D_{1.3}$ °षं); $T_1$ $M_1$ तेषां; $T_2$ $G_{1.2.4}$ चेष्टं (for चैषाम्). — [c]) $G_1$ च (for [अ]थ). — [d]) $K_1$ $D_1$ S (except $G_3$ $M_1$) तथा (for तदा).

**3** $D_4$ missing (cf. v.l. 1). — [a]) $Ś_1$ $K_{1.2.4}$ $D_{1–3}$ तस्मिन्; $T_2$ $G_{1.2.4}$ श्रुत्वा (for तथा). $T_1$ $G_{2.4}$ च (for प्र-).

**4** $D_4$ missing (cf. v.l. 1). — [a]) $D_1$ कुशली. $G_1$ कथाविद्. — $G_1$ om. 4[c]–6[a]. — [c]) $B_2$ सर्वैः; $T_1$ $G_{2.4}$ स वै (for स तैः). — [d]) $D_2$ $T_1$ अन्व° (for अभ्य°).

**5** $D_4$ missing (cf. v.l. 1). $G_1$ om. 5 (cf. v.l. 4).

C. 3. 14746
B. 3. 236. 6
K. 3. 237. 6

कृशांश्च वातातपकर्शिताङ्गा-
न्दुःखस्य चोग्रस्य मुखे प्रपन्नान् ।
तां चाप्यनाथामिव वीरनाथां
कृष्णां परिक्लेशगुणेन युक्ताम् ॥ ६
ततः कथां तस्य निशम्य राजा
वैचित्रवीर्यः कृपयाभितप्तः ।
वने स्थितान्पार्थिवपुत्रपौत्रा-
ञ्श्रुत्वा तदा दुःखनदीं प्रपन्नान् ॥ ७
प्रोवाच दैन्याभिहतान्तरात्मा
निःश्वासबाष्पोपहतः स पार्थान् ।
वाचं कथंचित्स्थिरतामुपेत्य
तत्सर्वमात्मप्रभवं विचिन्त्य ॥ ८
कथं नु सत्यः शुचिरार्यवृत्तो
ज्येष्ठः सुतानां मम धर्मराजः ।
अजातशत्रुः पृथिवीतलस्थः
शेते पुरा राङ्कवकूटशायी ॥ ९
प्रबोध्यते मागधसूतपूगै-
र्नित्यं स्तुवद्भिः स्वयमिन्द्रकल्पः ।
पतत्रिसंघैः स जघन्यरात्रे
प्रबोध्यते नूनमिडातलस्थः ॥ १०
कथं नु वातातपकर्शिताङ्गो
वृकोदरः कोपपरिप्लुताङ्गः ।
शेते पृथिव्यामतथोचिताङ्गः
कृष्णासमक्षं वसुधातलस्थः ॥ ११
तथार्जुनः सुकुमारो मनस्वी
वशे स्थितो धर्मसुतस्य राज्ञः ।
विदूयमानैरिव सर्वगात्रै-
र्ध्रुवं न शेते वसतीरमर्षात् ॥ १२

— $^{b}$) D1 °पुंगवेन (for °सत्तमेन). — $^{c}$) D1 प्रणोदितः (for प्रचो°). K4 B Dn D2. 3. 6 G3 M2 संकथ°; Dc D5 सत्कथ°; T2 [अ]यं कथ° (for सन्कथ°).

**6** D4 missing (cf. v.l. 1). G1 om. $6^{a}$ (cf. v.l. 4). — $^{a}$) Ś1 B2 Dn2. n3 °कर्षितांगान्; T2 °कर्शितांश्च and °कर्शितांगान् also. — $^{b}$) K3 दुःखग्रहोग्रस्य (for दुःखस्य चोग्रस्य). K2 मुख-; Dc सुखे; M1 मुखं (for मुखे). — $^{d}$) T1 °त्याग- (for °क्लेश-). D2 -गणानु°; D3 T1 M1 -गणेन (for -गुणेन).

**7** D4 missing (cf. v.l. 1). D1 om. 7. G2. 4 transp. $7^{ab}$ and $7^{cd}$. — $^{a}$) B Dn D6 T1 G कथास् (for कथां). — $^{c}$) Ś1 K1–3 B2 Dc D2. 3 तदा; K4 B1. 3. 4 Dn D5. 6 G3 तथा (for स्थितान्). T2 पांडव° (for पार्थिव°). — $^{d}$) D5 कृष्णां (for श्रुत्वा). K4 D2. 3 [अ]थ (D3 तु) तान्; B Dn D5. 6 T G3. 4 M1 तथा (for तदा). K2. 3 °नदी- (for °नदीं).

**8** D4 missing (cf. v.l. 1). K3 om. $8^{ab}$. — $^{a}$) B4 देव्याभिह°; D5 दैन्याभिहि°; T2 G1 चैनान्विहि° (for दैन्याभिह°). — $^{b}$) B Dc Dn D6 G3 °वातोप°; D1–3 °कंठोप°; D5 °गर्भोप° (for °बाष्पोप°). B Dc Dn D6 G3 M तदानीं; D1–3 च राजा; D5 शुभार्थी; T2 G4 स्म पार्थान्; G2 च पार्थान् (for स पार्थान्). Ś1 K4 °कंठोपहतस्वरातां (K4 °र्थां); K1. 2 °कंठापहतस्वरातं (K2 °स्वरांतां). — $^{d}$) B3 प्रचिंत्य (for विचिन्त्य).

**9** D4 missing (cf. v.l. 1). — $^{a}$) D6 G3 तु (for नु). Ś1 K1. 2 आत्मवान्वै (for आर्यवृत्तो). — $^{b}$) B2 G4 श्रेष्ठः (for ज्येष्ठः). — $^{c}$) B4 Dn D6 G3 पृथिवीतले स्म; T1 G2. 4 प्र(G4 व्य)थितः स्म शेते; T2 G1 वसुधातलेषु. — $^{d}$) T1 G2. 4 भूमौ (for शेते). K4 D1–3 शोभनतल्पशायी; B4 बांधवकूटशायी.

**10** D4 missing (cf. v.l. 1). — $^{a}$) Ś1 K1. 2 °संघैर्; B2 °वृंदैर्; B3m T G2. 4 °पुत्रैर् (for °पूगैर्). — $^{b}$) T1 यज्ञं; M1 यस्तं (for नित्यं). — $^{c}$) D1 अपत्रि° (for पतत्रि°). T2 G1. 2. 4 नृपोद्य (for जघन्य-). B4 T G1. 2. 4 -रात्रौ; Dc -काले (for -रात्रे). — $^{d}$) Dc प्रबुध्यते. K4 D2. 3 S इला(G1 °हा)तलस्थः; B Dc D1 इहा(B2 D1 °वा)चलस्थः (for इडा°).

**11** D4 missing up to $11^{a}$ (cf. v.l. 1). G2 om. (hapl.) 11. — $^{a}$) Ś1 B Dn D5. 6 G3 °कर्षितांगो. — Ś1 om. (hapl.) $11^{bc}$. — $^{b}$) T2 G1. 4 M1 °परिप्लुताक्षः. — B2 transp. $11^{c}$ and $11^{d}$. — $^{c}$) T G1. 4 M °चितः स (M1 सन्) (for °चिताङ्गः).

**12** $^{b}$) B4 °राजस्य (for °सुतस्य). — $^{c}$) Ś1 K1. 2 T2 G2. 4 विधूयमानै°. — $12^{d} = 13^{d}$.

**13** K4 D3 om. (hapl.) 13. — $^{b}$) Ś1 K1. 2 दृष्ट्वा च भीमः (for भीमं च दृष्ट्वा). K3. 4 B Dn D4–6 G3 °विप्र-

यमौ च कृष्णां च युधिष्ठिरं च
भीमं च दृष्ट्वा सुखविप्रयुक्तान् ।
विनिःश्वसन्सर्प इवोग्रतेजा
ध्रुवं न शेते वसतीरमर्षात् ॥ १३
तथा यमौ चाप्यसुखौ सुखार्हौ
समृद्धरूपावमरौ दिवीव ।
प्रजागरस्थौ ध्रुवमप्रशान्तौ
धर्मेण सत्येन च वार्यमाणौ ॥ १४
समीरणेनापि समो बलेन
समीरणस्यैव सुतो बलीयान् ।
स धर्मपाशेन सितोग्रतेजा
ध्रुवं विनिःश्वस्य सहत्यमर्षम् ॥ १५
स चापि भूमौ परिवर्तमानो
वधं सुतानां मम काङ्क्षमाणः ।
सत्येन धर्मेण च वार्यमाणः
कालं प्रतीक्षत्यधिको रणेऽन्यैः ॥ १६
अजातशत्रौ तु जिते निकृत्या
दुःशासनो यत्परुषाण्यवोचत् ।
तानि प्रविष्टानि वृकोदराङ्गं
दहन्ति मर्माग्निरिवेन्धनानि ॥ १७
न पापकं ध्यास्यति धर्मपुत्रो
धनंजयश्चाप्यनुवर्तते तम् ।
अरण्यवासेन विवर्धते तु
भीमस्य कोपोऽग्निरिवानिलेन ॥ १८
स तेन कोपेन विदीर्यमाणः
करं करेणाभिनिपीड्य वीरः ।
विनिःश्वसत्युष्णमतीव घोरं
दहन्निवेमान्मम पुत्रपौत्रान् ॥ १९
गाण्डीवधन्वा च वृकोदरश्च
संरम्भिणावन्तककालकल्पौ ।

C. 3. 14760
B. 3. 236. 20
K. 3. 237. 20

---

युक्तं; D1. 2 °विप्रमुक्तं; T2 G1 °संवियुक्तं. — $13^d = 12^d$.

**14** a) K2 चापि सुखौ; K3 चाप्र्यसुखौ (for चाप्य°). K3 सुखाग्र्यौ (for °र्हौ). — b) Ś1 समिद्ध°; K4 सवृद्ध°; B3 समूर्ध° (for समृद्ध°). K3 Dc यथैव; T1 अतीव (for दिवीव). — d) = (var.) 16c. K4 D2. 3 (before corr.) S (except G3) क्रोधेन सत्येन; D1 सत्येन धर्मेण (by transp.). M तु (for च). Ś1 K1 B1 Dc1 D2 धार्य°; D5 वर्ध° (for वार्य°).

**15** a) D3 समीरणस्य (for °णेन). K3 Dc2 D4-6 G3 [अ]द्य; B Dc1 Dn D1 [अ]थ; T G1. 2. 4 [इ]ह; M [ए]व (for [अ]पि). — b) B4 [अ]थ; T1 G1. 2 [इ]व; T2 [अ]पि (for [ए]व). G2 समो (for सुतो). — c) T1 यतो°; T2 G1 वृतो°; G2. 4 ततो° (for सितो°). K3 B1-3 D (except D2. 3) G3 °ग्रजेन (for °ग्रतेजा). — d) Ś1 K1. 2. 4 D5 विनिश्रित्य; a few MSS. विनिश्वस्य. B4 D1 [अ]मर्षात्; D3 [अ]मर्षी; T1 [अ]मर्षः (for [अ]मर्षम्).

**16** a) Dc परिधार्यमाणो. — c) = (var.) 14d. D1 धर्मेण सत्येन (by transp.). T2 G1 नि- (for च). — d) K3 कामं (for कालं). Dc [अ]थ कौरवेंद्रः; D4. 6 [अ]धिको रसोन्यैः.

**17** a) T1 °शत्रुं (for °शत्रौ). K4 नि- (for तु). T1 ग्लहे (for जिते). D1 निकृत्यां; G1. 2 निकृत्य. — c) G1 वृकोदरांगे. — d) K2 D2 दहति. Ś1 K D1-3 मं(K1. 2 [अ]मं)दाग्निर्; B Dc Dn D4. 6 G3 कक्षाग्निर्; G1 मर्मेग्निर्; G2. 4 धर्माग्निर् (for मर्माग्निर्). K4 [इं]धनेन (for [इ]न्धनानि).

**18** K3 om. (hapl.) from 18a up to कोपोऽग्निर् (in 18d). — a) Ś1 K1. 2 पातकं; T2 G1. 2 पापके; G4 पावके; M1 पावकं. B1 पश्यति; T2 G1. 2. 4 स्यास्य°; M1 धास्य°; M2 धाक्ष्य° (for ध्यास्य°). Ś1 धर्मराजो; K2 ब्रह्मपुत्रो. — b) D1 वा (for च). B Dc Dn D4-6 G3 °वर्त्स्यते; D1 °वत्स्यते (for °वर्तते). — c) Ś1 K1. 2 स; K4 B2 [ऽ]स्य (for तु). — d) K1 (by corr.). 4m D1. 3 G1 कोपाग्निर्. Ś1 K1. 2. 4 D1-3 [इं]धनेन (K4m [इं]धनानि); K3 M2 [अ]नलेन (for [अ]निलेन).

**19** a) K3. 4 B D G3 विदह्यमानः (K3 Dc D1 °दार्यमाणः); M2 निवार्यमाणः. — b) T2 G1 [अ]पि (for [अ]भि-). K3 Dc मानी (for वीरः). — c) K4 D2 T °निश्वसन्. Ś1 K1. 2 G1 [उ]ग्रम् (for [उ]ष्णम्). K3 Dc D1. 5 वीरो (for घोरं). — d) T1 G1. 2. 4 M2 [इ]मां; T2 [ए]नं (for [इ]मान्). Ś1 K4 °चेलान्; K1. 2 °शैलान्; D1-3. 5 T1 G1. 2. 4 M °सेनां; T2 °मास्ते (for °पौत्रान्).

**20** a) D2 गांजीवधन्वा. Ś1 K1. 2 स (for च). — b) K2 संरंभणाव्. T2 G1 पन्नग- (for [अ]न्तक-). Dc -कालतुल्यौ

C. 3. 14760
B. 3. 236. 20
K. 3. 237. 20

न शेपयेतां युधि शत्रुसेनां
 शरान्किरन्तावशनिप्रकाशान् ॥ २०
दुर्योधनः शकुनिः सूतपुत्रो
 दुःशासनश्चापि सुमन्दचेताः ।
मधु प्रपश्यन्ति न तु प्रपातं
 वृकोदरं चैव धनंजयं च ॥ २१
शुभाशुभं पुरुषः कर्म कृत्वा
 प्रतीक्षते तस्य फलं स्म कर्ता ।
स तेन युज्यत्यवशः फलेन
 मोक्षः कथं स्यात्पुरुषस्य तस्मात् ॥ २२
क्षेत्रे सुकृष्टे ह्युपिते च बीजे
 देवे च वर्षत्यृतुकालयुक्तम् ।
न स्यात्फलं तस्य कुतः प्रसिद्धि-
 रन्यत्र दैवादिति चिन्तयामि ॥ २३
कृतं मताक्षेण यथा न साधु
 साधुप्रवृत्तेन च पाण्डवेन ।
मया च दुष्पुत्रवशानुगेन
 यथा कुरूणामयमन्तकालः ॥ २४
ध्रुवं प्रवास्यत्यसमीरितोऽपि
 ध्रुवं प्रजास्यत्युत गर्भिणी या ।
ध्रुवं दिनादौ रजनीप्रणाश-
 स्तथा क्षपादौ च दिनप्रणाशः ॥ २५
क्रियेत कस्मान्न परे च कुर्यु-
 र्वित्तं न दद्युः पुरुषाः कथंचित् ।
प्राप्यार्थकालं च भवेदनर्थः
 कथं नु तत्स्यादिति तत्कुतः स्यात् ॥ २६

(for -कालकल्पौ). — c) D1. 3 G2. 4 निःशेषयेतां; D5 सुयोधयेतां. Ś1 K1. 2. 4 D2 °शेषं (for °सेनां). — d) K3 Dc D1. 5 सृजंता°; K4 D2. 3 क्षिपंता° (for किरन्ता°).

**21** a) K1 सूर्यं° (for सूत°). — b) G4 धनंजय° (for दुःशासन°). Ś1 K1 (*sup. lin.*) समर्षं°; K1 (orig.). 2 स्वमर्षं°; T G1. 2. 4 सुमंदतेजाः. — c) Ś1 K1 साधु (for मधु). Ś1 K1. 2 च (for तु). — d) B D (except D1–3) G3 यद् द्यूतमालंब्य (Dc °लक्ष्य) हरन्ति राज्यं.

**22** a) B Dn D4. 6 G3 कर्म नरो हि (for पुरुषः कर्म). — b) D1 तत्स्व-; S (except G3) चेत्स (for तस्य). Ś1 K1. 2 Dc D5 तु; B2 हि (for स्म). K4 B4 D2 S (except G3) विपाके (for स्म कर्ता). — c) D1 सत्येन; T2 एतेन (for स तेन). B Dn D4 मुह्य° (for युज्य°). — d) K3 B1 Dc तस्य (for तस्मात्).

**23** a) D2 क्षुद्रे (for क्षेत्रे). Ś1 K1 सुपिष्टे; Dc प्रकृष्टे (for सु°). Ś1 K1. 2 [ऽ]प्युपिते; D1. 2 [ऽ]भ्युदि°; T1 M1 रसि°; T2 विहि°; G1 रहि°; G2. 4 वपि°; M2 रसिके (for ह्युपिते). B4 D1 [ऽ]पि (for च). Ś1 K1. 3. 4 D1. 2. 3 (*sup. lin.* as in text) काले; B4 T2 M सम्यग्; T1 देवे (for बीजे). — b) T1 बीजे; G1 दैवे (for देवे). D1 तु (for च). K4 B Dc D1–4. 6 T2 G1 [अ]नु-; T1 [अ]थ; G2. 4 [उ]त (for [ऋ]तु-). — c) Ś1 वस्तुः; K1. 2 वसुः (for न स्यात्). T2 G1. 2 M2 तु साप्य(M2 °प्र)-सिद्धिर्; T1 तु साधु साध्वी; M1 तु संप्रसिद्धिर् (for कुतः प्रसिद्धिर्). — d) D1 चिंतनीयं; S (except G3) नास्ति हेतुः (for चिन्तयामि).

**24** a) K4 D2 अनार्येण; D1 कृताक्षेण (for मताक्षेण). K3 कृतं ममापेक्षणया न साधु. — b) Ś1 K B4 D1–3. 5 °प्रवृत्तेषु च पांडवेषु. — c) T1 न; T2 G1 तु (for च). T2 G1 दुष्पुत्रशताकुलेन. — d) K4 D2. 3. 5 तथा; S (except G3) कृतः (for यथा).

**25** a) T2 G1. 2. 4 M प्रशाम्यति (for प्रवास्यति), and [ऽ]ग्निर् (for ऽपि). T1 ध्रुवं पिबत्यस्य समीरणोग्निर्. — b) Ś1 K1. 2 प्रवास्यति; D1 प्रसू°; G1 प्रया° (for प्रजा°). Ś1 K1. 2 [अ]पि (for [उ]त). — c) Ś1 दिवादौ; K1 प्रणा° (for दिना°). — d) K3 ऋण° (for दिन°).

**26** a) Ś1 K D1–3 G3 क्रियां च; B4 क्षीयेत; D5 क्रियान्न; T1 G2 कृते च (for क्रियेत). B1 T तस्मात्; B4 दर्पात्; Dc कर्मात् (for कस्मात्). K3. 4 D1–3 न नराः; B1–3 Dc Dn अपरे; D5 त्वपरे (for न परे). Ś1 K D1–3 G3 वि- (K3 [ऽ]पि); B4 [ऽ]प-; D4 तु (for च). T2 कुर्याद् (for कुर्युर्) — b) Ś1 चित्तं न; B2. 4 M Cnp वित्तेन; Dc वृत्तं च; T1 वित्तानि; G1. 4 दत्तं च; G2 दत्ते च (for वित्तं न). ❀ Cn वित्तेनेति गौडपाठे तु वित्तेन हेतुना। ❀ Ś1 K1–3 D1. 5 M2 दद्यात्; Dc जह्यात् (for दद्युः). Ś1 K1 पुरुषं; K2. 3 B2 Dc D1. 3. 5 M2 पुरुषः. S (except T2 G3) कथंस्वित्. — c) B2. 3 [अ]थ (for [अ]र्थ-). Dc -कामं (for -कालं). — d) Ś1 K1. 2 Dc D1 G2. 4 M2 च; D5 T1 तु; T2 G1 न (for नु). G2. 4 M न (for तत्). B1 Dc T1 कृतं; B4 गतं (for कुतः). D5 कृतार्थः; T2 कथं नु (for कुतः स्यात्).

कथं न भिद्येत न च स्रवेत
न च प्रसिच्येदिति रक्षितव्यम् ।
अरक्ष्यमाणः शतधा विशीर्येद्
ध्रुवं न नाशोऽस्ति कृतस्य लोके ॥ २७
गतो ह्यरण्यादपि शक्रलोकं
धनंजयः पश्यत वीर्यमस्य ।
अस्त्राणि दिव्यानि चतुर्विधानि
ज्ञात्वा पुनर्लोकमिमं प्रपन्नः ॥ २८
स्वर्गं हि गत्वा सशरीर एव
को मानुषः पुनरागन्तुमिच्छेत् ।
अन्यत्र कालोपहताननेका-
न्समीक्षमाणस्तु कुरून्मुमूर्षून् ॥ २९
धनुर्ग्राहश्चार्जुनः सव्यसाची
धनुश्च तद्गाण्डिवं लोकसारम् ।
अस्त्राणि दिव्यानि च तानि तस्य
त्रयस्य तेजः प्रसहेत को नु ॥ ३०
निशम्य तद्वचनं पार्थिवस्य
दुर्योधनो रहिते सौबलश्च ।
अबोधयत्कर्णमुपेत्य सर्वं
स चाप्यहृष्टोऽभवदल्पचेताः ॥ ३१

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥

# २२६

वैशंपायन उवाच ।
धृतराष्ट्रस्य तद्वाक्यं निशम्य सहसौबलः ।
दुर्योधनमिदं काले कर्णो वचनमब्रवीत् ॥ १
प्रव्राज्य पाण्डवान्वीरान्स्वेन वीर्येण भारत ।

C. 3. 14773
B. 3. 237. 2
K. 3. 238. 2

**27** [a]) Ś1 M2 च; B2–4 Dn D1–6 T1 G3 नु (for न). B4 भिद्येच्च. B4 [आ]स्रवेच्च; D5 श्रयेत; T1 [आ]श्रुवेत; T2 मृयेत; G3 स्तुवेत; M2 [आ]स्रवेत (for स्रवेत). — [b]) Ś1 K1. 2 B1. 2 Dc D5 T1 प्रसिध्ये°; K4 B4 प्रसिंचे°; T2 G1 [अ]वसीदे°; G2 [अ]वसज्ये°; G4 [अ]त्रसिच्ये° (for प्रसिच्ये°). — [c]) K4 B4 Dn D1. 6 T1 G3 अरक्ष्यमाणं; T2 G1. 2. 4 M अवेक्षमाणः (G1 °णं) (for अरक्ष्यमाणः). Ś1 K1. 2 च तथा (for शतधा). B1. 2. 4 Dn D4. 6 G1. 3 प्र(G1 वि)कीर्येद्; T1 प्रकुर्युर्; G4 प्रशीर्येद् (for विशीर्येद्).

**29** [a]) Ś1 K2 च (for हि). Ś1 K2 हित्वा; T1 G4 या° (for ग°). K3. 4 D3 एवं; T1 G4 एकः (for एव). — [b]) G1 प्रतिगंतुम् (for पुनरागन्तुम्). K2 ईक्षेत् (for इच्छेत्). — [c]) D3 अत्रैव; T2 अनेन; G1 अनुक्त- (for अन्यत्र). T2 °पहितान् (for °पहतान्). B4 अलोकान् (for अनेकान्). — [d]) B1 D5 °माणश्च; T G1. 4 °माणः स; G2 °माणाद्धि; M °माणाच्च (for °माणस्तु). D4. 6 T2 मुमुक्षून्; G1 मुहूर्तं (for मुमूर्षून्).

**30** [a]) K4 Dc T G2. 4 M धनुर्ग्रह°. — [b]) K2 B3 तं (for तद्). B1–3 Dn D2. 4. 6 G3 भीमवेगं (for लोक°). — [c]) Ś1 K1. 2 तानि तानि; Dn2 M1 तानि यस्य (for तानि तस्य). — [d]) Ś1 तस्यास्त्र-; K1. 2 तस्यात्र; B2 एतस्य; T1 G4 M1 तत्त°; G2 जय°; M2 स य° (for त्रय°). K1 प्रसहेच्च; T2 G2 विषहेत. B2. 3 Dn D5. 6 G3 [ऽ]त्र; B4 [ऽ]स्य; Dc [ऽ]पि (for नु). G1 तेजो न सेहेत ततो नु को नु.

**31** [b]) K3. 4 B D (except D5) G3 M1 दुर्योधनं. B1 T2 G1 रहितः; D3. 5 सहितः. Ś1 K1. 2 सौबलस्य; K3 B D G3 °लोथ (D2. 3 °लेन); K4 °लेयः. — [c]) B1 उवाच यत्; D5 प्राबोधयत्; S (except G3) अवोचतां (for अबोधयत्). — [d]) K D2. 3. 5 चाप्रहृष्टो; B1 Dc2 S (except T1 G3) चापि हृष्टो; D1 Cnp चाथ हृष्टो (!). T G1. 4 °तेजाः (T2 °चेताः also as in text).

Colophon. — *Major parvan:* Ś1 K1. 2 Dn2 G2. 4 आरण्य. — *Sub-parvan:* K3. 4 B Dc Dn1. n2 D2–4. 6 G3. 4 घोषयात्रा; Dn3 पार्थिव[घो]षयात्रा. — *Adhy. name:* K1. 2 धृतराष्ट्रवाक्यं; D1 धृतराष्ट्रनिवेदितं; G1 धृतराष्ट्रप्रलापः. — *Adhy. no.* (figures, words or both): B4 307; Dn 235 (Dn2 234); D1 238; T G1 226; G2. 4 M1 228; M2 (orig.) 230 (*inf. lin.* 208). — *Śloka no.:* Dn 32; D1 29.

C. 3. 14773
B. 3. 237. 2
K. 3. 238. 2

भुङ्क्ष्वेमां पृथिवीमेको दिवं शम्बरहा यथा ॥ २
प्राच्याश्च दाक्षिणात्याश्च प्रतीच्योदीच्यवासिनः ।
कृताः करप्रदाः सर्वे राजानस्ते नराधिप ॥ ३
या हि सा दीप्यमानेव पाण्डवान्भजते पुरा ।
साद्य लक्ष्मीस्त्वया राजन्नवाप्ता भ्रातृभिः सह ॥ ४
इन्द्रप्रस्थगते यां तां दीप्यमानां युधिष्ठिरे ।
अपश्याम श्रियं राजन्नचिरं शोककर्शिताः ॥ ५
सा तु बुद्धिबलेनेयं राज्ञस्तस्माद्युधिष्ठिरात् ।
त्वयाक्षिप्ता महाबाहो दीप्यमानेव दृश्यते ॥ ६
तथैव तव राजेन्द्र राजानः परवीरहन् ।
शासनेऽधिष्ठिताः सर्वे किं कुर्म इति वादिनः ॥ ७
तवाद्य पृथिवी राजन्निखिला सागराम्बरा ।
सपर्वतवना देवी सग्रामनगराकरा ।
नानावनोद्देशवती पत्तनैरुपशोभिता ॥ ८
वन्द्यमानो द्विजै राजन्पूज्यमानश्च राजभिः ।
पौरुषाद्दिवि देवेषु भ्राजसे रश्मिवानिव ॥ ९
रुद्रैरिव यमो राजा मरुद्भिरिव वासवः ।
कुरुभिस्त्वं वृतो राजन्भासि नक्षत्रराडिव ॥ १०
ये स्म ते नाद्रियन्तेऽऽज्ञा नोद्विजन्ते कदा च न ।
पश्यामस्ताञ्श्रिया हीनान्पाण्डवान्वनवासिनः ॥ ११

---

## 226

**1** b) N G3 शकुनिस्तदा (for सहसौबलः). — c) K4 B1 D2. 3 G2. 4 वाक्यं; T1 राजन् (for काले). — d) N G3 कर्णेन सहितोब्रवीत्.

**2** Before 2, G1 ins. कर्णः. — a) T1 सर्वान् (for वीरान्). — c) T1 [ए]तां (for [इ]मां). D3 सर्वां (for एको). — d) K4 B1. 4 Dn1. n2 M2 दिवि (for दिवं). D1 सुरपतिर् (for शम्बरहा). — After 2, T G1. 2. 4 ins.:

1099* तवाद्य पृथिवी राजन्निखिला सागराम्बरा ।
सपर्वतवनाकारा सहस्थावरजङ्गमा ।

[(L. 1)=$8^{ab}$. — (L. 2) Prior half = (var.) $8^{c}$.]

**3** a) Ś1 दक्षिणात्याश्च. — b) B4 दिव्यमानवाः (for -[उ]दीच्यवासिनः). — d) T1 आत्मन° (for राजान°). K3. 4 D1–3 जना° (for नरा°).

**4** a) D5 या पुरा; T2 सा हि सा (for या हि सा). K4 D2. 3 प्र- (for सा). — b) B4 Dc Dn अभजत् (for भजते). — c) D1 सा हि; G1 सम्यग् (for साद्य). D5 स्वयं (for त्वया). Dc प्राप्ता (for राजन्). — d) Dc दुराप्ता (for अवाप्ता).

**5** a) Ś1 °प्रस्थं; K1. 2 °प्रस्थे (for °प्रस्थ-). K3 D1. 5 °गतां (for °गते). Ś1 K2 यात्रां; B1 रात्रां; D2 यां यां; D4 याता; T1 यातां; T2 यातं (for यां तां). — b) B1 दीप्यमाने; D4 °माना. — c) K2. 4 अपश्यामि. B1 ततो राजन्; B2. 3 Dc D4. 6 G3 महाराज; B4 महीपाल (for श्रियं राजन्). — After $5^{c}$, B4 D (except D1–3. 5) G3 ins.:

1100* दृश्यते सा तवाद्य वै ।
शत्रवस्तव राजेन्द्र.

— d) T2 G1 अचिरात्; G2. 4 सुचिरं. Ś1 K1 Dn1. n3 D1. 4. 6 शोककर्षिताः; D5 त्वां समागता.

**6** a) Ś1 K1. 2 T1 साधु-; K3 D1. 5 T2 G1 साद्य; B4 सा श्रीर् (for सा तु). K1 [ए]व; B4 [इ]षुम् (for [इ]यं). — b) T राजन्; G1 राजात् (for राज्ञः). T2 तस्य (for तस्माद्). S (except G3) तथाविधात् (for युधिष्ठिरात्). B4 अपहाय युधिष्ठिरं. — c) B4 त्वयि श्रिता (for त्वयाक्षिप्ता).

**7** a) Ś1 K1. 2 तदैव (for तथैव). — c) K4 °नेषु स्थिताः; B4 °ने विष्ठिताः; S °नेवस्थिताः (G3 °ने युधिताः).

**8** a) B4 Dn2 D4. 6 ते वयं; Dn1. n3 तवेयं (for तवाद्य). — G1 om. (hapl.) $8^{b}$–$9^{a}$. — b) Ś1 K4 Dc D2 T1 G2 अखिला; D1 सकला (for निखिला). — c) T1 °वना चेयं; T2 °वना देव; G4 °वनाकारा (for °वना देवी). — d) T2 नगराकरपूरिता; G4 सहस्थावरजंगमा. — e) D1 °विधो° (for °वनो°). — f) B2 Dn D4. 6 G3 पर्वतै° (for पत्तनै°). — After 8, T G2. 4 M ins.:

1101* नानाजनपदाकीर्णा स्फीतराष्ट्रा महाबला ।

**9** G1 om. $9^{a}$ (cf. v.l. 8). — a) D1 स्तूय°; D3 T G2. 4 M1 नंद्य° (for वन्द्य°). D5 नृपै (for द्विजै). — b) D5 तथा द्विजैः (for च राजभिः). G2. 4 M2 भासि नक्षत्रराडिव (= $10^{d}$). — d) B2 मघवानिव; T1 G1. 4 M1 रश्मिमा°.

**10** a) G2 राजन् (for राजा). — c) Ś1 K4 T2 G2. 4 सं-; T1 तु (for त्वं).

**11** a) B2–4 Dc Dn D4. 6 T1 G3 यैः (for ये). Ś1 K1. 2 न ध्रियंते; B2–4 Dc Dn D6 G3 नाद्रियेत (for °यन्ते). Ś1 K1. 2 B1 त्वां; T1 M [ऽ]स्मान्; G4 [ऽ]स्मिन् (for ऽऽज्ञा). K3 ये पुरा दीव्यमानाश्च; K4 येस्मान्पुरा नाद्रियंते; D2. 3 येस्मांस्तु नाद्रियंते नु; T2 G1. 2 ये नाद्रियंतेज्ञानात्त्वां (G2 °द्वा). — b) Ś1 K1. 2 D2. 3. 5 उद्विजंतः; D1 नोद्विजेत; T G1. 2

श्रूयन्ते हि महाराज सरो द्वैतवनं प्रति ।
वसन्तः पाण्डवाः सार्धं ब्राह्मणैर्वनवासिभिः ॥ १२
स प्रयाहि महाराज श्रिया परमया युतः ।
प्रतपन्पाण्डुपुत्रांस्त्वं रश्मिवानिव तेजसा ॥ १३
स्थितो राज्ये च्युतान्राज्याच्छ्रिया हीनाञ्श्रिया वृतः ।
असमृद्धान्समृद्धार्थः पश्य पाण्डुसुतान्नृप ॥ १४
महाभिजनसंपन्नं भद्रे महति संस्थितम् ।
पाण्डवास्त्वाभिवीक्षन्तां ययातिमिव नाहुषम् ॥ १५
यां श्रियं सुहृदश्चैव दुर्हृदश्च विशां पते ।
पश्यन्ति पुरुषे दीप्तां सा समर्था भवत्युत ॥ १६
समस्थो विषमस्थान्हि दुर्हृदो योऽभिवीक्षते ।
जगतीस्थानिवाद्रिस्थः किं ततः परमं सुखम् ॥ १७

न पुत्रधनलाभेन न राज्येनापि विन्दति ।
प्रीतिं नृपतिशार्दूल याममित्राघदर्शनात् ॥ १८
किं तु तस्य सुखं न स्यादाश्रमे यो धनंजयम् ।
अभिवीक्षेत सिद्धार्थो वल्कलाजिनवाससम् ॥ १९
सुवाससो हि ते भार्या वल्कलाजिनवाससम् ।
पश्यन्त्वसुखितां कृष्णां सा च निर्विद्यतां पुनः ।
विनिन्दतां तथात्मानं जीवितं च धनच्युता ॥ २०
न तथा हि सभामध्ये तस्या भवितुमर्हति ।
वैमनस्यं यथा दृष्ट्वा तव भार्याः स्वलंकृताः ॥ २१
एवमुक्त्वा तु राजानं कर्णः शकुनिना सह ।
तूष्णीं बभूवतुरुभौ वाक्यान्ते जनमेजय ॥ २२

C. 3. 14795
B. 3. 237. 23
K. 3. 238. 25

इति श्रीमहाभारते आरण्यकपर्वणि षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥

---

न प्रीयंते (for नोद्विजन्ते). $K_3$ श्रिया परमया युताः; B Dc Dn $D_{4.6}$ $G_3$ न च ($B_1$ तु) ते ($B_4$ $Dn_2$. $n_3$ $G_3$ ये) शासने स्थिताः.

**12** a) $K_3$ $B_{1.2.4}$ Dn $D_{3.5}$ $T_1$ $G_4$ श्रूयते. $T_1$ $G_4$ च (for हि). — c) $D_5$ सर्वे (for सार्धं).

**13** a) $B_{1.3.4}$ $D_3$ $T_1$ M सं-; $D_1$ त्वं (for स). $T_2$ प्रियाभिर् (for प्रयाहि). $T_1$ °बाहो; $M_2$ °राजन् (for °राज). — c) B Dn $D_{4-6}$ $G_3$ तापयन् (for प्रतपन्). $D_1$ च; $D_5$ तान् (for त्वं). — d) $B_{2.3}$ $T_2$ $G_{1.2.4}$ $M_1$ रश्मिमान् (for °वान्).

**14** a) $T_1$ $G_{2.4}$ M स्थानात् (for राज्यात्). — b) $B_1$ हि ते भार्यां (for श्रिया हीनाञ्). Ś1 $K_{1.2}$ $G_1$ युतः (for वृतः). — c) $D_1$ समृद्धः सन् (for समृद्धार्थः). — d) Ś1 $K_{1.2}$ वने (for नृप).

**15** a) $T_2$ अनेकबलसंपन्नं. — b) $K_3$ पदे (for भद्रे). $B_4$ S (except $G_3$) च स्थितं (for सं°). — c) $B_1$ $Dc_1$ $D_3$ $T_2$ $G_1$ त्वभि- (for त्वाभि-). Ś1 K Dc $D_5$ -पश्यंतु; $B_2$ Dn $D_{1-3}$ -वीक्षंतु (for -वीक्षन्तां). — d) $K_2$ °तिमिह (for °तिमिव).

**16** ab) Ś1 $K_{1.2}$ transp. सुहृदश्च and दुर्हृदश्च. — c) $G_{2.4}$ पौरुषैर् (for पुरुषे). — d) Dc $D_1$ स समर्थो; $T_1$ सामर्थांश्च; $G_1$ सा समग्रा (for सा समर्था). $T_2$ सामग्र्या च विशां पते.

**17** a) $B_1$ Dc समर्थो (for °स्थो). — b) Some N MSS. °वीक्ष्यते. — c) $G_{2.4}$ M जगतिस्थान्. $T_1$ विषमस्थांश्च यानस्थः; $T_2$ $G_1$ भूमिस्थांश्चैव यानस्थः. — d) B Dn $D_{1.4.6}$ $T_1$ $G_{1.4}$ अतः (for ततः). $D_5$ शुभं (for सुखम्).

**18** a) $D_5$ यत्र; $T_2$ $G_1$ पुनर् (for पुत्र-). $K_4$ °लोपेन; $D_3$ °लोभेन (for °लाभेन). — b) $K_4$ $B_{1-3}$ $D_5$ $T_1$ [अ]भि- (for [अ]पि). $K_4$ $D_5$ -नंदति (for विन्दति). $T_2$ राज्यलाभेन विंदति; $G_{2.4}$ राज्येनापि च विं°. — c) $G_1$ प्रियं (for प्रीतिं). — d) $K_2$ $T_1$ $G_{1.2}$ M अमित्राय; $D_1$ °त्राच्च; $T_2$ $G_4$ °त्रस्य; $G_3$ °त्राधि- (for °त्राघ-).

**19** d) $=20^b$. $B_4$ °संवृतं (cf. v.l. 20).

**20** $T_2$ $G_{1.4}$ om. (hapl.) $20^{ab}$. — a) Ś1 हि तद्भार्यां; $B_1$ भीमनिभां (for हि ते भार्या). — b) $=19^d$. $K_{3.4}$ $B_{1-3}$ D $G_3$ °संवृतां. — c) $B_4$ $D_{1-3}$ [अ]सुखिनीं; Dc Dn $D_{4.6}$ $G_{2-4}$ दुःखितां (for [अ]सुखितां). — d) $T_2$ तु (for च). $B_1$ निर्विण्णतां; S (except $T_2$ $G_3$) निर्वेद्यतां. — e) $B_1$ विनिंद्य च; $D_3$ °निंदती; $T_1$ °निंदंती (for °निन्दतां). Ś1 $K_{1.2}$ विनिंद($K_2$ °द्य)माना चात्मानं; $K_{3.4}$ $D_{1.2.5}$ $G_{2.4}$ M विनिंदती ($K_{3.4}$ $D_{1.2}$ °दतां; $D_5$ °द्यतां) चाप्यात्मानं; $T_2$ दीनतां च स्वभर्तॄणां; $G_1$ जितानां च स्वभर्तॄणां. — f) $K_2$ जीवंतं; $T_2$ $G_1$ जीवतां (for जीवितं). $K_1$ $B_{3.4}$ Dn $G_{2.4}$ धनच्युतं; $B_2$ $D_1$ $T_1$ °च्युत; $T_2$ $G_1$ °च्युतिं; $G_3$ °च्युतां. — After 20, S (except $G_3$) ins.:

1102* दाराणां ते श्रियं दृष्ट्वा दीप्तामद्य जनाधिप ।

**21** b) Ś1 $K_{1-3}$ $D_5$ तस्याभूद्दुःखमुत्तमं. — d) $T_1$ तव भार्यां स्वलंकृतां.

**22** Before 22, B D (except $D_{1.3.5}$) $G_3$ ins. वैशं°

# २२७

C. 3. 14796
B. 3. 238. 1
K. 3. 239. 1

वैशंपायन उवाच ।
कर्णस्य वचनं श्रुत्वा राजा दुर्योधनस्तदा ।
हृष्टो भूत्वा पुनर्दीन इदं वचनमब्रवीत् ॥ १
ब्रवीषि यदिदं कर्ण सर्वं मे मनसि स्थितम् ।
न त्वभ्यनुज्ञां लप्स्यामि गमने यत्र पाण्डवाः ॥ २
परिदेवति तान्वीरान्धृतराष्ट्रो महीपतिः ।
मन्यतेऽभ्यधिकांश्चापि तपोयोगेन पाण्डवान् ॥ ३
अथ वाप्यनुबुध्येत नृपोऽस्माकं चिकीर्षितम् ।
एवमप्यायतिं रक्षन्नाभ्यनुज्ञातुमर्हति ॥ ४
न हि द्वैतवने किंचिद्विद्यतेऽन्यत्प्रयोजनम् ।
उत्सादनमृते तेषां वनस्थानां मम द्विषाम् ॥ ५
जानासि हि यथा क्षत्ता द्यूतकाल उपस्थिते ।
अब्रवीद्यच्च मां त्वां च सौबलं च वचस्तदा ॥ ६
तानि पूर्वाणि वाक्यानि यच्चान्यत्परिदेवितम् ।
विचिन्त्य नाधिगच्छामि गमनायेतराय वा ॥ ७
ममापि हि महान्हर्षो यदहं भीमफल्गुनौ ।
क्लिष्टावरण्ये पश्येयं कृष्णया सहिताविति ॥ ८
न तथा प्राप्नुयां प्रीतिमवाप्य वसुधामपि ।
दृष्ट्वा यथा पाण्डुसुतान्वल्कलाजिनवाससः ॥ ९
किं नु स्यादधिकं तस्माद्यदहं द्रुपदात्मजाम् ।

---

उ° (resp. वैशं°). — $^{a}$) K3 D1. 2. 5 [अ]थ; K4 च (for तु). — $^{b}$) Ś1 K1. 2. 4 D2. 3. 5 शकुनिरेव च (for °ना सह).

Colophon. — *Major parvan:* Ś1 K1. 2 Dn2 G2. 4 आरण्य. — *Sub-parvan:* K3. 4 B D G2. 3 M2 घोषयात्रा. — *Adhy. name:* M2 कर्णवाक्यं. — *Adhy. no.* (figures, words or both): B4 308; Dn (Dn1 marg.) 236 (Dn2 235); D1 239; T G1 227; G2. 4 M 229. — *Śloka no.:* Dn1. n2 D1 23; Dn3 24.

## 227

**1** $^{a}$) T1 M तु वचः (for वचनं). — $^{b}$) K2 T1 तथा; B D (except D1) G3 ततः (for तदा). — $^{c}$) B1 तूष्णीं (for हृष्टो). T1 पुनरथो (for पुनर्दीन). — $^{d}$) S (except G3) राधेयमिदमब्रवीत्.

**2** $^{b}$) B1 च मनसि; B2–4 Dn D4. 6 G3 मनसि मे (by transp.); G2. 4 M तद्धृदये. T1 तत्सर्वं हृदि संस्थितं. — $^{c}$) B1 च (for तु). T1 हि (for [अ]भि-). K2. 4 D1 लिप्सामि; T G2. 4 M लप्स्येहं (for लप्स्यामि). G1 तस्य त्वनुज्ञां लप्स्येहं.

**3** $^{a}$) Ś1 K1. 2. 4 D1. 3 °देवते हि तान् (hypermetric); B4 D5 °देवयते (for °देवति तान्). — $^{b}$) D5 °ष्ट्रो हि पांडवान्; T2 G1 °ष्ट्रोंबिकासुतः. — $^{c}$) T1 हि (for [ऽ]भि-).

**4** $^{a}$) T1 तु (for [अ]पि). — $^{b}$) Dc चिकीर्षितुं. — $^{c}$) S (except G3) एताम् (for एवम्). Ś1 अप्यायतीन्; G1 M1 अव्यायतीं. Ś1 रक्षेन् (for रक्षन्). — $^{d}$) K3 D1. 3 (m as in text). 5 T2 अर्हसि (for अर्हति).

**5** $^{c}$) K2. 3 उन्मादनमृते; Dc उत्पाटनमृते; T1 G2. 4 M उन्मादनाद्दते; T2 G1 उन्मादनमि(T2 °मृ)दं. — $^{d}$) B3 D4. 6 G3 °स्थाने (for °स्थानां). Ś1 K1. 2 B Dn D4. 6 महाद्युते; T2 महद् द्विषां; G2. 4 अपि द्विषां.

**6** $^{a}$) B3. 4 D2. 5 जानामि; G4 °ति (for °सि). D2. 3 [ए]व (for हि). K4 जानात्येव तथा क्षत्ता (m as in text). — $^{c}$) K4 D2. 3 यत्तु (for यच्च). S (except G3) अब्रवीत्त्वां च मां चैव. — $^{d}$) Dn वचनं (for च वचस्)! D5 तथा (for तदा).

**7** $^{a}$) Dc यानि; T2 G1 ततः (for तानि). B Dn D2. 4. 6 T G1–3 सर्वाणि (for पू°). — $^{b}$) T1 [अ]न्यं (for [अ]न्यत्). D2 अपि (for परि-). — $^{c}$) B1 आचिंत्य (for वि°), and मा (for न). T1 निश्चितं गच्छेद्; T2 निश्चयो राज्ञो; G1. 2. 4 M निश्चयं गच्छेर् (G1 राजा; G4 गच्छेद्) (for नाधिगच्छामि). — $^{d}$) = 14$^{b}$. B4 विजयाय (for गमनाय). D1 च (for वा).

**8** $^{a}$) Ś1 K1. 2 च; T G1. 2 सु- (for हि). K4 D5 महाहर्षो. — $^{b}$) N (except Ś1 K2) G3 °फाल्गुनौ. — $^{c}$) K3 कृष्टा° (for क्लिष्टा°). — $^{d}$) D1 [अ]पि (for [इ]ति).

**9** The sequence in K3. 4 Dc D1–3 is: 8, 11, 10, 9, 12. — $^{a}$) B1. 2. 4 [अ]वाप्नुयां; B3 Dn D4. 6 G2. 3 M ह्या° (for प्रा°). — $^{b}$) B1–3 Dn D4–6 G3 इमां (for अपि). — $^{d}$) K1. 2 °वासिनः; T1 °वाससान्.

**10** For sequence in K3. 4 Dc D1–3 cf. v.l. 9. — $^{a}$) K4 Dn1. n3 तु; D3 तत् (for नु). T2 वाभ्यधिकं

द्रौपदीं कर्ण पश्येयं काषायवसनां वने ॥ १०
यदि मां धर्मराजश्च भीमसेनश्च पाण्डवः ।
युक्तं परमया लक्ष्म्या पश्येतां जीवितं भवेत् ॥ ११
उपायं न तु पश्यामि येन गच्छेम तद्वनम् ।
यथा चाभ्यनुजानीयाद्गच्छन्तं मां महीपतिः ॥ १२
स सौबलेन सहितस्तथा दुःशासनेन च ।
उपायं पश्य निपुणं येन गच्छेम तद्वनम् ॥ १३
अहमप्यद्य निश्चित्य गमनायेतराय वा ।
काल्यमेव गमिष्यामि समीपं पार्थिवस्य ह ॥ १४
मयि तत्रोपविष्टे तु भीष्मे च कुरुसत्तमे ।
उपायो यो भवेद्दृष्टस्तं ब्रूयाः सहसौबलः ॥ १५
ततो भीष्मस्य राज्ञश्च निशम्य गमनं प्रति ।
व्यवसायं करिष्येऽहमनुनीय पितामहम् ॥ १६
तथेत्युक्त्वा तु ते सर्वे जग्मुरावसथान्प्रति ।
व्युषितायां रजन्यां तु कर्णो राजानमभ्ययात् ॥ १७
ततो दुर्योधनं कर्णः प्रहसन्निदमब्रवीत् ।
उपायः परिदृष्टोऽयं तं निबोध जनेश्वर ॥ १८
घोषा द्वैतवने सर्वे त्वत्प्रतीक्षा नराधिप ।
घोषयात्रापदेशेन गमिष्यामो न संशयः ॥ १९
उचितं हि सदा गन्तुं घोषयात्रां विशां पते ।
एवं च त्वां पिता राजन्समनुज्ञातुमर्हति ॥ २०
तथा कथयमानौ तौ घोषयात्राविनिश्चयम् ।
गान्धारराजः शकुनिः प्रत्युवाच हसन्निव ॥ २१
उपायोऽयं मया दृष्टो गमनाय निरामयः ।

C. 3. 14817
B. 3. 238. 22
K. 3. 239. 22

(for स्याद°). — $^{b}$) $T_{2}$ यद्वने (for यदहं). — $^{c}$) $T_{1}$ पश्यामि (for पश्येयं). — $^{d}$) $K_{4}$ $D_{2.3.5}$ कषाय-; $B_{2.4}$ काशाय-. $K_{3}$ °नांबरां; $T_{2}$ $G_{1}$ °नामपि (for °नां वने).

**11** For sequence in $K_{3.4}$ Dc $D_{1-3}$ cf. v.l. 9. — $^{a}$) $K_{3}$ यदि मा; $T_{1}$ यदिदं. — $^{b}$) $B_{4}$ भीमसेनेन. $K_{4}$ पांडवाः. — $^{c}$) $D_{2}$ उक्तं परमया भक्त्या.

**12** $^{a}$) $Ś_{1}$ $K_{1.2}$ $B_{4}$ Dc तु न (by transp.); S (except $T_{1}$ $G_{3}$) नानु-. $K_{3}$ पश्यामो; $T_{1}$ गच्छामि (for पश्यामि). — $^{b}$) $=13^{d}$. $D_{1.5}$ गच्छामि (for गच्छेम). — After $12^{ab}$, $T_{2}$ $G_{3}$ read 14, *repeating* it in its proper place. — $Ś_{1}$ $K_{1.3.4}$ om. (hapl.) $12^{c}$–$13^{d}$. — $^{c}$) T $G_{1}$ M यथा त्रा; $G_{2.4}$ स यथा (for यथा च). $D_{2}$ [अ]प्यनु°; $T_{1}$ $G_{2.4}$ M ह्यनु°; $G_{1}$ नाभ्यनु° (for [अ]भ्यनु°). — $^{d}$) $K_{2}$ मां व्रजंतं; $B_{4}$ S (except $G_{3}$) व्रजंतं मां; $D_{5}$ इच्छतोस्मान् (for गच्छन्तं मां).

**13** $Ś_{1}$ $K_{1.3.4}$ om. 13 (cf. v.l. 12). — $^{a}$) $B_{1}$ सौबलेयेन (for स सौबलेन). $T_{2}$ $G_{1}$ सर्वैश्च (for सहितस्). — $^{d}$) $=12^{b}$. $K_{2}$ गच्छाम; $D_{5}$ गच्छामि (for गच्छेम).

**14** For $T_{2}$ $G_{3}$ cf. v.l. 12. — Before 14, $D_{2}$ ins. कर्ण उ°. — $^{a}$) $Ś_{1}$ K Dc $D_{1-3.5}$ अहमद्य विनिश्चित्य; $G_{2.4}$ अहं चाप्य($G_{4}$ अहमप्य)नुगच्छामि. — $^{b}$) $= 7^{d}$. Dn $D_{4}$ $G_{1.3}$ (second time) च (for वा). — $^{c}$) $K_{1.2}$ B D $G_{3}$ (second time) कल्यम् (for काल्यम्). — $^{d}$) $T_{2}$ (first time) om. $14^{d}$. $K_{3}$ $D_{5}$ $T_{1}$ ह (for हि).

**15** $^{a}$) $Ś_{1}$ $K_{1.2.4}$ Dc $D_{2.3}$ $T_{2}$ $G_{1.2}$ $M_{2}$ च (for तु). — $^{b}$) $D_{1}$ तु (for च). $D_{1}$ $M_{1}$ °सत्तम. — $^{c}$) $B_{1}$ मे (for यो). — $^{d}$) $Ś_{1}$ $K_{2}$ तद् (for तं). $Ś_{1}$ $K_{2}$ $Dc_{2}$ $Dn_{2}$ ब्रूयात् (for ब्रूयाः). $Ś_{1}$ $K_{1.2}$ तत्र (for सह-).

**16** $^{a}$) $K_{3}$ B D (except $D_{2.3}$) $G_{2.3}$ $M_{2}$ वचो (for ततो). — $^{b}$) $K_{1.2}$ निशाम्य. $T_{1}$ वचनं प्रति. — $^{d}$) $Ś_{1}$ °याद्य (for °नीय).

**17** $B_{4}$ om. (hapl.) $17^{b}$–$19^{a}$. — $^{d}$) $Ś_{1}$ $K_{3.4}$ Dc $D_{3.5}$ अभ्यगात्; $K_{1.2}$ $D_{2}$ अब्रवीत् (for अभ्ययात्).

**18** $B_{4}$ om. 18 (cf. v.l. 17); $K_{1.2}$ $D_{2}$ om. (hapl.) $18^{ab}$. — $^{b}$) $K_{3.4}$ Dc $D_{1.3}$ वाक्यम् (for इदम्). — $^{c}$) Dc $M_{1}$ यस्; $T_{1}$ नस् (for ऽयं). — $^{d}$) $K_{4}$ Dc $T_{1}$ $G_{1.2.4}$ M जनाधिप; $B_{2}$ नरेश्वर; $T_{2}$ नराधिप.

**19** $=23$. $B_{4}$ om. $19^{a}$ (cf. v.l. 17). — $^{b}$) $Dc_{2}$ $D_{5}$ $G_{2.4}$ त्वत्प्रतीक्ष्या. T $G_{1.2.4}$ M महा($G_{1}$ °ही)भुज (for नरा°). — $^{d}$) $B_{4}$ वनं प्रति (for न संशयः).

**20** $T_{2}$ om. $20^{ab}$. — $^{a}$) $G_{4}$ उचितां. $B_{4}$ तु; $T_{1}$ ते (for हि). — $^{b}$) $G_{1.4}$ M घोषयात्रा. $G_{1.2.4}$ न संशयः (for विशां पते). — $^{c}$) $B_{4}$ त्वां च (by transp.); $Dc_{2}$ $D_{2}$ M च त्वा; $T_{2}$ चोक्ते; $G_{2}$ चेत्त्वां. $K_{4}$ त्वत्पिता; $G_{1}$ स्वपिता (for त्वां पिता). — $^{d}$) $T_{2}$ $G_{1}$ त्वामनु° (for समनु°).

**21** $^{a}$) $K_{1.4}$ $B_{4}$ D (except $D_{2.3.5}$) $G_{2.3}$ $M_{2}$ तु (for तौ). — $^{b}$) $K_{3}$ °श्रितौ; $B_{1}$ °श्रये. — $^{c}$) $K_{2}$ $D_{2}$ गंधारराजः. $B_{1}$ सुबलः (for शकुनिः). — $^{d}$) S (except $G_{3}$) इत्यु° (for प्रत्यु°). $B_{1}$ शकुनिः प्रत्युवाच ह.

**22** $^{a}$) $G_{1}$ [ऽ]थ (for ऽयं). $K_{4}$ $D_{2.3}$ महान् (for मया). — $K_{4}$ om. (? hapl.) $22^{c}$–$23^{d}$. — $^{c}$) $Ś_{1}$ $K_{2}$ $D_{5}$ वो; $T_{2}$ $G_{1}$ वै (for नो). — $^{d}$) $B_{4}$ Dn $D_{3}$ बोध°; $D_{1}$

C. 3. 14817
B. 3. 238. 22
K. 3. 239. 22

अनुज्ञास्यति नो राजा चोदयिष्यति चाप्युत ॥ २२
घोषा द्वैतवने सर्वे त्वत्प्रतीक्षा नराधिप ।
घोषयात्रापदेशेन गमिष्यामो न संशयः ॥ २३
ततः प्रहसिताः सर्वे तेऽन्योन्यस्य तलान्ददुः ।
तदेव च विनिश्चित्य ददृशुः कुरुसत्तमम् ॥ २४

इति श्रीमहाभारते आरण्यकपर्वणि सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥

# २२८

वैशंपायन उवाच ।
धृतराष्ट्रं ततः सर्वे ददृशुर्जनमेजय ।
पृष्ट्वा सुखमथो राज्ञः पृष्टा राज्ञा च भारत ॥ १
ततस्तैर्विहितः पूर्वं समङ्गो नाम बल्लवः ।
समीपस्थास्तदा गावो धृतराष्ट्रे न्यवेदयत् ॥ २
अनन्तरं च राधेयः शकुनिश्च विशां पते ।
आहतुः पार्थिवश्रेष्ठं धृतराष्ट्रं जनाधिपम् ॥ ३
रमणीयेषु देशेषु घोषाः संप्रति कौरव ।
स्मारणासमयः प्राप्तो वत्सानामपि चाङ्कनम् ॥ ४
मृगया चोचिता राजन्नस्मिन्काले सुतस्य ते ।

नोद॰; D2 मोद॰ (for चोद॰). K1. 3 D1 वा (for च). D1 पुनः; G1 [अ]च्युत (for [अ]प्युत).

**23** = 19. K3. 4 D1 om. 23 (for K4 cf. v.l. 22); Dc om. 23$^{ab}$. — $^{b}$) B1 D5 G4 त्वत्प्रतीक्ष्या. T G2. 4 M जनाधिप; G1 महीभुज. — $^{d}$) G1. 4 गमिष्याम; G3 ॰मि. S (except G3) सरः प्रति (for न संशयः).

**24** $^{b}$) K4 T1 ह्यन्यो॰; B4 अन्यो॰ (for तेऽन्यो॰). K1–3 T1 बलान्; K1m T2 G2. 4 तलं (for तलान्). — $^{c}$) K3 D2. 3 तदैव; D5 तदेवं. K3. 4 D1–3. 5 तु (for च). T1 स (for वि-).

Colophon. B3 reads it in marg. — *Major parvan:* Ś1 K1. 2 Dn2 G2. 4 आरण्य. — *Sub-parvan:* K3. 4 B Dc Dn3 D1–3. 5 M2 घोषयात्रा. — *Adhy. no.* (figures, words or both): B4 309; Dn (Dn1 marg.) 237 (Dn2 236); D1 240; T G1 228; G2. 4 M 230 (M2 232). — *Śloka no.:* Dn 24; D1 23.

## 228

**1** $^{b}$) M1 दृष्ट्वा ते (for ददृशुर्). T1 पृथिवीपतिं (for जनमे॰). — $^{c}$) Ś1 K1. 2 B1. 3m. 4 Dc2 D1. 2 T1 G3 दृष्ट्वा; K4 D3 पृष्टः; M स्पृष्ट्वा (for पृष्ट्वा). K1 G1 राज्ञा; K4 D2. 3 ॰ज्ञा (for ॰ज्ञः). — $^{d}$) B2 D5 पृष्टो; B3 (m as in text). 4 G1 पृष्ट्वा.

**2** $^{a}$) D5 सर्वं; M2 पूर्वे (for पूर्वं). — $^{b}$) K1. 4 संगमो; G2. 4 संगवो (for समङ्गो). K1 वल्लभः; M2 पल्लवः (for बल्लवः). — T2 om. 2$^{c}$–4$^{b}$. — $^{c}$) D2 G4 तथा (for तदा). Ś1 K2 D5 गा वै; T1 गोपं (for गावो).

**3** T2 om. 3 (cf. v.l. 2). — $^{b}$) T1 G4 M महारथः; G1. 2 महाबलः (for विशां पते). — $^{c}$) K3 D1 पांडव॰ (for पार्थिव॰). — $^{d}$) Ś1 K1. 2 नराधिपं; Dc T1 जनेश्वरं (for जना॰).

**4** T2 om. 4$^{ab}$ (cf. v.l. 2). — $^{b}$) K1 (marg. *sec. m.*) घोषान्; M2 घोराः (for घोषाः). M1 पार्थिव (for कौरव). — $^{c}$) Ś1 K1. 2 Dn D4. 6 स्मारणे; B1 T1 G1. 2 M2 स्मरणा-; D1 स्मरणो (for स्मारणा-). Ś1 संशयः (for -समयः). ❀ Cn: स्मारणे स्मरणहेतौ कर्मणि। गवां संख्यापूर्वकं वयोवर्णजातिनाम्नां लेखने। स्मारणासमय इति गौडाः पठन्ति।❀ — $^{d}$) K3. 4 (m as in text) D1 कांचनं; B4 चांकने; T2 G2. 4 चांकितुं; G1 चांकितं (for चाङ्कनम्).

**5** $^{a}$) Ś1 K2. 4 (m as in text) Dn1 D5. 6 T1 M2 चोदिता (for चोचिता). — $^{b}$) D1. 4. 5 G1. 2 तस्मिन् (for अस्मिन्). G2 लोके (for काले). K4 तु तस्य (for सु॰). Ś1 ह (for ते). — $^{c}$) Ś1 K1. 2 गमने. — $^{d}$) B1–3 Dn D4. 6 G3 समनु॰; T1 तदनु॰ (for त्वमनु॰).

**6** $^{a}$) K1 शोभनं (for ॰ना). — $^{b}$) B Dn D4. 6 G2. 3 हि (for च). K1. 2 परिरक्षणं (for समवे॰). D2 गवां चैवमवेक्षणं; G1 गवानां च समीक्षणं. — $^{c}$) K2 B3 D4 M विस्रंभस्तु; T2 G1 सविश्रंभे (G1 ॰भो); G2. 4 सु(G4 स)-विस्रभ्य. Ś1 K1. 2. 4 D3. 5 च (for तु). K1 Dc D1. 2 कर्तव्यो; G4 कर्तव्यं (for गन्तव्यो). — $^{d}$) Ś1 K1 वल्लभानां;

दुर्योधनस्य गमनं त्वमनुज्ञातुमर्हसि ॥ ५

धृतराष्ट्र उवाच ।

मृगया शोभना तात गवां च समवेक्षणम् ।
विश्रम्भस्तु न गन्तव्यो बल्लवानामिति स्मरे ॥ ६
ते तु तत्र नरव्याघ्राः समीप इति नः श्रुतम् ।
अतो नाभ्यनुजानामि गमनं तत्र वः स्वयम् ॥ ७
छद्मना निर्जितास्ते हि कर्शिताश्च महावने ।
तपोनित्याश्च राधेय समर्थाश्च महारथाः ॥ ८
धर्मराजो न संक्रुध्येद्भीमसेनस्त्वमर्षणः ।
यज्ञसेनस्य दुहिता तेज एव तु केवलम् ॥ ९
यूयं चाप्यपराध्येयुर्दर्पमोहसमन्विताः ।
ततो विनिर्दहेयुस्ते तपसा हि समन्विताः ॥ १०
अथ वा सायुधा वीरा मन्युनाभिपरिप्लुताः ।
सहिता बद्धनिस्त्रिंशा दहेयुः शस्त्रतेजसा ॥ ११
अथ यूयं बहुत्वात्तानारभध्वं कथंचन ।
अनार्यं परमं तत्स्यादशक्यं तच्च मे मतम् ॥ १२
उषितो हि महाबाहुरिन्द्रलोके धनंजयः ।
दिव्यान्यस्त्राण्यवाप्याथ ततः प्रत्यागतो वनम् ॥ १३
अकृतास्त्रेण पृथिवी जिता बीभत्सुना पुरा ।
किं पुनः स कृतास्त्रोऽद्य न हन्याद्वो महारथः ॥ १४
अथ वा मद्वचः श्रुत्वा तत्र यत्ता भविष्यथ ।
उद्विग्नवासो विश्रम्भाद्दुःखं तत्र भविष्यति ॥ १५
अथ वा सैनिकाः केचिदपकुर्युर्युधिष्ठिरे ।
तदबुद्धिकृतं कर्म दोषमुत्पादयेच्च वः ॥ १६

C. 3. 14835
B. 3. 239. 16
K. 3. 240. 16

---

$T_2$ $G_{1.2.4}$ $M_1$ पांडवानाम् (for बल्लवानाम्). Ś$_1$ $K_{1.2}$ स्मरन्; $B_4$ श्रुतं; S (except $G_3$) स्म ह (for स्मरे).

**7** $^{a}$) $K_{3.4m}$ $D_1$ $T_1$ $M_2$ हि; $G_{1.2.4}$ $M_1$ [ऽ]पि (for तु). — $^{c}$) $B_{2.4}$ $T_2$ $G_{1.2}$ ततो (for अतो). $T_2$ हि (for [अ]भि-). — $^{d}$) $T_2$ $G_1$ यत् (for वः).

**8** $^{a}$) $T_1$ आत्मना; $G_4$ जिह्मिता (for छद्मना). $B_{1.3}$ Dn $D_{4.6}$ $T_1$ $G_1$ ते तु; $B_2$ तत्र; $B_4$ सर्वे; $M_1$ तेपि (for ते हि). — $^{b}$) Ś$_1$ $B_{1.2}$ कर्षिताश्च; $D_1$ गताश्चैव. $T_1$ तु (for च). $B_4$ तथा वने. — $^{cd}$) $T_1$ नीतिज्ञाश्चैव राधेय समर्थाश्चैव भारत.

**9** $K_3$ om. 9. — $^{a}$) $T_1$ [अ]पि; $T_2$ $G_1$ $M_1$ तु (for न). $K_{2.4}$ $D_{2.3.5}$ संकुप्येद् (for संक्रुध्येद्). — $^{b}$) Dc [अ]मर्षितः (for [अ]मर्षणः). $T_1$ भीमो नित्यममर्षणः. — $^{d}$) $T_2$ तेजसा सा (for तेज एव).

**10** $K_3$ transp. $10^{ab}$ and $10^{cd}$. — $^{a}$) $K_{1.2}$ एवं (for यूयं). Ś$_1$ $K_{1.2.4}$ $D_{4.6}$ [अ]पराधेयुर्; $K_3$ हि राधेय; $B_1$ [अ]पराधेषुर् (for [अ]पराध्येयुर्). $T_2$ यूयं च पुनराधेय. — $^{b}$) $D_1$ अर्थं° (for दर्प°). — $T_1$ om. (hapl.) $10^{cd}$; $B_1$ reads it in marg. — $^{d}$) $B_4$ M [अ]भि-; $G_1$ च (for हि).

**11** $^{b}$) Ś$_1$ $K_{1.2.4}$ $D_{2.5}$ °समीरिताः (for °परिप्लुताः). — $^{c}$) $M_1$ वर्मिणो (for सहिता). — $^{d}$) $K_2$ तत्र (for शस्त्र-).

**12** $^{ab}$) Ś$_1$ $K_{1.2}$ तानालभेयुः ($K_2$ °यं); $K_3$ तान्नारभेध्वं; $K_4$ च नाक्षिपध्वं; $B_1$ तानाकृतध्वं; $B_2$ तु ताँल्लभध्वं; $B_3$ Dc $D_{4.6}$ तान्ना($B_3$ $D_4$ °ना)रभेरन्; Dn ताना($Dn_2$ °न्ना)क्षिपंतः (!); $D_{1-3}$ तान्नाक्षिपध्वं; $D_5$ तान्नाक्षिपेयुः; $T_1$ तान्नापराध्यन्; $T_2$ तान्नालंबध्वं; $G_1$ न नापराध्नं; $G_{2-4}$ तान्नारभ($G_4$ °ब)ध्वं; $M_1$ तानपराध्यान्; some printed ed. तानभियात; only $M_2$ तानारभध्वं (as in text)! $B_4$ अथ यूयं बहून्बाहूनारभेरन्कथंचन. — $^{c}$) $T_2$ $G_{1.2.4}$ अन्यायं; $M_2$ अनार्य्यं (for अनार्यं). $T_2$ $G_2$ M च परं; $G_4$ च वनं (for परमं). $K_4$ Dc $D_5$ $T_1$ $G_{2.4}$ तस्मात् (for तत्स्यात्). — $^{d}$) $T_1$ तन्न शक्यं; $T_2$ $G_1$ क्षमं शक्यं; $G_{2.4}$ M तदशक्यं (for अशक्यं तच्). Dn $D_{4.6}$ $G_3$ वै (for मे).

**13** $^{a}$) $B_1$ उषित्वा. — $^{b}$) $K_4$ $B_1$ इंद्रलोकं; $T_1$ स्वर्गलोकं (for इन्द्रलोके). — $^{c}$) Ś$_1$ $K_{1.2.4}$ $D_3$ सर्वाणि (for दिव्यानि). $K_3$ $D_1$ चावाप्य; $T_1$ [अ]थावाप्य; $T_2$ $G_1$ संप्राप्य (for [अ]वाप्याथ).

**14** $^{a}$) $T_2$ $G_1$ भीताः स्म (for पृथिवी). — $^{b}$) $T_2$ $G_1$ वयं (for जिता). Ś$_1$ $K_{1-3}$ तदा (for पुरा). — $^{c}$) $K_2$ सुकृतोस्त्रो (for स कृतास्त्रो). $G_4$ हि (for ऽद्य). — $^{d}$) T $G_{1.2.4}$ नि- (for न). $G_1$ वै (for वो). $M_2$ न तु हन्यो महारथः.

**15** $^{a}$) $D_1$ $G_{2.4}$ यद्वचः (for म°). Ś$_1$ $K_{1.2}$ अथ मद्वचनं श्रुत्वा. — $^{b}$) $T_1$ यत्र; $G_3$ यंता; $G_4$ यात्वा (for यत्ता). — $T_2$ $G_1$ om. (? hapl.) $15^{cd}$. — $^{c}$) $B_3$ Dc $D_{4.6}$ $G_3$ °वासे; $D_5$ °वाचो; $T_1$ °वासा (for °वासो). Ś$_1$ $K_{1.2}$ $T_1$ $G_{2.4}$ विस्र(Ś$_1$ °श्र)ब्धाद्; $B_{1-3}$ Dc $D_{4.6}$ $G_3$ विश्रं($D_{4.6}$ °स्रं)भो; $M_1$ विस्रंभाद्. $G_{2.4}$ उद्विग्ना वासविस्रब्धाद्. — $^{d}$) Ś$_1$ दुःखात्; $M_1$ वासं; $M_2$ वासास् (for दुःखं). $T_1$ $G_{2.4}$ गमिष्यथ (for भवि°).

**16** $^{b}$) $K_3$ उप°; Dc अपा° (for अप°). $K_4$ B D (except $D_{1-3.5}$) $G_3$ युधिष्ठिरं; $T_1$ महात्मसु. — $^{c}$) $T_1$ $G_{1.4}$ तदा° (for तद°). — $^{d}$) Ś$_1$ $K_{1.2}$ °येद्धि; $B_2$ $D_{4.6}$

:. 3. 14836
:. 3. 239. 17
:. 3. 240. 17

तस्माद्गच्छन्तु पुरुषाः स्मारणायाप्तकारिणः ।
न स्वयं तत्र गमनं रोचये तव भारत ॥ १७

शकुनिरुवाच ।

धर्मज्ञः पाण्डवो ज्येष्ठः प्रतिज्ञातं च संसदि ।
तेन द्वादश वर्षाणि वस्तव्यानीति भारत ॥ १८
अनुवृत्ताश्च ते सर्वे पाण्डवा धर्मचारिणः ।
युधिष्ठिरश्च कौन्तेयो न नः कोपं करिष्यति ॥ १९
मृगयां चैव नो गन्तुमिच्छा संवर्धते भृशम् ।
स्मारणं च चिकीर्षामो न तु पाण्डवदर्शनम् ॥ २०
न चानार्यसमाचारः कश्चित्तत्र भविष्यति ।
न च तत्र गमिष्यामो यत्र तेषां प्रतिश्रयः ॥ २१

वैशंपायन उवाच ।

एवमुक्तः शकुनिना धृतराष्ट्रो जनेश्वरः ।
दुर्योधनं सहामात्यमनुजज्ञे न कामतः ॥ २२
अनुज्ञातस्तु गान्धारिः कर्णेन सहितस्तदा ।
निर्ययौ भरतश्रेष्ठो बलेन महता वृतः ॥ २३
दुःशासनेन च तथा सौबलेन च देविना ।
संवृतो भ्रातृभिश्चान्यैः स्त्रीभिश्चापि सहस्रशः ॥ २४
तं निर्यान्तं महाबाहुं द्रष्टुं द्वैतवनं सरः ।
पौराश्चानुययुः सर्वे सहदारा वनं च तत् ॥ २५
अष्टौ रथसहस्राणि त्रीणि नागायुतानि च ।
पत्तयो बहुसाहस्रा हयाश्च नवतिः शताः ॥ २६

---

$G_3$ °येत; $B_4$ °येत्तु; T $G_{1.2.4}$ M °येत् (for °येच्च). $T_1$ $G_{1.2.4}$ M तव; $T_2$ तदा (for वः).

**17** $^{a}$) $T_1$ $G_{1.2.4}$ M तस्मादन्ये ($G_2$ °न्य-) नरा यांतु; $T_2$ तस्मादन्यो नरो यातु. — $^{b}$) Ś$_1$ $K_{2.3}$ $D_{4.6}$ T $G_4$ स्मरणाय. $D_5$ सकारणाः; $T_2$ [आ]त्तकारणात्; $G_1$ [अ]धिकारिणः; $G_4$ [आ]त्तकारिणः. — $^{c}$) $G_{2.4}$ स्वयं न (by transp.). — $^{d}$) Ś$_1$ $B_4$ Dc $T_2$ रोचते. Dc $D_1$ तत्र (for तव).

**18** $Dc_2$ om. 18 (with the ref.). — $^{a}$) S (except $G_3$) पांडवश्रेष्ठः. — $^{b}$) $K_2$ प्रतिज्ञाते; $T_1$ $G_{2.4}$ °ज्ञातश्च; $T_2$ $G_1$ परिज्ञातश्च. — $^{c}$) $T_1$ ततो (for तेन).

**19** $^{a}$) Ś$_1$ $K_2$ $T_2$ $G_2$ °व्रता° (for °वृत्ता°). $K_4$ $D_3$ $T_1$ $G_{2.4}$ M तं (for ते). — $^{b}$) Ś$_1$ $K_{1-3}$ Dc $D_{1.2.5}$ पांडवं °चारिणं. — $^{c}$) $K_1$ $B_{1-3}$ Dn $D_{1.4-6}$ G तु (for च). — $^{d}$) Ś$_1$ नरः; $T_1$ न वः (for न नः).

**20** $K_3$ om. (hapl.) $20^{a}$–$21^{b}$. — $^{a}$) Ś$_1$ $K_{1.2}$ एव; $K_4$ अपि; $B_4$ $D_{1-3.5}$ S (except $G_3$) चापि (for चैव). — $^{b}$) $B_{1.3}$ Dn $D_{1.4.6}$ $G_3$ संवर्तते. $B_2$ इच्छा संप्रति वर्तते. — $^{c}$) $B_{2.3}$ $M_2$ स्मारणां; $D_1$ T $G_4$ स्मरणं. $B_{1.3.4}$ D (except $D_{2.3.5}$) $G_3$ तु (for च). $B_2$ $D_2$ करिष्यामो (for चिकीर्षामो). $G_1$ स्मरणाच्च विकर्षामो. — $^{d}$) $T_2$ न नः (for न तु). $G_1$ वयं पांडवनंदनं.

**21** $K_3$ om. $21^{ab}$ (cf. v.l. 20); $D_1$ om. $21^{abc}$. — $^{b}$) Dc कच्चित् (for कश्चित्). $T_1$ अत्र. $G_4$ गमि° (for भवि°). — $^{c}$) $T_2$ $G_1$ न च तत्र ($G_1$ °त्रा-) समाचारो. — $^{d}$) $D_2$ तत्र (for यत्र). $D_1$ समा°; $D_5$ परि° (for प्रति°).

**22** $^{b}$) T $G_{1.4}$ जनाधिपः ($T_1$ °प) (for जनेश्वरः). — $^{cd}$) $T_1$ दुर्योधनः सहामात्यः (sic) अनुज्ञेयोथ कामतः.

**23** $^{a}$) $K_{3.4}$ च (for तु). $T_2$ $G_2$ गांधारः. — $^{b}$) Ś$_1$ $K_{1.2}$ ततः (for तदा). — $^{c}$) Ś$_1$ $K_2$ $Dc_2$ °श्रेष्ठ (for °श्रेष्ठो). — $^{d}$) $T_2$ सौबलेन समावृतः.

**24** $^{a}$) $K_{1.2}$ B $D_6$ T $G_1$ तदा (for तथा). — $^{b}$) $B_2$ सौबलेयेन (for °लेन च). $B_{1-3}$ Dn $D_{4.6}$ $G_3$ धीमता (for देविना). — $^{c}$) $Dc_2$ आवृतो; T $G_{1.2.4}$ $M_2$ सर्वैश्च; $M_1$ सर्वशो (for संवृतो). S (except $G_3$ $M_2$) सार्धं (for चान्यैः). — $^{d}$) T $G_{1.2.4}$ चैव (for चापि).

**25** $T_2$ om. $25^{ab}$. — $^{a}$) Ś$_1$ $K_4$ $D_3$ तं निर्यातं; $D_1$ निर्यातं तं. — $^{b}$) $D_1$ $G_2$ दृष्ट्वा (for द्रष्टुं). $K_2$ शरं; $D_5$ प्रति (for सरः). — $^{c}$) $T_2$ $G_1$ निर्ययुः (for [अ]नुययुः). — $^{d}$) $G_2$ °दार- (for °दारा). S (except $G_3$ $M_1$) बलं (for वनं). Ś$_1$ $K_{1.2}$ गताः; $K_4$ $D_3$ गतं; Dc हि तत्; $D_1$ यतः (for च तत्).

**26** $^{b}$) $B_3$ M नागशतानि (for नागायु°). — $^{c}$) $B_4$ पत्तिनो; $T_1$ पत्त्यश्च; $G_{1.2.4}$ $M_2$ पत्तिश्च; $M_1$ पत्तीनां (for पत्तयो). Ś$_1$ $K_2$ $T_1$ $G_{2.4}$ शत° (for बहु°). $T_2$ पत्तिः शतसहस्राणि. — $^{d}$) Ś$_1$ हयाश्वा; $T_1$ यानं च; $T_2$ $G_1$ हयानां. $K_4$ $D_{1.2}$ $T_1$ $G_4$ नवतिं; $T_2$ तावतिः; $M_2$ तावती (for नवतिः). S (except $G_3$) शतं.

**27** $^{a}$) = 3. 231. $10^{a}$. Ś$_1$ °वंशा°; $K_{1.2}$ B Dc Dn $D_{4.6}$ $T_2$ $G_{1-3}$ $M_2$ °वेशा° ($K_1$ [*sup. lin. sec. m.*] Dc °वेषा°); $K_4$ $D_3$ °वैश्या° (for °वेश्या°). — $^{b}$) Ś$_1$ वाणिजो.

**28** $^{a}$) $B_3$ Dc S (except $G_3$ $M_1$) प्रयाते (for °णे). S (except $G_3$ $M_1$) नृपतौ (for °तेः). — $^{b}$) Ś$_1$ $K_{1.2}$ transp. सुमहान् and अभवत्. — $^{c}$) $T_1$ °बाहोर् (for °वायोर्). — $^{d}$) Ś$_1$ K $D_{3.5}$ उद्धूतस्य; T $G_{1.4}$ $M_1$ उत्थि°;

शकटापणवेश्याश्च वणिजो बन्दिनस्तथा ।
नराश्च मृगयाशीलाः शतशोऽथ सहस्रशः ॥ २७
ततः प्रयाणे नृपतेः सुमहानभवत्स्वनः ।
प्रावृषीव महावायोरुद्धतस्य विशां पते ॥ २८
गव्यूतिमात्रे न्यवसद्राजा दुर्योधनस्तदा ।
प्रयातो वाहनैः सर्वैस्ततो द्वैतवनं सरः ॥ २९

इति श्रीमहाभारते आरण्यकपर्वणि अष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥

# २२९

वैशंपायन उवाच ।
अथ दुर्योधनो राजा तत्र तत्र वने वसन् ।
जगाम घोषानभितस्तत्र चक्रे निवेशनम् ॥ १
रमणीये समाज्ञाते सोदके समहीरुहे ।
देशे सर्वगुणोपेते चक्रुरावसथं नराः ॥ २
तथैव तत्समीपस्थान्पृथगावसथान्बहून् ।
कर्णस्य शकुनेश्चैव भ्रातॄणां चैव सर्वशः ॥ ३
ददर्श स तदा गावः शतशोऽथ सहस्रशः ।
अङ्कैर्लक्षैश्च ताः सर्वा लक्षयामास पार्थिवः ॥ ४
अङ्कयामास वत्सांश्च जज्ञे चोपसृतास्त्वपि ।
बालवत्साश्च या गावः कालयामास ता अपि ॥ ५
अथ स स्मारणं कृत्वा लक्षयित्वा त्रिहायनान् ।

C. 3. 14854
B. 3. 240. 6
K. 3. 241. 6

---

$G_2$ $M_2$ रूक्षि° (for उद्ध°).

**29** $^a$) $K_4$ [ऽ]भ्यवसद् ; $D_5$ $T_1$ निवसन् (for न्यवसद्). — $^b$) $K_1$ $G_4$ तथा (for तदा). — $^c$) $D_5$ सार्धं (for सर्वैस्). — $^d$) $D_5$ यतो; $M_2$ तदा (for ततो).

Colophon. — *Major parvan:* $Ś_1$ $K_{1.2}$ $T_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* K B D $G_3$ $M_2$ घोषयात्रा. — *Adhy. name:* $G_1$ घोषयात्राप्रयाणं; $M_2$ दुर्योधननिर्याणं. — *Adhy. no.* (figures, words or both): $B_4$ 310; Dn ($Dn_1$ marg.) 238 ($Dn_2$ 237); $D_1$ 241; T $G_1$ 229; $G_{2.4}$ M 231. — *Śloka no.:* Dn 29; $D_1$ 28.

## 229

**1** $^c$) $Ś_1$ जघान (for जगाम). — $^d$) $D_3$ प्रतिश्रयं (for निवेशनम्).

**2** $^a$) $K_4$ $D_3$ समे ज्ञाते. T $G_{1.2.4}$ M देशेभि($T_1$ हि; $G_{1.2.4}$ च)रमणीये च. — $^b$) $T_2$ $G_{1.2}$ सोदके समभूतले. — $^c$) $T_1$ $G_4$ M तस्य; $T_2$ तथा; $G_1$ अत्र; $G_2$ तत्र (for देशे). $Ś_1$ T $G_{1.2}$ $M_1$ °पेतं (for °पेते). — $^d$) Dn आवसथान् (!).

**3** $T_2$ om. $3^{ab}$. — $^a$) $Ś_1$ $D_1$ तत्रैव तत्- ; $B_1$ तत्र तत्र; $M_2$ तथापि तत्- (for तथैव तत्-). B $D_{4.6}$ S ($T_2$ om.) °पेन्यान् (for °पस्थान्). — $^b$) $G_1$ प्रधाना° (for पृथगा°). — $^c$) $K_3$ $D_{1.2}$ कर्णश्च शकुनिश्चैव; $T_2$ बहूंस्तथैव कर्णस्य. — $^d$) $Ś_1$ K Dc $D_{1-3.5}$ अपि; $G_{2.4}$ M चास्य (for चैव). $Ś_1$ संघशः; $T_2$ सर्वथा (for सर्वशः).

**4** $^a$) $K_3$ $D_1$ ददृशे स; $B_4$ स ददर्श (by transp.); S (except $G_3$) पश्यंतस्ते. $Ś_1$ $K_{1.2}$ $B_4$ $D_{2.5}$ ततो (for तदा). $Ś_1$ $K_1$ (before corr.) $_{2.3}$ Dc $D_5$ गा वै; $D_1$ $G_3$ गाश्च (for गावः). — $M_2$ om. (hapl.) $4^c$–$7^b$. — $^c$) $K_{1-3}$ $D_5$ लक्ष्यैश्च; $T_2$ $G_4$ अक्षैश्च; $G_2$ वक्षसि (for लक्षैश्च). $T_1$ तान्सर्वान् (for ताः सर्वा). — $^d$) $T_1$ शतशोथ सहस्रशः (= $4^b$).

**5** $M_2$ om. 5 (cf. v.l. 4). — $^a$) $G_{2.4}$ अंकयाताः सवत्साश्च. — $^b$) $K_4$ $D_4$ यज्ञे; $G_2$ राज्ञा; $G_4$ राज्ञे (for जज्ञे). $Ś_1$ $K_{1.3}$ $D_{1.2.3}$ (*sup. lin.*) $_5$ $G_3$ चोपहृतानपि ($K_{1.3}$ °तांस्त्वपि); $K_{2.4}$ °भृ($K_4$ °घृ)तांस्त्वपि; $B_{1.3}$ Dn $D_{4.6}$ °सृतांस्त्वपि; $B_{2.4}$ °सृतांस्त्वसि ($B_4$ °यि); $D_3$ (orig.) °हृतामपि; T $G_{1.2.4}$ चोपा($T_1$ चैवा- ; $G_{2.4}$ चापा)स्यतास्त्वपि; $M_1$ चोपसृता अपि; only Dc as in text! — $D_1$ om. (hapl.) $5^{cd}$. — $^c$) $K_{1.2}$ गावश्च; $D_{4.6}$ $T_2$ या गाश्च (for या गावः). — $^d$) $Ś_1$ $K_{1.2.4}$ $D_{3.4.6}$ कलयामास; $T_1$ दर्शया°; $G_1$ दमया°; $G_{2.4}$ $M_1$ गणया°.

**6** $M_2$ om. 6 (cf. v.l. 4). — $^a$) $Ś_1$ $K_{1.2}$ $D_{3.5}$ $G_{1.2.4}$ सं- (for स). $K_{1.2}$ $D_5$ $T_2$ $G_{2.4}$ -स्मरणं; $B_2$ $Dc_2$ $M_1$ स्मारणां. — $^b$) $G_1$ सर्वस्यापि (for लक्षयित्वा). $D_5$ त्रिहायनं. $T_2$ (corrupt) तपांस्यायाति भानवान्. — $^c$) $B_1$ ततो (for वृतो). — $^d$) $B_1$ $Dn_3$ $G_4$ $M_1$ व्याह($B_1$ °च)रत्

C. 3. 14854
B. 3. 240. 6
K. 3. 241. 6

वृतो गोपालकैः प्रीतो व्यहरत्कुरुनन्दनः ॥ ६
स च पौरजनः सर्वः सैनिकाश्च सहस्रशः ।
यथोपजोषं चिक्रीडुर्वने तस्मिन्यथामराः ॥ ७
ततो गोपाः प्रगातारः कुशला नृत्तवादिते ।
धार्तराष्ट्रमुपातिष्ठन्कन्याश्चैव स्वलंकृताः ॥ ८
स स्त्रीगणवृतो राजा प्रहृष्टः प्रददौ वसु ।
तेभ्यो यथार्हमन्नानि पानानि विविधानि च ॥ ९
ततस्ते सहिताः सर्वे तरक्षून्महिषान्मृगान् ।
गवयर्क्षवराहांश्च समन्तात्पर्यकालयन् ॥ १०
स ताञ्शरैर्विनिर्भिन्दन्गजान्बध्नन्महावने ।
रमणीयेषु देशेषु ग्राहयामास वै मृगान् ॥ ११
गोरसानुपयुञ्जान उपभोगांश्च भारत ।
पश्यन्सुरमणीयानि पुष्पितानि वनानि च ॥ १२
मत्तभ्रमरजुष्टानि बर्हिणाभिरुतानि च ।
अगच्छदानुपूर्व्येण पुण्यं द्वैतवनं सरः ।
ऋद्ध्या परमया युक्तो महेन्द्र इव वज्रभृत् ॥ १३
यदृच्छया च तदहो धर्मपुत्रो युधिष्ठिरः ।
ईजे राजर्षियज्ञेन सद्यस्केन विशां पते ।
दिव्येन विधिना राजा वन्येन कुरुसत्तमः ॥ १४
कृत्वा निवेशमभितः सरसस्तस्य कौरवः ।
द्रौपद्या सहितो धीमान्धर्मपत्न्या नराधिपः ॥ १५
ततो दुर्योधनः प्रेष्यानादिदेश सहानुजः ।
आक्रीडावसथाः क्षिप्रं क्रियन्तामिति भारत ॥ १६
ते तथेत्येव कौरव्यमुक्त्वा वचनकारिणः ।

---

(for व्यहरत्).

**7** $M_2$ om. $7^{ab}$ (cf. v.l. 4). — $^{a}$) $G_4$ °जनाः सर्वे. — $^{b}$) $G_4$ चैव सर्वशः (for च सह°). — $^{c}$) $K_{3.4}$ $D_2$ °योगं (for °जोषं). — $^{d}$) $Dc_1$ $M_2$ नराः (for [अ]मराः).

**8** $^{a}$) $B_1$ प्रणेतारः; $M_2$ प्रशास्तारः (for प्रगा°). $T_2$ $G_{1.2.4}$ ततोध्व($T_2$ °ध्वं)गमनात् ($G_1$ °न-) श्रांतं. — $^{b}$) $K_1$ Dn $D_{1.5.6}$ नृत्यवादने; $K_2$ नृत्तवादने; $K_4$ B Dc $D_{2-4}$ नृत्यवादिते; $T_1$ नृत्यवादिनः; $G_{3.4}$ नृत्य($G_4$ °त्त)वादितैः. — $^{d}$) $B_4$ सहस्रशः (for स्वलं°).

**9** $^{a}$) Ś$_1$ K $D_{1-3.5}$ स्त्रीपरिवृतो; $B_{1.2.4}$ $Dc_2$ Dn $G_3$ स्त्रीगणा°. — $^{b}$) $T_2$ वसुधायां तदा ददौ. — $^{c}$) $D_1$ यथार्थम् (for °र्हम्). $G_4$ इष्टानि (for अन्नानि). — $^{d}$) $B_1$ पेयानि; Dc दानानि (for पा°). $K_4$ $D_{2.3}$ विविधानि बहूनि च.

**10** $^{b}$) $B_1$ वने (for मृगान्). — $^{c}$) $T_1$ गवयाश्च°. — $^{d}$) $K_{1.4}$ $B_4$ $D_2$ $G_{2.4}$ °वारयन् (for °कालयन्).

**11** $^{a}$) $K_2$ Dc शताञ्; $T_1$ शतं; $G_2$ त्रस्ताञ्; $G_4$ स्रस्ताञ् (for स ताञ्). $K_{1.2}$ विभिन्नांगान्; B Dc Dn $D_{4.6}$ $G_3$ विनिर्भिद्य (for °भिन्दन्). — $^{b}$) $K_2$ निघ्नन्; $D_3$ तत्र; $D_5$ बद्धान्; $T_2$ $G_1$ वद्ध्वा (for बध्नन्). B Dc Dn $D_{4.6}$ $G_3$ गजांश्च सुबहून्वने. — $^{d}$) T $G_{1.2.4}$ M ग्राहयञ्श($T_1$ $G_1$ °च्छ)तशो मृगान्.

**12** $^{a}$) Ś$_1$ $K_2$ $B_4$ $D_5$ $G_1$ उपभुंजान; $K_3$ अपि युंजान. — $^{c}$) $K_1$ B Dn $D_{4.6}$ स; $T_2$ च (for सु-). $G_{1.2.4}$ अपश्यद्रमणी°. — $^{d}$) B Dn $D_{4.6}$ $G_3$ वनान्युप- ($B_4$ तानि तानि); $T_1$ सरांसि च (for पुष्पितानि).

**13** $Dc_2$ $T_1$ $M_2$ om. (hapl.) $13^{ab}$. — $^{a}$) $K_{1.2}$ $D_1$ °घुष्टानि. — $^{b}$) $K_4$ $D_1$ बर्हणाभिरु°; $B_2$ वनान्युपवनानि च (cf. v.l. 12). — $^{c}$) $B_{2.3}$ आगच्छद्. $K_{3.4}$ $Dc_2$ $D_{1-3}$ $G_3$ आ($D_{2.3}$ अ)नुपूर्वेण. — $^{d}$) Ś$_1$ रम्यं (for पुण्यं). — After $13^{cd}$, $B_{2.3}$ (om. line 2) Dn $D_{4.6}$ $G_3$ ins.:

1103* मत्तभ्रमरसंजुष्टं नीलकण्ठरवाकुलम् ।
सप्तच्छदसमाकीर्णं पुंनागबकुलैर्युतम् ।

— $^{e}$) $B_4$ सर्व्या (for ऋद्ध्या). — $^{f}$) Ś$_1$ $K_1$ (marg. *sec. m.* as in text) चापभृत्; $G_{2.4}$ वज्रधृक् (for वज्रभृत्).

**14** $^{a}$) B D (except $D_{1-3.5}$) $G_3$ तत्रस्थो (for तदहो). — $^{b}$) S (except $G_3$) °राजो (for °पुत्रो). — $^{c}$) $G_1$ इष्ट्वा (for ईजे). Ś$_1$ K Dc $D_{1-3.5}$ °सत्रेण (for °यज्ञेन). — $^{d}$) $B_{1-3}$ D (except $D_{1-3.5}$) $G_{2.3}$ साद्यस्केन; $T_2$ $G_1$ स्वकाम्येन; $B_4$ M सद्यस्तेन. — $^{e}$) $K_4$ $D_{2.3}$ $M_1$ राजन्; B Dn $D_{4.6}$ $G_3$ चैव (for राजा). — $^{f}$) $K_{3.4}$ $B_{1.3.4}$ D (except $D_5$) $G_3$ $M_2$ कुरुसत्तम. — After 14, S (except $G_3$) ins.:

1104* विद्वद्भिः सहितो धीमान्ब्राह्मणैर्वनवासिभिः ।

**15** $^{b}$) $K_3$ सरसस्तत्र; $D_1$ तत्सरस्तत्र. $B_2$ भारतः; $B_4$ केशव; Dn $D_6$ $G_3$ कौरव. — $^{c}$) $G_2$ श्रीमान् (for धीमान्). — $^{d}$) Dn $D_3$ नराधिप; S (except $G_3$) महामनाः ($T_1$ °तपाः). — After 15, $G_1$ ins.:

1105* भीमार्जुनयमैः सार्धं सराभ्याशे तदावसत् ।

**16** $^{a}$) $K_4$ $D_4$ प्रेक्षा($D_4$ °क्ष्या)न्; $B_2$ प्रैष्यान्. — $^{b}$) $B_3$ सहानुगः; Dn सहस्रशः (!); $T_1$ $G_4$ सहानुजैः; $G_1$ विशां पते; M सहानुगैः. — $^{c}$) $B_2$ शीघ्रं (for क्षिप्रं). $T_1$ $G_{2.4}$ M आक्रीडावसथाञ्शीघ्रं. — $^{d}$) $K_{3.4}$ $D_{1-3}$ क्रियताम्. $T_1$

चिकीर्षन्तस्तदाक्रीडाञ्जग्मुर्द्वैतवनं सरः ॥ १७
सेनाग्रं धार्तराष्ट्रस्य प्राप्तं द्वैतवनं सरः ।
प्रविशन्तं वनद्वारि गन्धर्वाः समवारयन् ॥ १८
तत्र गन्धर्वराजो वै पूर्वमेव विशां पते ।
कुबेरभवनाद्राजन्नाजगाम गणावृतः ॥ १९
गणैरप्सरसां चैव त्रिदशानां तथात्मजैः ।
विहारशीलः क्रीडार्थं तेन तत्संवृतं सरः ॥ २०
तेन तत्संवृतं दृष्ट्वा ते राजपरिचारकाः ।
प्रतिजग्मुस्ततो राजन्यत्र दुर्योधनो नृपः ॥ २१
स तु तेषां वचः श्रुत्वा सैनिकान्युद्धदुर्मदान् ।
प्रेषयामास कौरव्य उत्सारयत तानिति ॥ २२
तस्य तद्वचनं श्रुत्वा राज्ञः सेनाग्रयायिनः ।
सरो द्वैतवनं गत्वा गन्धर्वानिदमब्रुवन् ॥ २३
राजा दुर्योधनो नाम धृतराष्ट्रसुतो बली ।
विजिहीर्षुरिहायाति तदर्थमपसर्पत ॥ २४
एवमुक्तास्तु गन्धर्वाः प्रहसन्तो विशां पते ।
प्रत्यब्रुवंस्तान्पुरुषानिदं सुपरुषं वचः ॥ २५
न चेतयति वो राजा मन्दबुद्धिः सुयोधनः ।
योऽस्मानाज्ञापयत्येवं वश्यानिव दिवौकसः ॥ २६
यूयं मुमूर्षवश्चापि मन्दप्रज्ञा न संशयः ।
ये तस्य वचनादेवमस्मान्ब्रूत विचेतसः ॥ २७
गच्छत त्वरिताः सर्वे यत्र राजा स कौरवः ।

C. 3. 14879
B. 3. 240. 30
K. 3. 241. 30

---

G1. 2. 4 M कुरुध्वं सरसोभितः.

**17** a) T2 तत्; M1 तं (for ते). B4 तथोवाच (for तथेत्येव). Ś1 K1. 2 तथेत्युक्तेति (K1 °क्ते तु) वचनं. — c) K3 G1 तथा (for तदा). K2–4 B1. 4 Dc D1–6 G1 क्रीडां (for [आ]क्रीडान्).

**18** Ś1 K1. 2 om. 18ab. B Dn D4–6 transp. 18ab and 18cd. — a) B4 सोपश्यद्; T2 सनागं (for सेनाग्रं). — b) K3 पुरः; Dc D1–3. 5 तदा (for सरः). — c) Ś1 K1. 2 प्रविशंतो; K3 D2 °शत्तद्-; K4 °शन्तु. Ś1 नवद्वारि; K2 G1. 3 वनं द्वारि; B1–3 Dc वनद्वारं; T2 वनं राजन्. — d) K4 B2 समवाकिरन्; Dc प्रत्यवारयन्.

**19** a) D1 अत्र, and °राजा (for तत्र, and °राजो). — c) K3 D1 °भुवना° (for °भवना°). — d) D5 [अं]गनावृतः; T2 G1. 2. 4 जना°; M गणान्वितः (for गणावृतः).

**20** b) Ś1 महात्मजैः; K1 तथैव च; B1 तथानुजैः (for तथात्मजैः). — c) Ś1 विहारशैलः; B4 त्रिहायनीनां; T2 विहारशीलं; G2 °शैलैः; G4 °शीलैः. S (except G3) क्रीडार्थे.

**21** a) Ś1 K D1–3. 5 ततस्; T G1. 2 तैश्च (for तेन). D2 ते संवृते (for तत्संवृतं). — c) Ś1 K D1–3. 5 प्रतिषिद्धा गता राजन्. — d) T1 M यतो (for यत्र). T1 [ऽ]भवत् (for नृपः). — After 21, K4 D1–3 ins.:

1106* ते समेत्य तदा प्रोचुर्गन्तुं नैवोपलभ्यते ।
रक्षितं बहुभिः शूरै राजन्द्वैतवनं सरः ।;

while B1. 3 ins.:

1107* न्यवेदयंस्ततो राज्ञे गन्धर्वास्तत्र भारत ।

**22** a) Ś1 ते (for स). — Ś1 om. (hapl.) 22b–23a. — b) T2 G1 सामर्षो वाहिनीं तदा.

**23** Ś1 om. 23a (cf. v.l. 22). — a) Dc D5 ततस् (for तस्य). K1. 2 ते तु तस्य वचः श्रुत्वा. — b) =29b. Ś1 सेनानुयायिनः; B4 °ग्रगामिनः; M1 °ग्रयोधिनः. — c) K1 स च (for सरो). — d) K2 Dc2 D5 अब्रवीत् (for अब्रुवन्).

**24** b) Ś1 K1. 2 धार्तराष्ट्रो महाबलः. — c) K1 D5 T1 M विजिगीषुर्; T2 G1. 2. 4 चिक्रीडिषुर् (for विजिहीर्षुर्). B4 जिहीर्षुरीहयामास. — d) B1. 3 Dn D4–6 S (except M1) उपसर्पत (B1 °थ); B4 इह स° (for अपस°).

**25** a) K1. 3 Dc2 उक्त्वा (for उक्तास्). D1 च (for तु). — b) B4 प्रहसंति. T1 पुनः पुनः (for विशां पते). — d) B1. 3. 4 Dn D4. 6 G3 हि; Dc D5 T1 M2 स; T2 G1 ते (for सु-).

**26** T2 om. 26ab. Before 26, B2–4 D5 ins. गंधर्वा ऊचुः. — a) D1 T1 G1 न वेदयति; D3 न चिंतयति; D5 न च जानाति (for न चेत°). B2 ते; M2 वै (for वो). — b) G3 मंदबुद्धे. T1 स बालिशः (for सुयो°). — c) K4 T2 सो; Dc ये (for यो). K4 विज्ञापयति; Dc आज्ञापयंति. K1 T1 G4 M2 [ए]व; D5 T2 G1 [ए]ष (for [ए]वं). — d) K4 वन्यानिव; B3 Dn1. n3 G3 वैश्या°.

**27** a) T2 G1. 2 चैव (for चापि). — b) Ś1 विचेतसः (for न संशयः). — c) K4 D3 ते तस्य; Dc यत्तस्य; G2. 4 एतस्य. Ś1 K1. 2 मूढा (for एवम्). — d) Ś1 K1. 2 त्वस्मान् (for अस्मान्). K3 Dc D3 G2. 4 ब्रूथ; B3 (m as in text) आत्थ; D6 क्रूर (for ब्रूत). B3 विशेषतः (m विचेतसः as in text).

**28** a) K2 B Dn D4. 6 G3 गच्छध्वं. — b) Ś1 K1. 2

C. 3. 14879
B. 3. 240. 30
K. 3. 241. 30

द्रष्टुं मार्गैव गच्छध्वं धर्मराजनिवेशनम् ॥ २८
एवमुक्तास्तु गन्धर्वैं राज्ञः सेनाग्रयायिनः ।
संप्राद्रवन्यतो राजा धृतराष्ट्रसुतोऽभवत् ॥ २९

इति श्रीमहाभारते आरण्यकपर्वणि एकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥

# २३०

वैशंपायन उवच ।
ततस्तें सहिताः सर्वे दुर्योधनमुपागमन् ।
अब्रुवंश्च महाराज यदूचुः कौरवं प्रति ॥ १
गन्धर्वैर्वारिते सैन्ये धार्तराष्ट्रः प्रतापवान् ।
अमर्षपूर्णः सैन्यानि प्रत्यभाषत भारत ॥ २
शासतैनानधर्मज्ञान्मम विप्रियकारिणः ।
यदि प्रक्रीडितो देवैः सर्वैः सह शतक्रतुः ॥ ३
दुर्योधनवचः श्रुत्वा धार्तराष्ट्रा महाबलाः ।
सर्व एवाभिसंनद्धा योधाश्चापि सहस्रशः ॥ ४
ततः प्रमथ्य गन्धर्वांस्तद्वनं विविशुर्बलात् ।
सिंहनादेन महता पूरयन्तो दिशो दश ॥ ५
ततोऽपरैरवार्यन्त गन्धर्वैः कुरुसैनिकाः ।
ते वार्यमाणा गन्धर्वैः साम्नैव वसुधाधिप ।
ताननादृत्य गन्धर्वांस्तद्वनं विविशुर्महत् ॥ ६

---

सुयोधनः (for स कौ°). — $^c$) Ś1 शीघ्रमद्यैव; K1 द्रेषसत्यैव; K2. 4 T1 द्रेष्यम(T1 °मा)द्यैव; B Dc Dn D4. 6 G3 न (B4 स) चेद°; D2 द्वैषाद्या°; D3 द्वेषान्मा°. T2 G1. 2. 4 यथा नागच्छताद्यैव (G2. 4 °त द्वैतं). — $^d$) B2 °निकेतनं.

**29** $^a$) T2 G1 ते सर्वे (for गन्धर्वैं). — $^b$) = $23^b$. D2. 3 राज- (for राज्ञः). K2 सेनानुयायिनः; M1 सेनाग्रयोधिनः. — $^c$) K4 ततो (*sup. lin.* यतो as in text). — $^d$) Dc धार्तराष्ट्रस्ततोभवत्.

Colophon. Dn1 reads it in marg. — *Major parvan:* Ś1 K1. 2 Dn2 G2. 4 आरण्य; D1 वन (!). — *Sub-parvan:* K3. 4 B D G1. 3 M2 घोषयात्रा. — *Adhy. name:* T2 द्वैतवनयात्रा. — *Adhy. no.* (figures, words or both): B4 311; Dn 239 (Dn2 238); D1 242; T1 G1 231; T2 G2 230; G4 M 232. — *Śloka no.:* Dn D1. 6 31.

## 230

**1** $^a$) D5 च; G2 तैः (for ते). — $^c$) Dc2 D3 अब्रवंश्च. B1 महाराजं. — $^d$) K4 B4 कौरवान्प्रति.

**2** $^b$) T1 [अ]त्यमर्षणः (for प्रतापवान्). — $^c$) K1 °पूर्वः (m पूर्णः as in text). Ś1 K1. 2 सैन्यानां (for °नि). D1 अमर्षवशमापन्नः.

**3** $^a$) K3. 4 B1 [ए]तान् (for [ए]नान्). — $^{cd}$) Ś1 यद्यपि क्रीडतो; K1. 2 T2 G1. 2. 4 यदि विक्रीडते (K1 °डतो; G1. 2. 4 °डिते); B Dc Dn D1. 2. 5. 6 T1 G3 यदि प्रक्रीडते (B1. 2 Dc1 D2 T1 °डतः; Dn °डिते); D3 यदत्र क्रीडिते; D4 यदि प्रक्रीडने. B D (except D1–3. 5) G3 transp. देवैः and सर्वैः. S (except G3) शचीपतिः (for शतक्रतुः). — After 3, G2. 4 ins.:

1108* वयमत्र यथाप्रीताः क्रीडिष्यामो निरन्तरम् ।

**4** $^c$) K3 M2 एवाति-; T2 -भावेन; G1 एवापि; G2. 4 एव हि (for एवाभि-). Ś1 K1 (marg. *sec. m.* as in text). 2 °संपन्ना (for °संनद्धा). — $^d$) M1 यौधा° (for योधा°).

**5** $^a$) Ś1 K1. 2 तत्र (for ततः). B1–3 Dn D4. 6 G3 सर्वांस्तान् (for गन्धर्वान्). — $^b$) G1 बलं प्रवि° (for तद्वनं वि°). D3 महत् (for बलात्). — $^d$) D3 पूरयंति.

**6** $^a$) Ś1 K1 (before corr.). 2 परम्; T1 परैर् (for [अ]परैर्). — $^b$) Ś1 °नंदनाः; K2 °संगकाः; D2 °सत्तमाः (for °सैनिकाः). — After $6^{ab}$, S (except G3) ins.:

1109* साम्नैव तत्र विक्रान्ता मा साहसमिति प्रभो ।

— Ś1 K1 om. $6^c$–$7^b$; B2 om. $6^d$–$7^b$ and reads instead $9^d$–$10^d$ (for the first time), *repeating* the lines in their proper place. — $^f$) K3 D1–3 बलात् (for महत्).

**7** Ś1 K1 B2 om. $7^{ab}$ (cf. v.l. 6). — $^a$) K3. 4 D1. 2. 5 न वाचा (by transp.); D3 न चाव-. — $^b$) S (except T2 G3) वार्यमाणाः (for धार्त°). — $^c$) K3 T1

यदा वाचा न तिष्ठन्ति धार्तराष्ट्राः सराजकाः ।
ततस्ते खेचराः सर्वे चित्रसेने न्यवेदयन् ॥ ७
गन्धर्वराजस्तान्सर्वानब्रवीत्कौरवान्प्रति ।
अनार्याञ्शासतेत्येवं चित्रसेनोऽत्यमर्षणः ॥ ८
अनुज्ञातास्तु गन्धर्वाश्चित्रसेनेन भारत ।
प्रगृहीतायुधाः सर्वे धार्तराष्ट्रानभिद्रवन् ॥ ९
तान्दृष्ट्वा पततः शीघ्रान्गन्धर्वानुद्यतायुधान् ।
सर्वे ते प्राद्रवन्संख्ये धार्तराष्ट्रस्य पश्यतः ॥ १०
तान्दृष्ट्वा द्रवतः सर्वान्धार्तराष्ट्रान्पराङ्मुखान् ।
वैकर्तनस्तदा वीरो नासीत्तत्र पराङ्मुखः ॥ ११
आपतन्तीं तु संप्रेक्ष्य गन्धर्वाणां महाचमूम् ।
महता शरवर्षेण राधेयः प्रत्यवारयत् ॥ १२
क्षुरप्रैर्विशिखैर्भल्लैर्वत्सदन्तैस्तथायसैः ।
गन्धर्वाञ्शतशोऽभ्यघ्नँल्लघुत्वात्सूतनन्दनः ॥ १३
पातयन्नुत्तमाङ्गानि गन्धर्वाणां महारथः ।
क्षणेन व्यधमत्सर्वां चित्रसेनस्य वाहिनीम् ॥ १४
ते वध्यमाना गन्धर्वाः सूतपुत्रेण धीमता ।
भूय एवाभ्यवर्तन्त शतशोऽथ सहस्रशः ॥ १५
गन्धर्वभूता पृथिवी क्षणेन समपद्यत ।
आपतद्भिर्महावेगैश्चित्रसेनस्य सैनिकैः ॥ १६
अथ दुर्योधनो राजा शकुनिश्चापि सौबलः ।
दुःशासनो विकर्णश्च ये चान्ये धृतराष्ट्रजाः ।
न्यहनंस्तत्तदा सैन्यं रथैर्गरुडनिस्वनैः ॥ १७
भूयश्च योधयामासुः कृत्वा कर्णमथाग्रतः ।

C. 3. 14898
B. 3. 241. 19
K. 3. 242. 19

---

खचराः (खे°). — $^{d}$) M1 °सेनं (for °सेने).

**8** $^{b}$) G1 कौरवं (for °वान्). — G1 om. $8^{c}$–$10^{b}$. — $^{c}$) K3 Dn D1–4. 6 G3 [ए]तान्; B1. 4 [ए]नान्; B2 [ए]ति (for [ए]वं). — $^{d}$) K1 [ऽ]भ्यम°; Dn1 ह्यम° (for [ऽ]त्यम°).

**9** G1 om. 9 (cf. v.l. 8). — $^{a}$) G4 चित्रसेन° (for अनुज्ञाता°); see below. K3. 4 B Dn D1. 3–6 G3 च (for तु). G4 गंधर्वै. — K1. 2 om. $9^{bc}$. — $^{b}$) G4 अनुज्ञानेन (for चित्रसे°). — $^{d}$) Ś1 K B4 Dc D1. 2. 5 उपा°; T G2. 4 M समा° (for अभि°).

**10** G1 om. $10^{ab}$ (cf. v.l. 8). For B2 cf. v.l. 6. — $^{a}$) Ś1 K Dc D1–3. 5 द्रवतः (for पततः); cf. v.l. 11. Ś1 K1 सर्वान्; K2. 3 Dc D1–3. 5 शूरान्; B4 संख्ये; T M1 शीघ्रं (for शीघ्रान्). — D2 om. $10^{b}$–$11^{a}$. — $^{c}$) T2 G2. 4 M2 संघे (for संख्ये). Ś1 K1–3 B4 Dc D1. 3. 5 संप्रद्रवत् (B4 प्राद्रवच्च) चमूः सर्वा; K4 B1. 2 (both times). 3 Dn D4. 6 G3 प्राद्रवंस्ते (K4 D3 ते प्राद्रवन्) दिशः सर्वे. — $^{d}$) = 3. 231. $1^{d}$. Dc धीमतः (for पश्यतः).

**11** D2 om. $11^{a}$ (cf. v.l. 10). — $11^{ab}$=3. 231. $2^{ab}$. — $^{a}$) D5 दृष्ट्वा तान् (by transp.). G1 M2 पततः (for द्रवतः); cf. v.l. 10. Dc D1. 3 शूरान्; G1 शीघ्रं (for सर्वान्). — G1 om. (hapl.) $11^{cd}$. — $^{c}$) B2. 3 Dn D6 G3 राधेयस्तु (for वैकर्तनस्). — $11^{d}$=3. 231. $2^{d}$.

**12** $^{a}$) Ś1 K1. 2 च (for तु). K1. 2 तत्रैव; Dc संवेक्ष्य; S (except G3) तां प्रेक्ष्य. — $^{d}$) Ś1 K2 समवाकिरत्; K1. 3. 4 Dc D1–3. 5 समवारयत्.

**13** D6 om. $13^{a}$–$14^{c}$. — $^{a}$) Ś1 K1–3 D1. 2 निशितैर्; K4 Dc D3. 5 S (except G3) विविधैर् (for विशिखैर्). Ś1 बल्लैर्; K3 क्षुद्रैर्; G1 M2 फलैर् (for भल्लैर्). B2 क्षुरैः क्षुरप्रैर्विशिखैर्. — $^{b}$) Ś1 K Dc D1–3. 5 दृढायुधः (Dc D1 °धैः); M2 तथायुधैः (for तथायसैः). — $^{c}$) Ś1 K2. 4 B1 [ऽ]भ्याहन्; K1 [ऽ]भ्यहनत्; K3 B4 D1. 5 निघ्नन्; Dc चाघ्नन्; Dn1 [ऽ]भिघ्नन्; D2 [ऽ]भ्यस्यन्; T1 ह्यघ्नन्; G4 न्यघ्नन् (for [ऽ]भ्यघ्नन्).

**14** D6 om. $14^{abc}$ (cf. v.l. 13). — $^{c}$) K2 विधिमत्; D5 [अ]व्यथयत् (for व्यधमत्). G2. 4 सेनां (for सर्वां). — $^{d}$) K3 D1. 2 सैनिकान्; G2. 4 संयुगे (for वाहिनीम्).

**15** G1 transp. $15^{ab}$ and $15^{cd}$. — $^{ab}$) D3 युध्य° (for वध्य°). B4 समरे (for गन्धर्वाः). D2 ते वध्यमानाः कर्णेन गंधर्वा युद्धकोविदाः; G1 गंधर्वाः सूतपुत्रेण धीमता भूय एव तु. — $^{c}$) K2 [अ]भि°; T1 [अ]न्व° (for [अ]भ्य°). G1 वध्यमाना न्यवर्तत.

**16** $^{b}$) B4 प्रत्यदृश्यत (for समप°).

**17** $^{a}$) T1 M1 ततो (for अथ). — $^{b}$) S (except G3) शकुनिश्च महारथः. — $^{e}$) K3 B2. 4 D3. 5 T2 G1 न्यहनंत (for °नंस्तत्). Ś1 K1. 2 D1. 2 ते (for तत्). D5 तथा; G1 महा- (for तदा). — $^{f}$) B3 Dc D5 G1 शरै° (for रथै°).

**18** $^{ab}$) S (except G3 M1) सैन्यमायो(G1 °न्यं तं बा)-धितं दृष्ट्वा कर्णो राजन्नमर्षितः. — $^{c}$) B1–3 D (except D1–3. 5) G3 रथसंघेन; G1 शरवर्षेण (for रथघोषेण). — $^{d}$) Ś1 K1. 2 हय(Ś1 °या)रावेण; Dn D4. 6 रथचारेण; S (except G3) योधयामास (for हयचारेण). B4 वाप्यथ; T1

. 3. 14898
. 3. 241. 19
. 3. 242. 20

महता रथघोषेण हयचारेण चाप्युत ।
वैकर्तनं परीप्सन्तो गन्धर्वान्समवारयन् ॥ १८
ततः संन्यपतन्सर्वे गन्धर्वाः कौरवैः सह ।
तदा सुतुमुलं युद्धमभवल्लोमहर्षणम् ॥ १९
ततस्ते मृदवोऽभूवन्गन्धर्वाः शरपीडिताः ।
उच्चुक्रुशुश्च कौरव्या गन्धर्वान्प्रेक्ष्य पीडितान् ॥ २०
गन्धर्वांस्त्रासितान्दृष्ट्वा चित्रसेनोऽत्यमर्षणः ।
उत्पपातासनात्क्रुद्धो वधे तेषां समाहितः ॥ २१
ततो मायास्त्रमास्थाय युयुधे चित्रमार्गवित् ।
तयामुह्यन्त कौरव्याश्चित्रसेनस्य मायया ॥ २२
एकैको हि तदा योधो धार्तराष्ट्रस्य भारत ।
पर्यवर्तत गन्धर्वैर्दशभिर्दशभिः सह ॥ २३
ततः संपीड्यमानास्ते बलेन महता तदा ।
प्राद्रवन्त रणे भीता यत्र राजा युधिष्ठिरः ॥ २४
भज्यमानेष्वनीकेषु धार्तराष्ट्रेषु सर्वशः ।
कर्णो वैकर्तनो राजंस्तस्थौ गिरिरिवाचलः ॥ २५
दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः ।
गन्धर्वान्योधयांचक्रुः समरे भृशविक्षताः ॥ २६
सर्व एव तु गन्धर्वाः शतशोऽथ सहस्रशः ।
जिघांसमानाः सहिताः कर्णमभ्यद्रवन्रणे ॥ २७
असिभिः पट्टिशैः शूलैर्गदाभिश्च महाबलाः ।
सूतपुत्रं जिघांसन्तः समन्तात्पर्यवारयन् ॥ २८

G1. 2. 4 M2 चाच्युतः (for चाप्युत). — f) K1. 2 B1 Dn D2. 4. 6 G3 समवाकिरन् (for समवारयन्). S (except G3) गंधर्वाः प्रत्य(G1 पर्य)वारयन्.

**19** a) K4 T2 G1. 2. 4 ते न्यप°; D1 सैन्येप° (for संन्यप°). — b) T2 G1. 2. 4 कौरवं प्रति (for °वैः सह). — c) Ś1 K Dc D1–3. 5 ततः सु-; T1 G2. 4 M अथासीत्; T2 G1 तदा स (for तदा सु-). Dc2 D2 -तुमलं. — d) T1 G4 M उभयोः (for अभवत्). T G1. 2. 4 रोम° (for लोम°).

**20** a) Ś1 K1. 2 तु (for ते). K1 D1 भूत्वा; D3 भूता (for ऽभूवन्). — c) B1 राजगुप्ता° (for उच्चुक्रुशु°). K1 (marg. *sec. m.*) वा सर्वे (for कौरव्या). — d) B2 वीक्ष्य (for प्रेक्ष्य).

**21** a) G4 ताडिता° (for त्रासिता°). — b) K1 [ऽ]भ्य°; B Dn ह्य°; G4 [ऽ]ष्य° (for ऽत्य°). — c) Ś1 महाक्रुद्धो; K1. 2 तदा क्रुद्धो (for [आ]सनात्क्रुद्धो). — d) T1 समुद्यतः (for समा°).

**22** a) Ś1 K1. 2 आसाद्य; K4 D3 T1 G2. 4 M आदाय; D5 आच्छाद्य; G1 आश्रित्य (for आस्थाय). T2 ततो मायाः समाहृत्य. — After 22ab, T2 G1. 2. 4 ins.:

1110* तेन मुक्ताः शरा घोराः सूर्यरश्मिसमप्रभाः ।
वियत्संछादयामासुर्न ववौ तत्र मारुतः ।
हस्त्यारोहा हताः पेतुर्हस्तिभिः सह भारत ।
हयारोहाश्च सहयै रथैश्च रथिनस्तथा ।
पत्तयश्च यथा पेतुर्विशस्ताः शरवृष्टिभिः ।

— c) K3 D1. 3 ततो°; Dc2 तथा°; M1 तदा° (for तया°). K2 T2 G1 मुह्यंति (for [अ]मुह्यन्त). K1 कौरव्य; B1 ते सर्वे.

**23** a) Dn एकैकश्च (!); D4. 6 °कस्य; T2 G1 °कं हि (for °को हि). K2 G1. 4 तथा; Dc2 महा-; D2 यदा; T1 समं (for तदा). B1 Dc युद्धे; D1 वीरो; D2. 3. 6 G1. 2. 4 योधा; T2 M2 यौधा (for योधो). — b) T1 M1 दुर्मतेः (for भारत). — c) K3 D3. 6 G3 °वर्तत; T G1. 2. 4 M °वार्य- (T2 °वार्यं)त (for °वर्तत). Dc गंधर्वा. — d) S (except G3) युधि (for सह).

**24** a) Ś1 K1. 2 तत्र (for ततः). B4 [अ]नु- (for सं-). — b) Ś1 K1. 2 D5 युद्धे तस्मिन्महाबलैः. — T2 om. 24cd. — c) G1 प्राद्रवंश्च; M2 व्यद्रवंत. Ś1 K1. 2 रणे वीराः; B4 वने वीरा; D2 रणे नीता. — d) Ś1 K1. 2 B Dc D5 येन (for यत्र). Dn D4. 6 G3 ये न (Dn1 च) राजञ्जिगीषवः (Dn °जीषवः !).

**25** a) G2. 4 धक्ष्यमाणे° (for भज्य°). Ś1 K1. 2 सैन्येषु; T2 सर्वेषु; G1 [अ]नेकेषु (for [अ]नीकेषु). — b) B4 धार्तराष्ट्रस्य. K4 सर्वतः; B2 भारत. — c) T1 M2 वीरः (for राजन्). G2. 4 वैकर्तनो महाराज.

**26** a) T1 [अ]पि (for the first च). T1 M2 कौरव्यः; T2 G1. 2. 4 तेजस्वी (for कर्णश्च). — c) B Dn D4. 6 T2 G1–3 °न्योधयामासुः. — d) T1 सर्वे च (for समरे). K1. 3 B1 भृशविक्षिताः; Dc2 °विक्रुताः; D1 °मीक्षिताः; D2. 3 °वीक्षिताः; S (except G3) शरविक्षताः.

**27** a) D3 च (for तु). — c) S (except G3) संरब्धाः (for सहिताः). — d) Some MSS. अभ्यद्रवद्. M1 कर्णमेवाभिदुद्रुवुः.

**28** a) T G1. 4 M1 पट्टसैः. T G1 खड्गैर् (for शूलैर्). — b) K2 महाबल; K3 D5 °बलः; B1 T2 °रथाः (for °बलाः). B4 गदामुषलकंपनैः; D2 गदाभिः परिघैस्तथा. — c) K4 D3

अन्येऽस्य युगमच्छिन्दन्ध्वजमन्ये न्यपातयन् ।
ईषामन्ये हयानन्ये सूतमन्ये न्यपातयन् ॥ २९
अन्ये छत्रं वरूथं च बन्धुरं च तथापरे ।
गन्धर्वा बहुसाहस्राः खण्डशोऽभ्यहनन्रथम् ॥ ३०
ततो रथादवप्लुत्य सूतपुत्रोऽसिचर्मभृत् ।
विकर्णरथमास्थाय मोक्षायाश्वानचोदयत् ॥ ३१

इति श्रीमहाभारते आरण्यकपर्वणि त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥

# २३१

वैशंपायन उवाच ।
गन्धर्वैस्तु महाराज भग्ने कर्णे महारथे ।
संप्राद्रवच्चमूः सर्वा धार्तराष्ट्रस्य पश्यतः ॥ १
तान्दृष्ट्वा द्रवतः सर्वान्धार्तराष्ट्रान्पराङ्मुखान् ।
दुर्योधनो महाराज नासीत्तत्र पराङ्मुखः ॥ २
तामापतन्तीं संप्रेक्ष्य गन्धर्वाणां महाचमूम् ।
महता शरवर्षेण सोऽभ्यवर्षदरिंदमः ॥ ३
अचिन्त्य शरवर्षं तु गन्धर्वास्तस्य तं रथम् ।
दुर्योधनं जिघांसन्तः समन्तात्पर्यवारयन् ॥ ४
युगमीषां वरूथं च तथैव ध्वजसारथी ।

C. 3. 14917
B. 3. 242. 5
K. 3. 243. 5

---

सूर्य° (for सूत°). — $^{d}$) B1–3 Dn D4. 6 G3 °वाकिरन् (for °वारयन्).

**29** K3 om. (hapl.) 29. — $^{a}$) Ś1 K1. 2 D5 [आ]-युधम्; M2 ध्वजम् (for युगम्). Ś1 आछिद्य; K (K3 om.) D5 आछिंदन्. D2 अन्ये युगं समाछिंदन्; G2. 4 अन्ये स्यंदन-माछिंदन्. — $^{b}$) G2. 4 त्व° (for न्य°). Ś1 ध्वजमन्येन पातयन्; B4 ध्वजमागत्य पात°. — D2 G1 om. $29^{cd}$. — Ś1 K1. 2 read $29^{cd}$ after 30. — $^{c}$) Ś1 येषाम्; B1 T1 G2 M1 ईषान्; B2. 3 ईशान् (for ईषाम्). — $^{d}$) D1 न्यवारयन्; G2 न्यपाट° (for न्यपात°).

**30** $^{a}$) D5 अन्ये यंत्रं; T1 M1 छत्रमन्ये (by transp.). — $^{b}$) Ś1 K Dc D1–3. 5 कवचं च; T2 G1 बभंजुश्च (for बन्धुरं च). — B Dc ins. after $30^{ab}$: S (except G3), after 30:

1111* प्रगृहीतायुधा वीराश्चित्रसेनपुरोगमाः ।

T G1. 2. 4 ins. after $30^{ab}$:

1112* अन्ये संपूर्णयामासुश्चक्रे चाक्षौ तथापरे ।

— $^{d}$) =(var.) 3. 231. $5^{d}$. N G3 तिलशो (for खण्डशो). Ś1 K1. 2 व्या(Ś1 व्य)हनन्; K3 G1 [ऽ]भ्यहरन्; K4 D2. 3 T2 न्यहनन्; B Dn D4. 6 G3 व्यधमन् (for ऽभ्यहनन्). T2 धनुः; G1. 4 M1 रणे (for रथम्). After 30, Ś1 K1. 2 read $29^{cd}$; while S (except G3) ins. 1111*.

**31** $^{a}$) G1 अवस्कंद्य (for °प्लुत्य). — $^{b}$) Ś1 K1. 2 °धृत्; D5 °धृक् (for °भृत्). T2 G1. 2. 4 [ऽ]पि भारत (for ऽसिचर्मभृत्). — After $31^{ab}$, T G1. 2. 4 ins.:

1113* अंसावलम्बितधनुर्धावमानो महाबलः ।

[T G1 अधोव° (for अंसाव°). T2 °रथः (for °बलः).] — $^{c}$) Ś1 K Dc D1–3. 5 आरुह्य (for आस्थाय). — $^{d}$) K1 स रथाश्वान्; D5 दिव्यानश्वान् (for मोक्षायाश्वान्). K4 D2. 3 अनोदयत् (for अचोदयत्). K3 आत्ममोक्षाय नोदयत्.

Colophon. — *Major parvan:* Ś1 K2 Dn2 D6 G2. 4 आरण्य. — *Sub-parvan:* K3. 4 B D G1. 3 M2 घोषयात्रा. — *Adhy. name:* G1 कर्णपलायनं; M2 कर्णपराजयः. — *Adhy. no.* (figures, words or both): B4 312; Dn1 (marg.). n3 240; Dn2 239; D1 243; T1 232; T2 G1 231; G2 230 (as in text); G4 M1 233; M2 135 (sic). — *Śloka no.:* Dn1. n3 31; Dn2 32.

## 231

**1** $^{a}$) D2 प्रद्रुतैश्च (for गन्धर्वैस्तु). — $^{b}$) T2 G2 transp. भग्ने and कर्णे. — $^{c}$) K1. 2 संप्राद्रवन्; K4 D2. 3 प्राद्रवच्च (D2 °त्सा) (for संप्राद्रवच्). — $1^{d}$=3. 230. $10^{d}$.

**2** $2^{ab}$=3. 230. $11^{ab}$. — $^{a}$) G4 विद्रुतः (for द्रवतः). D2 शूरान् (for सर्वान्). — $^{b}$) T1 M योधमुख्यान्पराजि-तान्. — $^{c}$) B1. 4 D4. 6 G4 महाराजो. — $^{d}$) = 3. 230. $11^{d}$. B1 तव (for तत्र). G4 पराङ्मुखी.

**3** $^{d}$) Dc1 D1. 2. 4 अरिंदम; T2 अमर्षणः (for अरिंदमः).

**4** $^{a}$) Ś1 ते; K1. 2. 4 D3. 5 तं; K3 D1. 2 T G3. 4 तद् (for तु). — $^{c}$) D5 जिघांसंतं.

C. 3. 14917
B. 3. 242. 5
K. 3. 243. 5

अश्वांस्त्रिवेणुं तल्पं च तिलशोऽभ्यहनन्रथम् ॥ ५
दुर्योधनं चित्रसेनो विरथं पतितं भुवि ।
अभिद्रुत्य महाबाहुर्जीवग्राहमथाग्रहीत् ॥ ६
तस्मिन्गृहीते राजेन्द्र स्थितं दुःशासनं रथे ।
पर्यगृह्णन्त गन्धर्वाः परिवार्य समन्ततः ॥ ७
विविंशतिं चित्रसेनमादायान्ये प्रदुद्रुवुः ।
विन्दानुविन्दावपरे राजदारांश्च सर्वशः ॥ ८
सैन्यास्तु धार्तराष्ट्रस्य गन्धर्वैः समभिद्रुताः ।
पूर्वं प्रभग्नैः सहिताः पाण्डवानभ्ययुस्तदा ॥ ९
शकटापणवेश्याश्च यानयुग्यं च सर्वशः ।
शरणं पाण्डवाञ्जग्मुर्ह्रियमाणे महीपतौ ॥ १०
प्रियदर्शनो महाबाहुर्धार्तराष्ट्रो महाबलः ।
गन्धर्वैर्ह्रियते राजा पार्थास्तमनुधावत ॥ ११
दुःशासनो दुर्विषहो दुर्मुखो दुर्जयस्तथा ।
बद्ध्वा ह्रियन्ते गन्धर्वै राजदाराश्च सर्वशः ॥ १२
इति दुर्योधनामात्याः क्रोशन्तो राजगृद्धिनः ।
आर्ता दीनस्वराः सर्वे युधिष्ठिरमुपागमन् ॥ १३
तांस्तथा व्यथितान्दीनान्भिक्षमाणान्युधिष्ठिरम् ।

---

**5** $^{a}$) D3 च बाहुं (for वरूथं). — $^{b}$) K4 D1. 3 G1. 2. 4 °सारथिम्; D5 °सारथीन्. — $^{c}$) D5 अश्वं; G1 नल्वं (for अश्वान्). K2 D1 °वेणु- (for °वेणुं). S (except G3) अक्षं (for तल्पं). — $^{d}$)=(var.) 3. 230. 30$^{d}$. B4 S (except G3) शतशो (for तिलशो). Ś1 व्यहनद्; K1 व्यहरन्; K2 विहनन्; K3 [ऽ]भ्यहरन्; K4 B Dn D2 व्यधमद्; D1. 3 T2 G1. 2 M2 [ऽ]भ्यहनद्; T1 व्याहनन् (for ऽभ्यहनन्). Ś1 K D1 रथात्; B Dc Dn D4. 6 शरैः (for रथम्).

**6** $^{a}$) G4 आरोप्य स महाबाहुर् (cf. 1114*). — $^{b}$) D1 पातितं. — $^{c}$) K1 Dc महाबाहु; M2 °बाहुं (for °बाहुर्). — $^{d}$) T G1. 2 केशपक्षे तथा (for जीवग्राहमथ). G4 M अगृह्णत (for अथाग्रहीत्). — After 6, S (except G3) ins.:

1114* तस्य बाहू महाराज बद्ध्वा रज्ज्वा महारथम् ।
आरोप्य स्वं महाराज चित्रसेनो ननाद ह ।

[(L. 1) T2 transp. बाहू and बद्ध्वा; G1 transp. बद्ध्वा, and रज्ज्वा. — (L. 2) T2 G2 आरोप्य तं महाबाहुश्.]

**7** $^{a}$) K3. 4 B1. 3 Dc2 Dn3 D2. 4 T2 G3 राजेंद्रे; T1 M1 कौरव्ये (for राजेन्द्र). — $^{b}$) B2 दुर्योधनं (for दुःशा°). K2 रथं; K3 रणं; B3 D1. 2 M2 रणे (for रथे). — $^{c}$) B4 पर्यगृह्णंत; D1 प्रत्यगृह्णंत. — $^{d}$) T1 सहस्रशः (for समन्ततः).

**8** $^{a}$) K4 D1 T G4 विविंशतिश्च; B1-3 Dn D6 G3 M2 °शतिं-. K1 चित्रसेन; B1. 2 Dn D4. 6 G3 °सेनाव्. — $^{b}$) Ś1 चाचायाग्रे (sic); Dc2 चादायान्ये (for आदायान्ये). K3 B1-3 D (except D3. 5) G3 वि° (for प्र°). — $^{c}$) B1 [अ]परौ (for [अ]परे).

**9** $^{a}$) K3 Dc D1. 5 योधाः; B Dn D4 G3 सैन्यं; T1 G2. 4 M सेनाः (for सैन्याः). B Dn D4 G3 तद्; D5 च (for तु). — $^{b}$) B Dn D4. 6 G3 °द्रुतं (for °द्रुताः). — $^{c}$) K1-3 Dc Dn1. n3 D1. 4. 5 G2. 4 पूर्व- (for पूर्वं). B1 Dn D6 प्रभग्नाः. K1 Dc D4 सहिता. K4 पूर्वभग्नैः प्रसहिताः; D2 पूर्वभग्नैस्तु सहिताः. — $^{d}$) T1 M पांडवाञ्छरणं ययुः.

**10** $^{a}$) = 3. 228. 27$^{a}$. Ś1 K1 (marg. *sec. m.*). 3 B2-4 Dc1 Dn D4. 6 T2 G1-3 शकटा(B3 °टाः)पणवेशाश्च; D3 शकटीपणवैश्या च. — $^{b}$) D2 °युग्यान् (for °युग्यं). — $^{c}$) M1 शरण्यं (for शरणं). T1 G2 M शरणं; T2 पांडवं (for पाण्डवाञ्). — $^{d}$) G1 परंतपे (for महीपतौ). T1 M1 धर्मराजं युधिष्ठिरं.

**11** Before 11, N G3 ins. सैनिका ऊचुः. — $^{a}$) Hypermetric! B1. 4 T G2. 4 M1 प्रियदर्शो; Dc Dn D4-6 G3 °दर्शी; D1. 2 °दर्शन् (sic); D3 दुर्योधनो; G1 सुयोधनो; M2 दर्शति यो. Dn महाबाहो (!); D2 °राज. — $^{b}$) D2 गंधर्वैर्नो जितं बलं. — $^{c}$) D2 बद्धश्च (for गन्धर्वैर्). T2 राजन्. — $^{d}$) K4 D3 तद् (for तम्). K3 D1 अभि°; B4 अन्व° (for अनु°). T1 M1 तं मोक्षयत पांडवाः; G1 पार्थास्तानुपधावत.

**12** $^{b}$) T1 transp. दुर्मुखः and दुर्जयः. M2 दुःसह° (for दुर्जय°). — $^{d}$) T1 °पत्न्य° (for °दारा°). Ś1 K1. 2 सहस्रशः (for च सर्वशः).

**13** $^{b}$) D4 T1 क्रोशंते. B4 जयगृद्धिनः; Dc2 °गृद्धिनः; Dn3 D1 राजगर्द्धिनः; D5 °गृध्निणः; G4 °गर्धिनः. — $^{c}$) K2 दानसुताः; K3 B2-4 Dn D4. 6 दीनास्ततः (for दीनस्वराः). — $^{d}$) Dc अथागमन् (for उपा°). T1 M1 धर्मराजमभिद्रवन्.

**14** $^{a}$) G4 तथाप्यवस्थितान्दीनान्. — $^{b}$) S (except G3) वीक्ष° (for भिक्ष°). — $^{cd}$) K4 दृष्ट्वा; D5 गृध्रान्; T1 भीतान्; G4 वृत्तान् (for वृद्धान्). K1. 2 सुयो° (for दुर्यो°). D2 भीमसेनो महाबाहुरास्फोट्य समभाषत. — After 14, D5 ins.:

1115* प्रगृहीतायुधान्वीरांश्चित्रसेनपुरोगमान् ।

वृद्धान्दुर्योधनामात्यान्भीमसेनोऽभ्यभाषत ॥ १४
अन्यथा वर्तमानानामर्थो जातोऽयमन्यथा ।
अस्माभिर्यदनुष्ठेयं गन्धर्वैस्तदनुष्ठितम् ॥ १५
दुर्मन्त्रितमिदं तात राज्ञो दुर्द्यूतदेविनः ।
द्वेष्टारमन्ये क्लीबस्य पातयन्तीति नः श्रुतम् ॥ १६
तदिदं कृतं नः प्रत्यक्षं गन्धर्वैरतिमानुषम् ।
दिष्ट्या लोके पुमानस्ति कश्चिदस्मत्प्रिये स्थितः ।
येनास्माकं हृतो भार आसीनानां सुखावहः ॥ १७
शीतवातातपसहांस्तपसा चैव कर्शितान् ।
समस्थो विषमस्थान्हि द्रष्टुमिच्छति दुर्मतिः ॥ १८
अधर्मचारिणस्तस्य कौरव्यस्य दुरात्मनः ।
ये शीलमनुवर्तन्ते ते पश्यन्ति पराभवम् ॥ १९
अधर्मो हि कृतस्तेन येनैतदुपशिक्षितम् ।
अनृशंसास्तु कौन्तेयास्तस्याध्यक्षान्ब्रवीमि वः ॥ २०
एवं ब्रुवाणं कौन्तेयं भीमसेनममर्षणम् ।
न कालः परुषस्यायमिति राजाभ्यभाषत ॥ २१

C. 3. 14934
B. 3. 242. 22
K. 3. 243. 24

इति श्रीमहाभारते आरण्यकपर्वणि एकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥

---

— D5 cont.: B Dc Dn D4. 6 ins. after 14: K4 D1. 3, after 16[ab]: D2, after 15[ab]:

1116* महता हि प्रयत्नेन संनह्य गजवाजिभिः ।

[ K4 D3 सु-; Dc [अ]पि (for हि). Dc D1 संनद्ध (D1 संनह्य) रथवाजिनः. ]

**15** B Dc Dn D4-6 S transp. 15[ab] and 15[cd]. — [b]) S (except G3) भूतो (for जातो). — After 15[ab], D2 ins. 1116*; while K4 D1-3 read 16[ab]. K1-3 om. 15[cd]. — [c]) K4 D1-3. 5 transp. अस्माभिर् and यद्. — After 15, K4 D1-3 read 16[cd].

**16** K4 D1-3 read 16[ab] after 15[ab]. — [a]) B2-4 Dn D4. 6 तावद् (for तात). T2 दुर्मन्त्रिता तु राजश्रेद्; M1 दुर्मन्त्रितं पश्यताद्य. — [b]) G1 राज्ञो वै द्यूतचोदितं. — After16[ab], K4 D1. 3 ins. 1116*; while S (except G3) ins.:

1117* दीनान्दुर्योधनस्यास्मान्द्रष्टुकामस्य दुर्मतेः ।

[ G1. 4 M सुयोधनस्य. G4 M [आ]सन् (for [अ]स्मान्). ]

— K4 D1-3 read 16[cd] after 15. — [d]) Ś1 K1. 2. 4 D1 G1 M यात° (K4 marg. *sec. m.* योज°); K3 D2. 3 T1 G4 घात°; B4 ताप°; T2 G2 धार° (for पात°).

**17** [a]) Hypermetric! K2. 4 (marg. *sec. m.*) B Dn D1. 4 G3 इदं (for तदिदं). Dc तदिदं कर्म प्रत्यक्षं; T G1. 2. 4 M कृतं तदेव प्रत्यक्षं. — [b]) D5 G4 °मानुषैः. — [d]) Dc क्वचिद् (for कश्चिद्). K2 T1 G1 अस्मिन् (for अस्मत्-). K2 कृत- (for -प्रिये). Ś1 रतः; D3 G1 स्थितं (for स्थितः). — [e]) Ś1 तेना° (for येना°). — [f]) T1 आसीनानां यथासुखं.

**18** [a]) Ś1 K °तपसहास्. — [b]) Ś1 K1. 2 Dn3 D5 कर्षिताः; B1. 2. 4 कर्षितान्. — [c]) Ś1 K1. 2. 4 D2. 3 स; D1 S (except G3) च; D5 स्म (for हि).

**19** [a]) B4 अधर्मा°. — [b]) K3. 4 D1. 3 G1. 2. 4 कौरवस्य. — [c]) K3 ते (for ये). B1-3 Dn2. n3 D4. 6 अनुवर्तति. — [d]) K3 T1 M पश्यंतु.

**20** [b]) G1 [इ]दम् (for [ए]तद्). K1 उपशिक्षिताः; K3 उपतिष्ठितं; D1 उपमंत्रितं; G1. 2. 4 उपलक्षितं. — [c]) Ś1 K1. 2 D5 T1 अनृशंसस्. Ś1 D5 कौंतेयस्. D2 अनृशंसे तु कौंतेये. — [d]) K2 तस्याधिक्ष्यान्; B Dc Dn D4. 6 T2 G तत्प्रत्यक्षं; D2. 3. 5 T1 M1 सेनाध्यक्षान्; M2 तस्याध्यक्षं.

**21** [a]) D5 कौंतेयो; T1 M1 संरब्धं (for कौन्तेयं). — [b]) B Dn D4. 6 T2 G3 अपस्व (B3 °ज्व)रं; G2. 4 अपस्वनं (for अमर्षणम्). — [d]) K3 राजाभिभाषितः; T1 राजा न्यवारयत्.

Colpohon. — *Major parvan:* Ś1 K1. 2 Dn1 G2. 4 आरण्य. — *Sub-parvan:* K B D G1. 3 M घोषयात्रा. — *Adhy. name:* D1 दुर्योधनादीनां गंधर्वग्रहणं; M1 दुर्योधनादिजीवग्रहणं; M2 दुर्योधनग्रहणं. — *Adhy. no.* (figures, words or both): B4 313; Dn1 (marg.). n3 241; Dn2 240; D1 244; T1 233; T2 G1 232; G2. 4 M 234. — *Śloka no.:* Dn D1 22.

## 232

**1** [a]) M2 अधि° (for अभि°). — [c]) T1 पांडवान् (for कौरवान्). D3 S विषमं (T1 शरणं) (for विषम-). — After 1, D2 ins.:

1118* रक्षणीया महाबाहो मैवं वद महामते ।

**2** T2 om. 2-3. — [a]) G1 लोके (for भेदा). — [b]) M1 महामते (for वृको°). — [c]) D1 धर्माणि (for वैराणि).

भवेद्यशः पृथिव्यां मे ख्यातं गन्धर्वतो वधात् ।
प्राप्ताश्च लोकाः पुण्याः स्युर्महेन्द्रसदनेऽक्षयाः ॥ ९
यत्त्वद्य मे व्यवसितं तच्छृणुध्वं नरर्षभाः ।
इह प्रायमुपासिष्ये यूयं व्रजत वै गृहान् ।
भ्रातरश्चैव मे सर्वे प्रयान्त्वद्य पुरं प्रति ॥ १०
कर्णप्रभृतयश्चैव सुहृदो बान्धवाश्च ये ।
दुःशासनं पुरस्कृत्य प्रयान्त्वद्य पुरं प्रति ॥ ११
न ह्यहं प्रतियास्यामि पुरं शत्रुनिराकृतः ।
शत्रुमानापहो भूत्वा सुहृदां मानकृत्तथा ॥ १२
स सुहृच्छोकदो भूत्वा शत्रूणां हर्षवर्धनः ।
वारणाह्वयमासाद्य किं वक्ष्यामि जनाधिपम् ॥ १३
भीष्मो द्रोणः कृपो द्रौणिर्विदुरः संजयस्तथा ।
बाह्लीकः सोमदत्तश्च ये चान्ये वृद्धसंमताः ॥ १४
ब्राह्मणाः श्रेणिमुख्याश्च तथोदासीनवृत्तयः ।
किं मां वक्ष्यन्ति किं चापि प्रतिवक्ष्यामि तानहम् ॥ १५
रिपूणां शिरसि स्थित्वा तथा विक्रम्य चोरसि ।
आत्मदोषात्परिभ्रष्टः कथं वक्ष्यामि तानहम् ॥ १६
दुर्विनीताः श्रियं प्राप्य विद्यामैश्वर्यमेव च ।
तिष्ठन्ति न चिरं भद्रे यथाहं मदगर्वितः ॥ १७
अहो बत यथेदं मे कष्टं दुश्चरितं कृतम् ।
स्वयं दुर्बुद्धिना मोहाद्येन प्राप्तोऽस्मि संशयम् ॥ १८
तस्मात्प्रायमुपासिष्ये न हि शक्ष्यामि जीवितुम् ।

C. 3. 15089
B. 3. 249. 20
K. 3. 250. 20

---

निंद्य- ; D2 नैवं- (for एवं-). K3 D2 हि (for न). D3 जीवनं (for जीवितम्). B Dc Dn D4. 6 नैवंभूतस्य जीवितं.

**9** a) B Dn D4. 6 T1 अभूद्; M1 भूयाद् (for भवेद्). K2 यथा (for यशः). — b) B1 ख्यातिर्; T1 ख्यातो. K1. 2 D3 वधं; T1 वधः (for वधात्). — c) Ś1 K1. 2 D5 प्राप्तस्य (for प्राप्ताश्च). Ś1 K1. 2 D5 लोकान्पुण्यान्; B1–3 Dc1 Dn D4. 6 T1 पुण्यलोकाः (for लोकाः पुण्याः). Ś1 K1–3 D5 च; T2 G1 मे (for स्युर्). B4 प्राप्ताः स्युश्चैव मे लोकाः. — d) T1 महेंद्रभवने. Ś1 K1. 2 °क्षयः; D5 °क्षयान्.

**10** a) B1 यत्त्विदं; D1 यदद्य; D2 यच्चाद्य (for यत्त्वद्य). K4 G2. 4 [ऽ]ध्यवसितं (for व्यव°). G1 यन्मे व्यवसितं किंचित्. — b) T1 G2–4 M1 नराधिपाः; T2 G1 नराधिप (for नर°). — c) K2–4 D (except Dn3 D4) T2 G3 उपाशिष्ये; T1 समासिष्ये (for उपासिष्ये). — d) K3 गृहं. — e) Ś1 K1. 2 [अ]द्य (for [ए]व). — f) $=11^{d}$. D3 पुरीं; G1 गृहं (for पुरं). Ś1 K1. 2 प्रयांतु नगरं प्रति; B2–4 Dn D4. 6 T2 G3 यांत्वद्य स्वपुरं प्रति.

**11** a) G4 सर्वे (for चैव). — b) Ś1 K1. 2 B1 T1 G1 च मे; T2 G2. 4 M तथा (for च ये). — d) $=10^{f}$. K4 D3 T2 G1 प्रयांतु नगरं प्रति. — After 11, K1 reads $13^{cd}$.

**12** a) B2 त्वहं (for ह्यहं). Ś1 K1. 2 सं(K2 मां)प्रवेक्ष्यामि; B Dn D1–4. 6 संप्रयास्यामि; Dc1 संप्रपश्यामि; Dc2 संप्रयच्छामि (for प्रतिया°). G2 न ह्यप्यहं प्रयास्यामि. — b) Ś1 (*sup. lin.*) K1 D3. 5 शत्रुविमानितः; K3 °तिरस्कृतः. — c) K1. 2 °मानापहौ; G2 °मानासहो. — d) Ś1 K1. 2 बलकृत्तदा (K1 °था); T1 शोकहृत्तथा; T2 G1. 2 मानवर्धनः; G4 मानकृत्तदा. — After 12, T G2. 4 ins.:

1140* कामं रणशिरस्यद्य शत्रुभिर्वै विमानितः ।
[T2 कारणैः सम्यगभितः (for the prior half).]

On the other hand, G1 ins. after 12:

1141* कारणैरस्म्यभिहितः शत्रुभिर्वै विमानितः ।
अकारणेऽस्म्यभिजितः शत्रुभिर्वै विमानितः ।

**13** a) B Dn D4. 6 G3 जातः; Dc भुवं (sic) (for भूत्वा). K3. 4 D1–3 सुहृच्छोकप्रदो भूत्वा (D1 °दोद्याहं; D2 °दो नित्यं); G2 स सुहृच्छोकसंतप्तः. — K1 reads $13^{cd}$ after 11. — d) Ś1 K1. 2 नराधिपं (K1 °प); B2 त्रिपिष्टपं (for जना°).

**14** a) B1–3 Dn D3–6 G3 भीष्मद्रोणौ; G1 भीष्मौ द्रौणिः. B2. 3 Dn D3. 4. 6 G3 कृपद्रौणी (D3 °णिर्). — b) K1 T1 G4 तदा (for तथा). — c) N (except B1. 3. 4; Ś1 damaged) G3 बाह्लिकः. B1. 3. 4 Dn D4. 6 G3 सौमदत्ति°. — d) K2 वृत्तसंमतः; D2 दृढसंमताः; G4 M भृश°.

**16** Ś1 K1. 2 D4 om. 16. M1 transp. 16 and 17. — b) K4 चारिभिः; B3 D6 G3 चोपरि (for चोरसि). — d) D1. 2. 5 T2 G1. 2. 4 द्रक्ष्यामि (for व°).

**17** M1 transp. 16 and 17. — a) Dc प्रियं; D2 स्वयं (for श्रियं). — b) K1. 2. 4 B2. 4 G2–4 M वा (for च). — c) K1. 2. 4 D3. 5 transp. तिष्ठन्ति and न. — d) Dc मदगर्वितं; T1 मतिगर्वितः; G2 अति°.

**18** a) T2 G4 यदेतन्; G1 यथैतन् (for यथेदं). B Dn D4. 6 G3 अहोनर्ह(B1 °नय-; B2–4 नार्ह)मिदं कर्म. — b) D5 दृष्टं (for कष्टं).

**19** a) K2. 4 Dn1. n3 (before corr.) D1 T2 G3 उपाशिष्ये. Cf. $10^{c}$. — b) B1. 3 Dn2. n3 D4–6 G3 न हि

C. 3. 15089
B. 3. 249. 20
K. 3. 250. 20

चेतयानो हि को जीवेत्कृच्छ्राच्छत्रुभिरुद्धृतः ॥ १९
शत्रुभिश्चावहसितो मानी पौरुषवर्जितः ।
पाण्डवैर्विक्रमाढ्यैश्च सावमानमवेक्षितः ॥ २०

वैशंपायन उवाच ।

एवं चिन्तापरिगतो दुःशासनमथाब्रवीत् ।
दुःशासन निबोधेदं वचनं मम भारत ॥ २१
प्रतीच्छ त्वं मया दत्तमभिषेकं नृपो भव ।
प्रशाधि पृथिवीं स्फीतां कर्णसौबलपालिताम् ॥ २२
भ्रातॄन्पालय विस्रब्धं मरुतो वृत्रहा यथा ।
बान्धवास्त्वोपजीवन्तु देवा इव शतक्रतुम् ॥ २३
ब्राह्मणेषु सदा वृत्तिं कुर्वीथाश्चाप्रमादतः ।
बन्धूनां सुहृदां चैव भवेथास्त्वं गतिः सदा ॥ २४
ज्ञातींश्चाप्यनुपश्येथा विष्णुर्देवगणानिव ।
गुरवः पालनीयास्ते गच्छ पालय मेदिनीम् ॥ २५
नन्दयन्सुहृदः सर्वाञ्शात्रवांश्चावभर्त्सयन् ।
कण्ठे चैनं परिष्वज्य गम्यतामित्युवाच ह ॥ २६
तस्य तद्वचनं श्रुत्वा दीनो दुःशासनोऽब्रवीत् ।
अश्रुकण्ठः सुदुःखार्तः प्राञ्जलिः प्रणिपत्य च ।
सगद्गदमिदं वाक्यं भ्रातरं ज्येष्ठमात्मनः ॥ २७
प्रसीदेत्यपतद्भूमौ दूयमानेन चेतसा ।
दुःखितः पादयोस्तस्य नेत्रजं जलमुत्सृजन् ॥ २८
उक्तवांश्च नरव्याघ्रो नैतदेवं भविष्यति ।
विदीर्येत्सनगा भूमिर्द्यौश्चापि शकलीभवेत् ।
रविरात्मप्रभां जह्यात्सोमः शीतांशुतां त्यजेत् ॥ २९
वायुः शैघ्र्यमथो जह्याद्धिमवांश्च परिव्रजेत् ।
शुष्येत्तोयं समुद्रेषु वह्निरप्युष्णतां त्यजेत् ॥ ३०

---

शक्यामि; $D_2$ (by transp.) शक्ष्यामि न हि; $G_{2.4}$ न हि शक्नोमि. $D_1$ सह्यं मे नेह जीवितं. — $^{c}$) $K_4$ $D_1$ $T_2$ $G_1$ चिंतयानो; $B_1$ चेतनावान्; $T_1$ वेदयानो.

**20** $^{a}$) S (except $G_3$) [अ]पह° (for [अ]वह°). — $^{b}$) $B_4$ पौरुषगर्वितः. — $^{c}$) K Dc $Dn_2$. $n_3$ $D_{1-4.6}$ $G_3$ विक्रमाद्यैश्च ($K_3$ विषमस्थैश्च); $B_1$ विक्रमारूढैः. — $^{d}$) $K_2$ सावसानम्; $D_1$ स सावज्ञम् (for सावमानम्).

**21** $^{a}$) $D_{1.2}$ एवं चिंतागतो राजा.

**22** $^{a}$) $B_1$ प्रतीहासं (for प्रतीच्छ त्वं). — $^{b}$) M नृपोत्तम (for नृपो भव). — $^{c}$) $Ś_1$ $K_2$ $Dn_3$ $G_1$ कृत्स्नां; $K_{1.3}$ Dc $D_{3.5}$ सर्वां (for स्फीतां). — $^{d}$) $K_2$ कर्णसौवल्य°; $B_2$ °पावितः; $D_2$ M °पालितः.

**23** $^{a}$) $Ś_1$ $K_4$ $B_{3.4}$ $D_{1-3}$ विश्रब्धं; $K_3$ Dc $D_5$ $T_1$ विश्रब्धः. — $^{b}$) $K_3$ मरुतां; $T_1$ प्रभूतो (for मरुतो). — $K_3$ om. $23^{c}$–$25^{b}$. — $^{c}$) B Dn $D_{4.6}$ चोप° (for त्वोप°). — $^{d}$) S (except $G_3$) सहस्राक्षमिवामराः.

**24** $K_3$ om. 24 (cf. v.l. 23). — $^{a}$) $T_1$ $G_1$ $M_2$ यथा (for सदा). $K_2$ $G_1$ वृत्तं; $B_1$ बुद्धिं; Dc $D_{1-3}$ वृत्तिः; $T_2$ दांतं (for वृत्तिं). — $^{b}$) $D_5$ तु (for च). $D_2$ प्रसादयन् (for [अ]प्रमादतः). $B_4$ कुर्वीथा रोषमुत्सृज; $T_2$ कुरु वीराप्रमादतः.

**25** $K_3$ om. $25^{ab}$ (cf. v.l. 23). — $^{a}$) $K_2$ $D_{1.3}$ ज्ञातीश्च (for ज्ञातींश्च). $K_{2.4}$ Dc $D_{1-3.5}$ °मन्येथा (for °पश्येथा). — $^{b}$) $B_{2.3}$ Dn $D_{4.6}$ $G_3$ यथा (for इव). — $^{c}$) $D_2$ कुरवः (for गुरवः). $K_3$ $D_1$ मान° (for पाल°). $D_1$ $T_2$ $G_1$ च (for ते).

**26** $G_1$ om. $26^{ab}$. — $^{a}$) $Ś_1$ $K_2$ चैव (for सर्वाञ्). — $^{b}$) $D_5$ शत्रूंश्चैव (for शात्रवांश्च). $Ś_1$ $K_{1.2}$ Dc $D_{1-3.5}$ [अ]वसादयन्; $K_{3.4}$ [अ]वसादय; $T_1$ [अ]वनादयन्; $T_2$ [आ]ह्वय स्वयं. — $^{c}$) $T_2$ $G_{1.2.4}$ कर्णे (for कण्ठे). — $^{d}$) $B_1$ तं (for ह).

**27** $^{c}$) $Ś_1$ $K_{1.2}$ बाष्पकंठः ($K_1$ °ठाः); $G_2$ अश्रुपूर्णाः; $M_2$ उत्कंठश्च (for अश्रुकण्ठः). — $^{d}$) $B_{2.4}$ ह (for च). — $D_2$ om. $27^{ef}$. — $^{f}$) $B_2$ एव च (for आत्मनः).

**28** $^{a}$) $K_1$ °भ्यपतद्; $M_2$ °त्येव तद् (for °त्यपतद्). — $^{b}$) $D_{3.6}$ दीर्यमाणेन (for दूय°). Dc तेजसा (for चेतसा). — $^{c}$) $T_2$ $G_2$ सखेदं (for दुःखितः). — $^{d}$) $G_2$ नेत्राभ्यां (for नेत्रजं).

**29** $^{a}$) $D_3$ तु (for च). $K_4$ $D_{1.3}$ $T_2$ $G_{1.2.4}$ नरव्याघ्र. — $^{c}$) $B_1$ दीर्येत (for विदीर्येत्). $K_3$ सा नगाद्; B Dn $D_{2.4.6}$ सकला (for सनगा). — $^{d}$) $T_2$ मंदरः (for द्यौश्चापि). — $^{e}$) $G_2$ आतपतां (for आत्मप्रभां). — $G_1$ om. (hapl.) $29^{f}$–$30^{a}$. — $^{f}$) $K_1$ शीतांशुतस्; $B_1$ तीक्ष्णांशुतां. $B_1$ व्रजेत् (for त्यजेत्).

**30** $G_1$ om. $30^{a}$ (cf. v.l. 29); $K_4$ $D_1$ om. 30. — $^{a}$) $Ś_1$ $K_{1.2}$ शैत्यम्; $D_2$ शीघ्रम् (for शैघ्र्यम्). $T_2$ पाशं जलेशो जह्याद्यद्. — $^{b}$) $K_3$ Dc परित्यजेत्; $D_5$ [अ]पि संचलेत्; $T_1$ $G_1$ हिमं व्र°; $T_2$ लतां व्र°; $G_{2.4}$ परिप्लवेत्. — $^{c}$) Dc $T_2$ $G_3$ समुद्रस्य; $D_5$ °द्रोपि. — $^{d}$) Dc अग्निर् (for वह्निर्). $K_1$ Dc अति- (for अपि). S (except $G_3$) भविष्यति शतं

न चाहं त्वदृते राजन्प्रशासेयं वसुंधराम् ।
पुनः पुनः प्रसीदेति वाक्यं चेदमुवाच ह ।
त्वमेव नः कुले राजा भविष्यसि शतं समाः ॥ ३१
एवमुक्त्वा स राजेन्द्र सस्वनं प्ररुरोद ह ।
पादौ संगृह्य मानार्हौ भ्रातुर्ज्येष्ठस्य भारत ॥ ३२
तथा तौ दुःखितौ दृष्ट्वा दुःशासनसुयोधनौ ।
अभिगम्य व्यथाविष्टः कर्णस्तौ प्रत्यभाषत ॥ ३३
विषीदथः किं कौरव्यौ बालिश्यात्प्राकृताविव ।
न शोकः शोचमानस्य विनिवर्तेत कस्यचित् ॥ ३४
यदा च शोचतः शोको व्यसनं नापकर्षति ।
सामर्थ्यं किं त्वतः शोके शोचमानौ प्रपश्यथः ।
धृतिं गृह्णीत मा शत्रूञ्शोचन्तौ नन्दयिष्यथः ॥ ३५
कर्तव्यं हि कृतं राजन्पाण्डवैस्तव मोक्षणम् ।
नित्यमेव प्रियं कार्यं राज्ञो विषयवासिभिः ।
पाल्यमानास्त्वया ते हि निवसन्ति गतज्वराः ॥ ३६
नार्हस्येवंगते मन्युं कर्तुं प्राकृतवद्यथा ।
विषण्णास्तव सोदर्यास्त्वयि प्रायं समास्थिते ।
उत्तिष्ठ व्रज भद्रं ते समाश्वासय सोदरान् ॥ ३७
राजन्नद्यावगच्छामि तवेह लघुसत्त्वताम् ।
किमत्र चित्रं यद्वीर मोक्षितः पाण्डवैरसि ।

C. 3. 15111
B. 3. 250. 1
K. 3. 251. 2

---

समाः (cf. 31[ef]).

**31** [a]) B4 तु (for च). Ś1 त्वत्कृते; D5 त्वामृते (for त्वदृते). — [b]) Ś1 K3 D1. 2 प्रशासिष्ये; B2. 4 शासयेयं (for प्रशासेयं). — [d]) T1 [ए]तद् (for [इ]दम्). — After 31[cd], S (except G3) ins.:

1142* शत्रूणां शोककृद्राजन्सुहृदां शोकनाशनः ।
[ G1 मानवर्धनः; M हर्षवर्धनः (for शोक°). ]

— [e]) B1 G2. 4 जातो; D2 राजन् (for राजा). — [f]) K4 Dc D2. 4. 6 G2 M2 भविष्यति. T G1 न संशयः (for शतं समाः).

**32** Before 32, D1 ins. वैशं° उ°. — [a]) K4 B1. 4 D5 T2 G4 राजेंद्रं; B2. 3 Dn D4. 6 राजानं. — [b]) K3 B1. 2. 4 Dn D3. 6 सुस्वरं; B3 Dc D4 सस्वरं (for सस्वनं). M2 च (for ह). — [c]) K3. 4 Dc2 स गृह्य; B2 संस्पर्श-; B3. 4 Dn D4. 6 T2 G3 °स्पृश्य; G4 °हृत्य (for °गृह्य). K4 D3 शिरसा; B1. 2. 4 D1 मानार्हो. — [d]) Ś1 मानद (for भारत).

**33** [a]) K2 T1 तदा; K4 D3 अथ (for तथा). K1 द्वौ; D1 सु-; G1 तु (for तौ). D1 भूत्वा (for दृष्ट्वा). — [c]) B Dn अधिगम्य. Ś1 महाबाहुः; K1. 2 महाराज; D1 सुदुःखार्ता (for व्यथा°).

**34** [a]) D2 transp. विषीदथः and किं. Ś1 B4 T2 G4 विषीदतः. T1 कौरवेंद्रौ (for किं कौरव्यौ). — [b]) K4 D1. 2 बालिशौ; T1 किं युवां (for बालिश्यात्). K3 प्राकृतानि च; G4 प्राकृता इव. — [c]) G1. 4 शोक° (for शोच°). — [d]) K3 °वर्तति; B4 °वर्तेत्तु (for °वर्तेत). B Dn D1. 4. 6 G3 कर्हि° (for कस्य°).

**35** [a]) Ś1 K2 G1 यथा (for यदा). K1. 2 न; D1 T1 तु (for च). B1 शोचयतः (for च शोचतः). — [b]) T M2 व्यसनान् (for व्यसनं). D1 °सर्पति (for °कर्षति). — [c]) K1 B3. 4 Dc D3. 5 G1. 2. 4 ततः (for त्वतः). Ś1 T2 शोकं; K3 शोको. — [d]) Ś1 K Dc D1–3. 5. 6 शोचमानः. Ś1 K Dc D1–3. 5 प्रपश्यति; B4 °तः; T1 G4 °थ. — [e]) B2 Dn D6 गृह्णीतं; B3. 4 T1 M2 गृहीत. T2 G1 धृतिमंतौ श्रियं चेमां. — [f]) B3 G2. 4 शोचतो (for °न्तौ). Ś1 Dc T1 °ष्यत; K4 D3 °ष्यथ (for °ष्यथः). T2 शत्रूञ्शोकमिमं जहि; G1 शोचंतौ मा जहास्यथः. — After 35, G1 ins.:

1143* धृतिमन्तो जयं शत्रूञ्शोचन्तौ नाभविष्यथ ।

**36** [c]) G2 एवं (for एव). T2 G1 हितं (for प्रियं). — [d]) =46[b]. K4 राज्ञां. — [e]) K3 [ऽ]पि (for हि).

**37** [a]) T1 नार्हति (for नार्हसि). B1 [ए]वं कृतं; T1 [ए]वं कृते (for [ए]वंगते). B1 मन्ये; D3 शोकं; T G1. 2 मृत्युं (for मन्युं). — [b]) Dc सर्वं (for कर्तुं). K4 D3 M2 प्रभो; T1 भवान्; G1. 2. 4 स्वयं; M1 विभो (for यथा). — [c]) K4 त्वयि (for तव). Dc D1. 3 सौदर्यास्. — [d]) B2 T1 समाश्रिते; D5 उपासिते. — After 37[cd], S (except T1 G3) ins.:

1144* तदलं दुःखितानेतान्कर्तुं सर्वान्नराधिप ।

— [e]) T1 तदलं दुःखितान्सर्वान् (cf. 1144*). — After 37, B D (except D1–3. 5) S (except T2 G2) ins. an addl. colophon, followed in most MSS. by कर्ण उ° (resp. कर्णः) (*adhy. no.:* Dn1. n3 248; Dn2 247).

**38** [a]) B Dc Dn D4 G4 M1 नाद्याव°; D6 न ह्याव° (for अद्याव°). — [b]) K3 D1. 2 T2 G1 [इ]मां; T1 G2. 4 [ए]व (for [इ]ह). — After 38[ab], S (except G3) ins.:

1145* अल्पत्वं च तथा बुद्धेः कार्याणामविवेकिताम् ।
[ G1 आलस्यं (for अल्पत्वं). T अविवेकतां. ]

— [c]) Dc तद्वीर; G2. 4 धर्मज्ञ (for यद्वीर). — [e]) G1 सद्यस्त्वं वशमापन्नः. — [f]) Ś1 K1. 2 B D2 °कर्षण; K3

C. 3. 15112
B. 3. 250. 2
K. 3. 251. 2

सद्यो वशं समापन्नः शत्रूणां शत्रुकर्शन ॥ ३८
सेनाजीवैश्च कौरव्य तथा विषयवासिभिः ।
अज्ञातैर्यदि वा ज्ञातैः कर्तव्यं नृपतेः प्रियम् ॥ ३९
प्रायः प्रधानाः पुरुषाः क्षोभयन्त्यरिवाहिनीम् ।
निगृह्यन्ते च युद्धेषु मोक्ष्यन्ते च स्वसैनिकैः ॥ ४०
सेनाजीवाश्च ये राज्ञां विषये सन्ति मानवाः ।
तैः संगम्य नृपार्थाय यतितव्यं यथातथम् ॥ ४१
यद्येवं पाण्डवै राजन्भवद्विषयवासिभिः ।
यदृच्छया मोक्षितोऽद्य तत्र का परिदेवना ॥ ४२
न चैतत्साधु यद्राजन्पाण्डवास्त्वां नृपोत्तम ।
स्वसेनया संप्रयान्तं नानुयान्ति स्म पृष्ठतः ॥ ४३
शूराश्च बलवन्तश्च संयुगेष्वपलायिनः ।
भवतस्ते सभायां वै प्रेष्यतां पूर्वमागताः ॥ ४४
पाण्डवेयानि रत्नानि त्वमद्याप्युपभुञ्जसे ।
सत्त्वस्थान्पाण्डवान्पश्य न ते प्रायमुपाविशन् ।
उत्तिष्ठ राजन्भद्रं ते न चिन्तां कर्तुमर्हसि ॥ ४५
अवश्यमेव नृपते राज्ञो विषयवासिभिः ।
प्रियाण्याचरितव्यानि तत्र का परिदेवना ॥ ४६
मद्वाक्यमेतद्राजेन्द्र यद्येवं न करिष्यसि ।
स्थास्यामीह भवत्पादौ शुश्रूषन्नरिमर्दन ॥ ४७
नोत्सहे जीवितुमहं त्वद्विहीनो नरर्षभ ।
प्रायोपविष्टस्तु नृप राज्ञां हास्यो भविष्यसि ॥ ४८

**वैशंपायन उवाच ।**

एवमुक्तस्तु कर्णेन राजा दुर्योधनस्तदा ।
नैवोत्थातुं मनश्चक्रे स्वर्गाय कृतनिश्चयः ॥ ४९

इति श्रीमहाभारते आरण्यकपर्वणि अष्टात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥

---

$D_{3.5.6}$ $G_3$ °कर्षनः; $D_1$ °कर्षणः.

**39** $^a$) $Ś_1$ $B_1$ °जीव्यैश्च; $K_2$ °जीवस्य. — $M_2$ om. (hapl.) $39^c$–$42^b$. — $^c$) $B_{1.3}$ $D_6$ $G_3$ ह्यथ; $T_2$ $G_2$ अथ (for यदि).

**40** $M_2$ om. 40 (cf. v.l. 39). — $^a$) $K_{1.2.4}$ T $M_1$ प्रधान-; Dc प्रवीणाः (for प्रधानाः). — $^b$) $Ś_1$ क्षोभयंतु; $D_3$ कालयंति; S (except $G_3$) क्षोभयित्वा. — $^c$) $K_{1.2}$ सु-; Dc -षु; $D_2$ [ऽ]त्र (for च). — $^d$) $Ś_1$ स्वसेवकैः; $K_2$ °सैन्यकैः; $B_2$ Dn $D_{4.6}$ $G_3$ [ए]व सैनिकैः.

**41** $M_2$ om. 41 (cf. v.l. 39). Cf. $39^{ab}$. — $^a$) $Ś_1$ °जीव्या°; $K_2$ °जेव्या° (for °जीवा°). Dc $G_1$ राज्ञो; $D_2$ $T_1$ राजन् (for राज्ञां). — $^b$) $Ś_1$ विजये (for विषये).

**42** $M_2$ om. $42^{ab}$ (cf. v.l. 39). — $^a$) $K_2$ यद्; $D_3$ यदा; $T_2$ $G_2$ इति (for यदि). $Ś_1$ $K_{1.2}$ राजा (for राजन्). — $^b$) $Ś_1$ $K_{1-3}$ $D_{1.2}$ $G_4$ भवान् (for भवद्-). — $^c$) $K_4$ B D (except $D_{1.2.5}$) $G_{2-4}$ [ऽ]सि (for ऽद्य). — $^d$) $=46^d$; Gītā (Vulg.) 2. 28. $G_1$ transp. तत्र and का. $K_4$ $D_{1.3}$ $G_1$ परिवेदना.

**43** $^a$) $B_1$ तवै°; $G_4$ न वै° (for न चै°). — $^b$) $B_1$ पांडवानां; $B_2$ °वेया (for °वास्त्वां). $B_1$ Dn $D_4$ नृपोत्तमं. — $^c$) $Ś_1$ $K_{1.2.4}$ $Dn_2$. $n_3$ $D_{1-3}$ $G_2$ संप्रयातं; $B_1$ °याते; Dc प्रयातं च; $T_1$ समं सर्वे. $M_1$ सेनया संप्रयांतं वै.

**44** $^b$) $Ś_1$ $K_{1.2}$ $D_1$ संग्रामेषु (for संयुगेषु). $Ś_1$ [अ]पलायनः; $T_2$ $G_1$ [अ]पराजिताः. — $^c$) $K_4$ (before corr.) B D (except $D_{1-3.5}$) $T_2$ $G_3$ सहाया (for सभायां).

**45** $^a$) $K_1$ पूर्वाणि (for रत्नानि). — $^b$) $K_4$ एतानि (for अद्यापि). $Ś_1$ $K_{1.2}$ [अ]नुयुज्यसे; $K_3$ [उ]पयुंजते; $D_1$ °युंजसे; $G_1$ °भुंक्ष्वसे. — $^c$) $T_2$ $G_1$ सत्वस्थाः पांडवाश्चापि. — After $45^{cd}$, S (except $G_3$) ins.:

1146* तदलं ते महाबाहो बुद्धिः प्रायोपवेशने ।

[$T_2$ $G_{1.2}$ विषादं ($T_2$ °मर्षं) कर्तुमीदृशं; M विशादेन महाबल (for the posterior half).]

— $^f$) $B_{1.3.5}$ Dn $D_{4.6}$ $G_3$ चिरं (for चिन्तां).

**46** $G_2$ om. 46. — $^a$) $Ś_1$ $M_2$ अपश्यम् (for अवश्यम्). — $^b$) $=36^d$. $T_1$ $G_4$ $M_2$ राज्ञां. — $^d$) $=42^d$; Gītā (Vulg.) 2. 28. $G_1$ transp. तत्र and का. $K_3$ परिदेविना; $K_4$ $D_{1.3}$ $G_1$ °वेदना.

**47** $^b$) $G_1$ अद्य (for यदि). $T_2$ $G_2$ त्वं; $G_1$ [ए]तन् (for [ए]वं). — $^d$) $K_4$ $B_1$ $D_{1.3}$ $T_1$ $G_{2.4}$ शुश्रूषुर्; $G_1$ शुश्रूषाम् (for शुश्रूषन्). $T_1$ भरतर्षभ (for अरि°).

**48** $^a$) Dc जीवितम् (for °तुम्). $T_2$ $G_1$ सत्यं; $G_2$ शक्यं (for अहं). — $^b$) $Ś_1$ यद्-; $D_2$ त्वां (for त्वद्-). — After $48^{ab}$, $T_2$ $G_1$ *repeat* $45^{ef}$. — $T_2$ om. $48^{cd}$. — $^c$) $K_4$ $D_3$ च (for तु). $K_4$ $D_3$ $G_{1.2.4}$ M तथा (for नृप). $T_1$ प्रायोपविष्टं राजानं. — $^d$) $K_3$ Dc $D_{1-3}$ हासो. $K_3$ $D_3$ भविष्यति. $T_1$ दुर्योधनममर्षणं (=3. 239. $1^d$).

**49** $T_1$ om. 49; $K_3$ $D_3$ om. the ref. — $^b$) $G_{2.4}$ तथा (for तदा). $T_2$ यश्छ्रुतं (sic) कौरवं त्वया. — $T_2$

# २३९

वैशंपायन उवाच ।
प्रायोपविष्टं राजानं दुर्योधनममर्षणम् ।
उवाच सान्त्वयन्राजञ्शकुनिः सौबलस्तदा ॥ १
सम्यगुक्तं हि कर्णेन तच्छ्रुतं कौरव त्वया ।
मयाहृतां श्रियं स्फीतां मोहात्समपहाय किम् ।
त्वमबुद्ध्या नृपवर प्राणानुत्स्रष्टुमिच्छसि ॥ २
अद्य चाप्यवगच्छामि न वृद्धाः सेवितास्त्वया ।
यः समुत्पतितं हर्षं दैन्यं वा न नियच्छति ।
स नश्यति श्रियं प्राप्य पात्रमाममिवाम्भसि ॥ ३
अतिभीरुमतिक्लीबं दीर्घसूत्रं प्रमादिनम् ।
व्यसनाद्विषयाक्रान्तं न भजन्ति नृपं श्रियः ॥ ४
सत्कृतस्य हि ते शोको विपरीते कथं भवेत् ।
मा कृतं शोभनं पार्थैः शोकमालम्ब्य नाशय ॥ ५
यत्र हर्षस्त्वया कार्यः सत्कर्तव्याश्च पाण्डवाः ।
तत्र शोचसि राजेन्द्र विपरीतमिदं तव ॥ ६
प्रसीद मा त्यजात्मानं तुष्टश्च सुकृतं स्मर ।
प्रयच्छ राज्यं पार्थानां यशो धर्ममवाप्नुहि ॥ ७
क्रियामेतां समाज्ञाय कृतघ्नो न भविष्यसि ।

C. 3. 15132
B. 3. 251. 9
K. 3. 252. 8

---

om. $49^{cd}$. — $^c$) $G_4$ स नो° (for नैवो°). — $^d$) $D_3$ °मानसः (for °निश्चयः).

Colophon om. in $D_3$ T. — *Major parvan:* $Ś_1$ $K_{1.2}$ $Dn_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* $K_{3.4}$ $B_{1-3}$ Dc $Dn_1$ $D_{4-6}$ $G_4$ दुर्योधनप्रायोपवेश; $B_4$ $D_2$ प्रायोपवेश; $Dn_3$ दुर्योधनवेश; $D_1$ दुर्योधनप्रायोपवेशन. — *Adhy. name:* $M_2$ कर्णहितोपदेशकथनं. — *Adhy. no.* (figures, words or both): $B_4$ 320; $Dn_1$ (marg.). $n_3$ 249; $Dn_2$ 248; $D_1$ 250; $G_2$ 241; $G_4$ M ($M_2$ *inf. lin.*) 242 ($M_2$ orig. 244). — *Śloka no.:* Dn 13; $D_1$ 33.

## 239

**1** $T_2$ om. $1^a$–$2^b$; $D_2$ $T_1$ om. the ref. — $^c$) $Ś_1$ $K_{1.2}$ $G_4$ राजा (for राजन्). — $^d$) $K_4$ सौबलिस्. $T_1$ $M_2$ तथा (for तदा).

**2** $T_2$ om. $2^{ab}$ (cf. v.l. 1). — Before 2, $K_3$ B D (except $D_{3.5}$) $G_3$ ins. शकुनिरुवाच (resp. शकुनिः). — $^a$) $K_4$ $D_3$ तु (for हि). — $^b$) $K_1$ न; $T_1$ यत् (for तत्). — $K_3$ om. (hapl.) $2^c$–$3^b$. — $^c$) S (except $G_3$) दीप्तां (for स्फीतां). — $^d$) $K_4$ स्नेहात् (for मोहात्). K ($K_3$ om.) $D_{1.2.5}$ समवहाय; $B_4$ त्वमपहाय; $D_3$ सर्वां विहाय. $K_4$ तां (for किं). $Ś_1$ $B_2$ Dc Dn $D_{1.3.4.6}$ तां मोहादप- ($Ś_1$ °त्सम-; $D_{1.3}$ °दुप)हाय किं (Dc वै). — $^{ef}$) $B_1$ Dn $D_{4.6}$ [अ]द्य नृपते; $B_{2.3}$ च नृपते; $D_3$ भूय एव (for (नृपवर). $B_3$ D (except $D_{1.5}$) अर्हसि (for इच्छसि). $T_2$ त्वं बुध्वा नृवर प्राणानुत्स्रष्टुमिह चेष्टसि.

**3** $K_3$ om. $3^{ab}$ (cf. v.l. 2). — $^a$) $B_4$ Dn $D_6$ अथ (for अद्य). Dn $D_{2.6}$ $G_1$ वा (for च). $G_1$ तु (for [अ]पि). — $^c$) Cf. 1. 74. $2^a$, $3^a$, $4^a$. $G_{1.2}$ M यत् (for यः). $T_1$ घोरं; $G_1$ कोपं; $G_{2.4}$ M क्रोधं (for हर्षं). — $^d$) Dc $Dn_3$ (by corr.) $D_5$ $G_4$ नियच्छसि. — $^e$) $T_2$ $G_1$ M नश्यते हि (for स नश्यति). — $^f$) $D_2$ आमकुंभ°; $T_1$ प्राप्तनाव°; $T_2$ $G_4$ छिद्रां नाव° (for पात्रमाम°). — After 3, $K_4$ $D_{1-3}$ ins.:

1147* यः शोकं समनुप्राप्तं न नियच्छति भारत ।
तमीदृशं नरं न श्रीः कदाचिदपि सेवते ।

**4** $^a$) $K_1$ °भीम°; $K_3$ $D_3$ °भीत° (for °भीरु°). $B_4$ S (except $G_3$) मृदुं (for अति-). — $^c$) $K_3$ विषयक्रांतं; $T_2$ $G_{2.4}$ विषमं तात. — $^d$) $Ś_1$ $K_{1.2}$ नृप; $T_2$ नरं; $G_1$ पर- (for नृपं). $K_3$ $B_{1-3}$ D प्रजाः; $B_4$ बुधाः (for श्रियः).

**5** $^a$) $T_2$ तैः (for ते). $T_2$ लोके; $G_4$ शोके (for शोको). — $^b$) $K_4$ T $G_{1.2.4}$ M विपरीतः. — $^c$) $K_3$ यत्; $D_1$ तैः (for मा). $Ś_1$ $K_{1.2}$ पूजनं; $B_2$ शोभनैः (for शोभनं). — $^d$) $D_{1.3}$ (marg. *sec. m.*) शोकमेतं ($D_1$ °कालं) विनाशय.

**6** $^c$) $T_2$ $G_2$ अत्र (for तत्र).

**7** $^a$) $G_{1.2.4}$ M न (for मा). $B_4$ प्रसीद चात्मनात्मानं; $D_3$ प्रसीद सत्यमात्मानं; $T_1$ प्रसादं न त्यजास्माकं; $T_2$ प्रसीद कृतसन्मानं. — $^b$) $K_3$ तुष्टस्व; $D_2$ सुष्टु त्वं; $G_1$ संतुष्टः (for तुष्टश्च). $B_2$ $D_3$ स्व- (for सु-). — $^c$) $T_2$ $G_{1.2}$ पांडूनां (for पार्थानां). $K_3$ $D_2$ तेषां प्रतिकृतं कृत्वा ($D_2$ कार्यं). — $^d$) $Ś_1$ राज्य° (for धर्म°).

**8** $Ś_1$ $K_1$ om. (hapl.) 8. — $^a$) $B_{2.3}$ °स्थाय; $T_1$ M °ज्ञाप्य (for °ज्ञाय). — $^b$) $K_2$ B Dn $D_{4.6}$ $G_3$ कृतज्ञस्त्वं

C. 3. 15132
B. 3. 251. 9
K. 3. 252. 9

सौभ्रात्रं पाण्डवैः कृत्वा समवस्थाप्य चैव तान् ।
पित्र्यं राज्यं प्रयच्छैषां ततः सुखमवाप्नुहि ॥ ८
शकुनेस्तु वचः श्रुत्वा दुःशासनमवेक्ष्य च ।
पादयोः पतितं वीरं विक्लवं भ्रातृसौहृदात् ॥ ९
बाहुभ्यां साधुजाताभ्यां दुःशासनमरिंदमम् ।
उत्थाप्य संपरिष्वज्य प्रीत्याजिघ्रत मूर्धनि ॥ १०
कर्णसौबलयोश्चापि संस्मृत्य वचनान्यसौ ।
निर्वेदं परमं गत्वा राजा दुर्योधनस्तदा ।
व्रीडयाभिपरीतात्मा नैराश्यमगमत्परम् ॥ ११
सुहृदां चैव तच्छ्रुत्वा समन्युरिदमब्रवीत् ।
न धर्मधनसौख्येन नैश्वर्येण न चाज्ञया ।
नैव भोगैश्च मे कार्यं मा विहन्यत गच्छत ॥ १२
निश्चितेयं मम मतिः स्थिता प्रायोपवेशने ।
गच्छध्वं नगरं सर्वे पूज्याश्च गुरवो मम ॥ १३
त एवमुक्ताः प्रत्यूचू राजानमरिमर्दनम् ।
या गतिस्तव राजेन्द्र सास्माकमपि भारत ।
कथं वा संप्रवेक्ष्यामस्त्वद्विहीनाः पुरं वयम् ॥ १४
स सुहृद्भिरमात्यैश्च भ्रातृभिः स्वजनेन च ।
बहुप्रकारमप्युक्तो निश्चयान्न व्यचाल्यत ॥ १५
दर्भप्रस्तरमास्तीर्य निश्चयाद्धृतराष्ट्रजः ।
संस्पृश्यापः शुचिर्भूत्वा भूतलं समुपाश्रितः ॥ १६
कुशचीराम्बरधरः परं नियममास्थितः ।
वाग्यतो राजशार्दूलः स स्वर्गगतिकाङ्क्षया ।
मनसोपचितिं कृत्वा निरस्य च बहिष्क्रियाः ॥ १७
अथ तं निश्चयं तस्य बुद्ध्वा दैतेयदानवाः ।
पातालवासिनो रौद्राः पूर्वं देवैर्विनिर्जिताः ॥ १८

---

(for °घ्नो न). — $^{d}$) K3 हि (for तान्). — $^{e}$) K3 Dc D1. 2. 5 प्रदायैषां (for प्रयच्छै°). — $^{f}$) K2 B Dn D4. 6 G3 अवाप्स्यसि (for °प्नुहि).

**9** Before 9, all MSS. ins. वैशं° उ° (resp. वैशं°). — $^{a}$) B1 T1 च वचः; T2 वचनं; M1 तद्वचः (for तु वचः). — $^{b}$) B1. 4 अवेक्ष्य ह; M2 अवैक्षत (for अवेक्ष्य च). — $^{c}$) Ś1 K2 T2 G1. 2 दीनं (for वीरं). — $^{d}$) B Dn D4. 6 G3 विकृतं; T G1. 2. 4 M °क्लबं (for °क्लवं).

**10** $^{a}$) B4 साधुवृत्ताभ्यां. — $^{b}$) K3 Dc D1. 3 T1 M अरिंदमः; G2. 4 अरिंदम. — $^{d}$) M2 प्रति- (for प्रीत्या). B4 जिघ्रति; T1 M1 जिघ्राय; T2 G1. 2. 4 चाघ्राय (for [अ]जिघ्रत).

**11** $^{a}$) T2 G1 [ए]व (for [अ]पि). — $^{b}$) B Dc Dn D4. 6 G3 संश्रुत्य (for संस्मृत्य). B2 [अ]थ (for [अ]सौ). — $^{c}$) T1 कृत्वा (for गत्वा). — $^{e}$) K व्रीडेन (for व्रीडया). Ś1 K1 G1 [अ]पि परीतात्मा; D2 च परीतांगः; D5 [अ]भिपरीतः सन्.

**12** $^{a}$) B2. 3 Dn D4. 6 G3 तच्छ्रुत्वा सुहृदश्चैव. — $^{c}$) G1 धर्मैर् (for धर्म-). — $^{d}$) B1 वा° (for चा°). — $^{e}$) K4 च (for [ए]व). D1 कामै° (for भोगै°). B1 transp. मे and कार्यं. — $^{f}$) K1 मा विगच्छत कश्चन; K2–4 मां विहाय च गच्छत; T1 G1 मा न विघ्नत गच्छत; T2 मा न विघ्नेन गच्छतः.

**13** $^{a}$) T2 मतिः सिद्धा (for मम मतिः). — $^{b}$) D2 स्थितः; T2 मम; G1 स्थित्वा (for स्थिता). — $^{c}$) T2 G1 सहिताः (for नगरं).

**14** $^{a}$) K1 तम्; S (except G3) इति (for त). G4 उक्ते (for उक्ताः). — $^{d}$) D5 सा गतिर्न च भारत. — $^{e}$) D1 च; T2 हि; G1 नु (for वा). — $^{f}$) Ś1 त्वयि हीनाः (for त्वद्विहीनाः). M1 transp. पुरं and वयं.

**15** D2 om. 15. — Before 15, K1. 2. 4 B Dc Dn D4–6 G2–4 ins. वैशं° उ° (resp. वैशं°). — $^{a}$) B4 सहपुत्रैर् (for स सुहृद्भिर्). — $^{c}$) K4 D1. 5 इति (for अपि). — $^{d}$) K3 च चाल्यते; B Dn D1. 4. 6 M विचाल्यते; G1 [अ]प्यचाल्यत.

**16** Ś1 K1–3 Dc D1 read $16^{ab}$ after $17^{cd}$. — $^{a}$) K4 B4 D3. 5 T2 G1. 2. 4 M दर्भसंस्तर°; B1–3 Dn D4. 6 T1 G3 दर्भास्तरण°. — $^{b}$) T1 निश्चयं (for निश्चयाद्). — $^{d}$) K3. 4 B Dn D4–6 G3 M भूतले. B2 निषसाद ह; B3 Dn D4–6 G3 समुपस्थितः; T2 समुपाहितः.

**17** $^{b}$) K4 निश्चय° (for नियम°). B4 परं नित्यमभीप्सितः. — $^{c}$) K4 D3m वाग्जितो; D1 वाक्यं ते (for वाग्यतो). Dc2 D2 राजशार्दूल. — $^{d}$) Ś1 सुदुर्गति-. K2 B2. 3 Dn D4. 6 -काम्यया. — After $17^{cd}$, Ś1 K1–3 Dc D1 read $16^{ab}$. — $^{e}$) K2 मनसोपतितं; G1 °स्सोमचितं; M1 °सोपहितं; M2 °स्सोविजितं. K4 ज्ञात्वा. — $^{f}$) K2 बहिःकृताः; B1 Dc G1. 2. 4 M बहिष्क्रियां. — After 17, S (except G3) ins.:

1148* तस्थौ प्रायोपवेशेऽथ मतिं कृत्वा सुनिश्चयाम् ।
[T2 G1 °निश्चलां.]

**18** $^{a}$) K1 निश्चितं (for निश्चयं). — $^{b}$) D1. 2 ज्ञात्वा; T1 श्रुत्वा (for बुद्ध्वा). K3 D2 दैत्येय°.

ते स्वपक्षक्षयं तं तु ज्ञात्वा दुर्योधनस्य वै ।
आह्वानाय तदा चक्रुः कर्म वैतानसंभवम् ॥ १९
बृहस्पत्युशनोक्तैश्च मन्त्रैर्मन्त्रविशारदाः ।
अथर्ववेदप्रोक्तैश्च याश्चोपनिषदि क्रियाः ।
मन्त्रजप्यसमायुक्तास्तास्तदा समवर्तयन् ॥ २०
जुह्वत्यग्नौ हविः क्षीरं मन्त्रवत्सुसमाहिताः ।
ब्राह्मणा वेदवेदाङ्गपारगाः सुदृढव्रताः ॥ २१
कर्मसिद्धौ तदा तत्र जृम्भमाणा महाद्भुता ।
कृत्या समुत्थिता राजन्किं करोमीति चाब्रवीत् ॥ २२
आहुर्दैत्याश्च तां तत्र सुप्रीतेनान्तरात्मना ।
प्रायोपविष्टं राजानं धार्तराष्ट्रमिहानय ॥ २३
तथेति च प्रतिश्रुत्य सा कृत्या प्रययौ तदा ।
निमेषादगमच्चापि यत्र राजा सुयोधनः ॥ २४
समादाय च राजानं प्रविवेश रसातलम् ।
दानवानां मुहूर्ताच्च तमानीतं न्यवेदयत् ॥ २५
तमानीतं नृपं दृष्ट्वा रात्रौ संहत्य दानवाः ।
प्रहृष्टमनसः सर्वे किंचिदुत्फुल्ललोचनाः ।
साभिमानमिदं वाक्यं दुर्योधनमथाब्रुवन् ॥ २६

C. 3. 15154
B. 3. 251. 30
K. 3. 252. 31

इति श्रीमहाभारते आरण्यकपर्वणि एकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २३९ ॥

---

**19** a) Ś1 K2 तु; B4 -षु (for स्व-). Ś1 K2 तं वै; G2. 4 M ज्ञात्वा (for तं तु). — b) Ś1 श्रुत्वा; T1 राज्ञो; G2. 4 M मतं (for ज्ञात्वा). Ś1 K1. 2 ह; T1 च (for वै). — c) T2 G1 आनयार्थं (for आह्वानाय). S (except G3) ततः (for तदा). D6m आश्वलायनतश्चक्रुः.

**20** a) Ś1 K1. 2. 4 B4 D1–3. 5 बृहस्पत्युशनःप्रोक्तैर्. — c) K1 °वेदप्रोक्ताश्च; M1 °वेदमंत्रेषु. — d) Ś1 K1. 2. 4 B1 D3. 5 याश्चैवोपनिषत्क्रियाः; K3 B3. 4 Dc D1 T G1. 2. 4 M2 याश्चोपनिषद(B4 T1 G1. 2. 4 M2 °दाः; Dc °दः; T2 °दां)क्रियाः; M1 पारगाः सुदृढव्रताः. — e) K1. 3. 4 मंत्रजाप्य°. — f) Ś1 K1. 2 B2 Dn2. n3 D4. 6 G3 संप्रवर्तयन्; K3. 4 समवर्तयत्. M2 तदा सम्यगवर्तयन्.

**21** a) D3 जुह्वंत्यग्नौ; S (except G3) जुह्वंतो°. K1–3 D1. 2. 5 ततः (for हविः). — b) D3. 5 °हितः (for °हिताः). — c) K3 D1 °वेदांगाः; B1 °वेदांगं (for °वेदाङ्ग-). — d) S (except G3) सुघृतव्रताः. — After 21, S (except G3) ins.:

1149* अध्वर्यवो दानवानां कर्म प्रावर्तयंस्ततः ।

[M2 °यंत तत् (for °यंस्ततः). T2 आसन्कर्मप्रवर्तकाः (for the posterior half).]

**22** a) K1 ततस् (for तदा). — b) Ś1 K1. 2. 4 D1. 3 G1 महाद्भुताः; K3 महद्भुतं; Dc2 T1 महाभुजाः; G4 तदद्भुतं. — After $22^{ab}$, G1 ins.:

1150* तस्मिन्यज्ञे दानवानां वर्तमाने नराधिप ।

— c) K3 घोरा (for राजन्). — d) T2 सा° (for चा°).

**23** a) K3 D2 दैत्यांश्च (for दैत्या°). K3 तान् (for तां). D1 राजन् (for तत्र). Ś1 K1. 2 आहुश्च तां तदा तत्र. — b) G1 घोररूपां भयावहां. — After $23^{ab}$, G1 ins.:

1151* कृत्यां सुतीक्ष्णदन्ताग्रां दीप्ता** [शि]रोरुहाम् ।

— K3 om. (hapl.) $23^{d}$–$25^{a}$. — d) D3 दुर्योधनमिहा°.

**24** K3 om. 24 (cf. v.l. 23). — b) Dc [अ]थ (for प्र-). B2 नृप (for तदा). — c) Ś1 K (K3 om.) Dc D1. 3. 5 [ए]व (for [अ]पि).

**25** K3 om. $25^{a}$ (cf. v.l. 23). — a) B1 T G1. 4 M सा त(B1 स)मादाय (for समादाय च). — c) T2 M मुहूर्तं (for मुहूर्ताच्). — d) T1 अप्यानीतं; T2 पुरस्तात्तं (for तमानीतं). G2 पुरतस्तं निवे°; G4 आनीतं तत्र वेद°.

**26** a) T2 G1 ततो (for नृपं). — b) T2 सर्वे (for रात्रौ). B1. 3 D (except D1–3. 5) G3 संगत्य; B2 °गम्य (for °हत्य). — M2 om. $26^{cd}$. — c) Ś1 K1 °मानसाः; K2 °मानवाः. — d) K1 °लोचनः; G4 °चेतनाः. — After $26^{cd}$, S (except G3) ins.:

1152* दृढमेनं परिष्वज्य पृष्ट्वा च कुशलं तदा ।

— f) K3 [अ]ब्रवीत् (for [अ]ब्रुवन्).

Colophon om. in D3. G1 partly broken. — *Major parvan:* Ś1 K1. 2 Dn2 T2 G2. 4 आरण्य. — *Sub-parvan:* K1 घोषयात्रा; K3 B1–3 Dc Dn1. n3 D1. 4–6 G3 दुर्योधनप्रायोपवेश (D1 °वेशन); K4 B4 D2 M2 प्रायोपवेश. — *Adhy. no.* (figures, words or both): B4 321; Dn 250 (Dn2 249); D1 251; T1 G4 M (M2 *inf. lin.*) 243 (M2 orig. 245); T2 240; G2 242. — *Śloka no.:* Dn 29.

## 240

**1** a) K3 Dn2 D1–4 भो. B4 दुर्योधन. — b) Dc G1. 4 भारतानां. — c) B1 राजा (for नित्यं). — d) D3

# २४०

C. 3. 15155
B. 3. 252. 1
K. 3. 252. 1

दानवा ऊचुः ।

भोः सुयोधन राजेन्द्र भरतानां कुलोद्वह ।
शूरैः परिवृतो नित्यं तथैव च महात्मभिः ॥ १
अकार्षीः साहसमिदं कस्मात्प्रायोपवेशनम् ।
आत्मत्यागी ह्यवाग्याति वाच्यतां चायशस्करीम् ॥ २
न हि कार्यविरुद्धेषु बह्वपायेषु कर्मसु ।
मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ ३
नियच्छैतां मतिं राजन्धर्मार्थसुखनाशिनीम् ।
यशःप्रतापधैर्यघ्नीं शत्रूणां हर्षवर्धनीम् ॥ ४
श्रूयतां च प्रभो तत्त्वं दिव्यतां चात्मनो नृप ।
निर्माणं च शरीरस्य ततो धैर्यमवाप्नुहि ॥ ५
पुरा त्वं तपसास्माभिर्लब्धो देवान्महेश्वरात् ।
पूर्वकायश्च सर्वस्ते निर्मितो वज्रसंचयैः ॥ ६
अस्त्रैरभेद्यः शस्त्रैश्चाप्यधःकायश्च तेऽनघ ।
कृतः पुष्पमयो देव्या रूपतः स्त्रीमनोहरः ॥ ७
एवमीश्वरसंयुक्तस्तव देहो नृपोत्तम ।
देव्या च राजशार्दूल दिव्यस्त्वं हि न मानुषः ॥ ८
क्षत्रियाश्च महावीर्या भगदत्तपुरोगमाः ।
दिव्यास्त्रविदुषः शूराः क्षपयिष्यन्ति ते रिपून् ॥ ९
तदलं ते विषादेन भयं तव न विद्यते ।
साह्यार्थं च हि ते वीराः संभूता भुवि दानवाः ॥ १०
भीष्मद्रोणकृपादींश्च प्रवेक्ष्यन्त्यपरेऽसुराः ।

---

सु- (for च).

**2** a) T2 G1 मा कार्षीः. — b) K3 कथं; G1 यस्मात् (for कस्मात्). — c) K4 B D G3. 4 ह्यधो याति; T1 ह्यवगति; T2 G1 समा(G1 ह्यवा)प्नोति (for ह्यवाग्याति). — d) D2 वा° (for चा°). T2 पापानां चाप्यथो गतिं; G1 पाप्मानमयशस्करं.

**3** =(var.) 3. 2. 16; =(var.) Rām. (ed. N. S. P.) 5. 51. 18. — a) K4 कार्यविरोधेषु; B1 कार्यानिरुद्धेषु (sic); D1 ज्ञानविरुद्धेषु. — b) B Dc Dn D4. 6 G3 बहुपापेषु (B4 Dc1 बहूपायेषु).

**4** a) B2. 3 (m as in text) Dn2 [ए]नां; S (except G3 M1) तां (for [ए]तां). Ś1 K1. 2 महाराज (for मतिं राजन्). — b) K3 °सुयशस्विनीं; B D2 T2 °सुखनाशनीं; T1 °कर्शिनीं. — c) B1. 2. 4 Dn D4. 6 G3 °वीर्यघ्नीं; T2 °धर्मघ्नीं. — d) Ś1 B3 Dc2 Dn2 D1. 5 T2 G1 M2 °वर्धिनीं.

**5** a) K2 B3. 4 Dn D4. 6 G3 तु (for च). B4 प्रभो वाक्यं; D2 परं तत्वं; T G2. 4 प्रभूतिं (T1 °तं) च; M2 प्रभूतत्वं (for प्रभो तत्त्वं). G1 श्रूयतां भवभूतिं च. — b) M2 om. च. T2 G1 [ऽ]नघ (for नृप). — G1 reads 5cd after 9ab. — d) T1 धर्मम् (for धैर्यम्).

**6** a) Dc त्वं तपसो°; T2 द्वैतवने° (for त्वं तपसा°). — b) K3 B2–4 D (except D2. 3) G3 राजन् (for देवान्). — c) S transp. सर्वः and ते. B2–4 Dn D4 पूर्वं° (for सर्वं°).

**7** a) T1 विभेद्यः. B1 S (except G1. 3) वा (for च). — b) T1 न च; G2 ह्यधः- (for [अ]प्यधः-). B1 G2 कार्यः (for -कायः). K1 तव; K3. 4 Dc D2. 3 T1 G2. 4 M तु ते (for च ते). S (except G3) नृप (for ऽनघ). — c) Ś1 देव; B4 दैव्या; T2 G1 दिव्यो (for देव्या). — d) Dc ते (for स्त्री-).

**8** a) G1 °संयुक्त्या. — b) Ś1 K1. 2 नरेश्वर (for नृपो°). — d) B4 देव° (for दिव्य°). Ś1 K1. 2. 4 D2. 3 न हि (by transp.); D5 भुवि. D1 मानवः (for मानुषः). T1 दिव्यं रूपं हि मानुषं.

**9** After 9ab, G1 reads 5cd; while T2 ins.:
1153* यैः सुरापि घृणां त्यक्त्वा योत्स्यन्ते सह वैरिभिः।
— T2 om. 9c–11d. — c) Ś1 K2 D2. 3 °वेदिनः (K2 °नं); K1 दिव्यास्त्रे विदितः; K3 Dc D1 °निपुणाः (for °विदुषः). — d) B क्षययिष्यंति.

**10** T2 om. 10 (cf. v.l. 9). — a) K3 परितापेन (for ते विषादेन). — b) Dc तत्र (for तव). K4 T1 G2. 4 M न भयं तव विद्यते (T1 by transp. विद्यते तव). — c) K B D G3 सहायार्थं (D3 °र्थे) च ते वीराः (D5 साह्यार्थं चेह ते वीराः); T1 सर्वमर्थं च वीरास्ते; G2. 4 M2 साहाय्यार्थं हि ते वीर; M1 साह्यार्थं चैव ते वीर. — d) M दिवि (for भुवि). B4 मानवाः (for दानवाः).

**11** T2 om. 11 (cf. v.l. 9). — b) K3 [अ]प्यवेक्ष्यंति (for प्रवेक्ष्यन्ति). T1 G1 परे (for ऽपरे). — c) T1 वैरा°

यैराविष्टा घृणां त्यक्त्वा योत्स्यन्ते तव वैरिभिः ॥ ११
नैव पुत्रान्न च भ्रातॄन्न पितॄन्न च बान्धवान् ।
नैव शिष्यान्न च ज्ञातीन्न बालान्स्थविरान्न च ॥ १२
युधि संप्रहरिष्यन्तो मोक्ष्यन्ति कुरुसत्तम ।
निःस्नेहा दानवाविष्टाः समाक्रान्तेऽन्तरात्मनि ॥ १३
प्रहरिष्यन्ति बन्धुभ्यः स्नेहमुत्सृज्य दूरतः ।
हृष्टाः पुरुषशार्दूलाः कलुषीकृतमानसाः ।
अविज्ञानविमूढाश्च दैवाच्च विधिनिर्मितात् ॥ १४
व्याभाषमाणाश्चान्योन्यं न मे जीवन्विमोक्ष्यसे ।
सर्वशस्त्रास्त्रमोक्षेण पौरुषे समवस्थिताः ।
श्लाघमानाः कुरुश्रेष्ठ करिष्यन्ति जनक्षयम् ॥ १५
तेऽपि शक्त्या महात्मानः प्रतियोत्स्यन्ति पाण्डवाः ।
वधं चैषां करिष्यन्ति दैवयुक्ता महाबलाः ॥ १६
दैत्यरक्षोगणाश्चापि संभूताः क्षत्रयोनिषु ।
योत्स्यन्ति युधि विक्रम्य शत्रुभिस्तव पार्थिव ।
गदाभिर्मुसलैः खड्गैः शस्त्रैरुच्चावचैस्तथा ॥ १७
यच्च तेऽन्तर्गतं वीर भयमर्जुनसंभवम् ।
तत्रापि विहितोऽस्माभिर्वधोपायोऽर्जुनस्य वै ॥ १८
हतस्य नरकस्यात्मा कर्णमूर्तिमुपाश्रितः ।
तद्वैरं संस्मरन्वीर योत्स्यते केशवार्जुनौ ॥ १९
स ते विक्रमशौण्डीरो रणे पार्थं विजेष्यति ।
कर्णः प्रहरतां श्रेष्ठः सर्वांश्चारीन्महारथः ॥ २०

C. 3. 15176
B. 3. 252. 21
K. 3. 253. 21

---

(for यैरा°). Ś1 K1. 2 कृपां (for घृणां). Dc त्यक्ता (for त्यक्त्वा). — $^{d}$) Ś1 K1. 2 तव शत्रुभिः; T1 वैरिभिः सह (for °तव वैरिभिः).

**12** $^{a}$) K2 वै; B2 च; D1 [इ]ष्टान् (for [ए]व). T2 नैव भ्रातॄन्न च सुतान्. — $^{b}$) K4 पुत्रान् (for पितॄन्). D3 पितॄंश्चैव च बांधवान्. — $^{c}$) Ś1 K2 न वै (for नैव). S (except G3) न शिष्यांश्चैव च ज्ञातीन्. — $^{d}$) D1 बाल- (for बालान्).

**13** $^{a}$) B1 D5 युद्धे (for युधि). — $^{b}$) B3 D3 मोक्ष्यंते; B4 D5 T1 योत्स्यंते (for मोक्ष्यन्ति). Ś1 K2 Dc D2. 5 T2 कुरुसत्तमाः; K1 °मः. — $^{d}$) K1 Dc पराक्रांते.

**14** $^{a}$) B2. 3 Dn D4. 6 G3 विवशाः (for बन्धुभ्यः). — $^{b}$) K4 भारत (for दूरतः). — $^{c}$) D2 दुष्टाः (for हृष्टाः). — After 14$^{cd}$, D1 reads 16$^{c}$–17$^{d}$. — $^{e}$) Ś1 K1 अविज्ञात(K1 °तं)विमूढाश्च; T1 अनभिज्ञाश्च मूढाश्च; T2 G1 अज्ञान- (G1 °त)मूला देवाश्च; G2. 4 अनभिज्ञातमूलाश्च (G2 °च); M अनभिज्ञा विमूढाश्च.

**15** $^{a}$) Ś1 K1. 2 D5 आभाष(D5 °ष्य)माणा°; B1 Dn2 D4. 6 G3 व्याभाष्य°. — $^{b}$) K1–3 D2 विमोक्ष्य(K3 D2 °क्ष)सि; Dc विमोक्षसे; T1 प्रमोक्ष्यसे; G4 न मो°. T2 G2 न मे जीवितुमर्हथ; G1 न मे जीवितुमर्हसि; M2 न जीवन्न च मोक्ष्यसे. — $^{c}$) B2–4 Dn सर्वे (for सर्व-). Ś1 सर्वे शस्त्रास्त्रमोक्षे च; K1–3 Dc सर्वशास्त्रास्त्रमोक्षेण (K1 °क्षेषु; K2 °क्षे च); D3 सर्वशस्त्रप्रमोक्षेण; T1 G1. 2 सर्वे शस्त्रास्त्रमोक्षैश्च; T2 सर्वशस्त्रास्त्रमोक्षे च. — $^{d}$) K4 समुप°; M1 पर्यव° (for समव°). — $^{e}$) D1. 5 श्लाघ्यमानाः; T2 धार्यमाणाः. Ś1 K1. 3. 4 कुरुश्रेष्ठाः.

**16** $^{a}$) T2 G1 च (for ऽपि). B1–3 Dn D4. 6 G3 पंच (for शक्त्या). — $^{b}$) T2 प्रयोत्स्यंतीह; G2 °योक्ष्यंति (for °योत्स्यन्ति). D1 G1 पांडवान्. — D1 reads 16$^{c}$–17$^{d}$ after 14$^{cd}$. — $^{c}$) Ś1 K1. 2. 4 Dc D1–3 क्षयं (for वधं). Ś1 K1. 2 तेषां (for चैषां). — $^{d}$) K4 D2 T2 G4 देव°; M2 वैर° (for दैव°).

**17** For D1 cf. v.l. 14. — $^{a}$) Dc दैत्या (for दैत्य-). B Dn D4–6 T G1. 3 M2 [ए]व (for [अ]पि). — $^{b}$) Ś1 K1. 2 प्रविष्टाः (for संभूताः). B1 संहता ब्रह्मयोधिषु. — $^{c}$) Dc2 T2 विधि; T1 तव (for युधि). — $^{d}$) T1 G1 सह (for तव). — $^{e}$) K3. 4 Dc2 D1–3. 6 मुशलैः; B मुषलैः. B2. 4 Dn D4. 6 G3 शूलैः; B3 शूरैः (for खड्गैः). — $^{f}$) Dc T2 G1 अस्त्रै° (for शस्त्रै°). K1 तदा; K3. 4 D1 T2 G1 अपि (for तथा). — After 17, S (except G3) ins.:

1154* प्रहरिष्यन्ति ते वीरास्तवारिषु महाबलाः ।

**18** $^{a}$) G1 हृद्गतं (for ऽन्तर्गतं). — $^{b}$) T2 फल्गुन° (for अर्जुन°). — $^{c}$) G1 [अ]भि- (for [अ]पि). — $^{d}$) D1 विध्युपायो (for वधो°).

**19** $^{b}$) G1 कर्णमूर्तिर्. K3 Dn3 (before corr.) D4. 6 अपाश्रितः. — $^{c}$) D3 वीरं (for वैरं). K1 संस्मृतं (for संस्मरन्). T1 G1. 2. 4 M वीरो (for वीर). T2 तत्तद्वैरं स्मरन्वीर. — $^{d}$) D1 [ऽ]र्जुनकेशवौ.

**20** $^{a}$) Ś1 K1. 2 B1. 4 Dc1 °शौटीरो; K3 Dn1 विक्रम्य शौंडीरो; B2. 3 विक्रमसौटीरो; Dc2 Dn2 °शौडीरो. — $^{b}$) T2 G1. 2. 4 विजेष्यते. — K3 om. (hapl.) 20$^{c}$–21$^{d}$. — $^{d}$) G4 सर्वधारीन् (for सर्वांश्चारीन्). B2 °यशाः; D3 G1 °रथाः; D5 °मतिः; T2 M1 °रथान् (for °रथः).

C. 3. 15176
B. 3. 252. 22
K. 3. 253. 22

ज्ञात्वैतच्छद्मना वज्री रक्षार्थं सव्यसाचिनः ।
कुण्डले कवचं चैव कर्णस्यापहरिष्यति ॥ २१
तस्मादस्माभिरप्यत्र दैत्याः शतसहस्रशः ।
नियुक्ता राक्षसाश्चैव ये ते संशप्तका इति ।
प्रख्यातास्तेऽर्जुनं वीरं निहनिष्यन्ति मा शुचः ॥ २२
असपत्ना त्वया हीयं भोक्तव्या वसुधा नृप ।
मा विषादं नयस्वास्मान्नैतत्त्वय्युपपद्यते ।
विनष्टे त्वयि चास्माकं पक्षो हीयेत कौरव ॥ २३
गच्छ वीर न ते बुद्धिरन्या कार्या कथंचन ।
त्वमस्माकं गतिर्नित्यं देवतानां च पाण्डवाः ॥ २४

वैशंपायन उवाच ।

एवमुक्त्वा परिष्वज्य दैत्यास्तं राजकुञ्जरम् ।
समाश्वास्य च दुर्धर्षं पुत्रवद्दानवर्षभाः ॥ २५
स्थिरां कृत्वा बुद्धिमस्य प्रियाण्युक्त्वा च भारत ।
गम्यतामित्यनुज्ञाय जयमाप्नुहि चेत्यथ ॥ २६
तैर्विसृष्टं महाबाहुं कृत्या सैवानयत्पुनः ।
तमेव देशं यत्रासौ तदा प्रायमुपाविशत् ॥ २७
प्रतिनिक्षिप्य तं वीरं कृत्या समभिपूज्य च ।
अनुज्ञाता च राज्ञा सा तत्रैवान्तरधीयत ॥ २८
गतायामथ तस्यां तु राजा दुर्योधनस्तदा ।
स्वप्नभूतमिदं सर्वमचिन्तयत भारत ।
विजेष्यामि रणे पाण्डूनिति तस्याभवन्मतिः ॥ २९
कर्णं संशप्तकांश्चैव पार्थस्यामित्रघातिनः ।
अमन्यत वधे युक्तान्समर्थांश्च सुयोधनः ॥ ३०

---

**21** $K_3$ om. 21 (cf. v.l. 20). — $^a$) $B_4$ तच् (for [ए]तच्). — $^b$) $G_4$ रक्षार्थी. — $^c$) Ś$_1$ $K_{1.2}$ [अ]पि (for [ए]व). — $^d$) $B_1$ $D_1$ [अ]पि (for [अ]प-).

**22** $^b$) $T_2$ $G_1$ चापि (for शत-). — $^d$) $T_2$ ते वै; $G_1$ एते (for ये ते). $K_{2-4}$ $B_{2.4}$ D (except $D_3$) $G_3$ संसप्तका; $T_1$ सवांतका. $D_1$ इव (for इति). — $^e$) $K_{1.3}$ $G_1$ वीर. — $^f$) $Dn_3$ $D_6$ हनिष्यंति च; $T_1$ $G_{1.4}$ M युधि हिंस्यं($M_2$ °सं)ति; $T_2$ $G_2$ युधि योत्स्यंति (for निहनि°).

**23** $^a$) $B_4$ असपत्नी. $T_2$ $G_1$ ह्येषा; $G_{2.4}$ वीर (for हीयं). — $^b$) $Dn_2$ $D_1$ $G_1$ वसुधाधिप. — $^c$) $B_4$ न (for मा). $D_1$ $T_2$ विषादे; $G_{2.4}$ विषादो. $K_1$ नयस्वास्य; $K_3$ $B_2$ Dc $D_{1.2.5}$ नयात्मानं; Dn $D_{4.6}$ गमस्तस्मान्; $D_3$ $T_1$ नयस्वात्मा; $G_{2.4}$ त्वया कार्यो; $M_2$ नयस्यास्था (sic) (for नयस्वास्मान्). — $^d$) $T_2$ मनस्वस्थो भवानघ. — $^f$) $K_1$ मोक्षो (for पक्षो). $T_1$ सर्वदा; $M_2$ पार्थिव (for कौरव).

**24** $^c$) $K_1$ रतिर् (for गतिर्). — $^d$) $D_5$ दैवतानां. Ś$_1$ $K_{1-3}$ $D_{2.3.5}$ तु (for च). — After 24, $D_1$ ins. an addl. colophon (*adhy. no.* : 252).

**25** $^a$) $B_1$ परित्यज्य. — $^b$) $T_2$ $G_1$ ते (for तं). Ś$_1$ $K_{1.2}$ °पुंगवं (for °कुञ्जरम्). — $^c$) Ś$_1$ $K_1$ Dc $D_{1.3.5}$ दुर्धर्षाः ($K_1$ °र्षः).

**26** $^a$) Ś$_1$ स्थितां (for स्थिरां). — $B_2$ om. (hapl.) $26^c$–$29^d$. — $^c$) $T_2$ [अ]नुज्ञाप्य (for °ज्ञाय). — $^d$) $B_1$ शिवम् (for जयम्). Ś$_1$ प्राप्नुहि; $D_1$ प्राप्स्यसि (for आप्नुहि). $D_1$ मा व्यथः (for चेत्यथ).

**27** $B_2$ om. 27 (cf. v.l. 26). — $^b$) $T_1$ च (for सा). $D_1$ प्रभुः (for पुनः). — $^c$) $G_2$ यत्र; $G_4$ तत्र (for देशं). $G_2$ तत्रा° (for यत्रा°).

**28** $B_2$ om. 28 (cf. v.l. 26). — $^a$) $T_2$ $G_1$ प्रतिवेश्य च (for °निक्षिप्य). — $^c$) Ś$_1$ $K_{1.2.4}$ [अ]थ; $Dc_2$ तद्- (for च). $Dc_2$ -आज्ञा; $T_1$ कृत्या (for राज्ञा). $B_4$ $G_1$ सा राज्ञा (by transp.); $T_2$ [ए]व राज्ञा. Ś$_1$ $K_{1.2}$ तु; $K_3$ Dc $D_{3.5}$ [अ]थ; $K_4$ $D_1$ च (for सा). — $^d$) =1. 92. $16^b$; 93. $43^b$; 94. $27^d$; etc., etc. $B_3$ $Dc_1$ Dn $D_{4.6}$ तथै° (for तत्रै°).

**29** $B_2$ om. $29^{abcd}$ (cf. v.l. 26). — $^a$) $T_2$ च (for तु). — $^c$) Dc अनुभूतम्; $G_1$ यत्तु भूतम् (for स्वप्न°). $B_1$ इमं; Dc तथा (for इदं). — $^d$) $G_1$ चिंतयामास (for अचिन्तयत). — After $29^{cd}$, S (except $G_3$) ins.:

1155* संस्मृत्य तानि वाक्यानि दानवोक्तानि दुर्मतिः ।

[$T_2$ सर्वाणि (for वाक्यानि). $T_1$ $M_1$ श्रुत्वा च ($M_1$ संस्मृत्य) दानवोक्तानि तानि वाक्यानि दुर्मतिः.]

— $^e$) Ś$_1$ $K_{1.2.4}$ $D_{2.3.5}$ विजेष्येहं; $B_2$ विजेष्यसे. — $^f$) B Dn $D_{4.6}$ $G_{2.3}$ चास्य (for तस्य). Ś$_1$ $K_2$ मनः (for मतिः).

**30** $^a$) Dc $T_1$ $M_1$ कर्ण- (for कर्णं). $K_3$ $B_4$ D (except Dn $D_6$) संसप्त°. — $^b$) $D_1$ [अ]पि प्रघातिनः; $D_2$ [अ]मित्रपातिनः. — $^c$) Ś$_1$ $K_{1.2}$ रणे (for वधे). — $^d$) $G_1$ पार्थिवान् (for समर्थान्).

**31** $^a$) $T_2$ वृथा; $G_{1.2}$ वृधा (for दृढा). $T_1$ ह्येषा (for तस्य). — $^c$) Dc विनिर्जित्य. — $B_2$ om. $31^d$–$34^c$. — $^d$) Ś$_1$ $K_{1.2}$ पुरुषर्षभ (for भरत°).

एवमाशा दृढा तस्य धार्तराष्ट्रस्य दुर्मतेः ।
विनिर्जये पाण्डवानामभवद्भरतर्षभ ॥ ३१
कर्णोऽप्याविष्टचित्तात्मा नरकस्यान्तरात्मना ।
अर्जुनस्य वधे क्रूरामकरोत्स मतिं तदा ॥ ३२
संशप्तकाश्च ते वीरा राक्षसाविष्टचेतसः ।
रजस्तमोभ्यामाक्रान्ताः फल्गुनस्य वधैषिणः ॥ ३३
भीष्मद्रोणकृपाद्याश्च दानवाक्रान्तचेतसः ।
न तथा पाण्डुपुत्राणां स्नेहवन्तो विशां पते ।
न चाचचक्षे कस्मैचिदेतद्राजा सुयोधनः ॥ ३४
दुर्योधनं निशान्ते च कर्णो वैकर्तनोऽब्रवीत् ।
स्मयन्निवाञ्जलिं कृत्वा पार्थिवं हेतुमद्वचः ॥ ३५
न मृतो जयते शत्रूञ्जीवन्भद्राणि पश्यति ।
मृतस्य भद्राणि कुतः कौरवेय कुतो जयः ।
न कालोऽद्य विषादस्य भयस्य मरणस्य वा ॥ ३६
परिष्वज्याब्रवीच्चैनं भुजाभ्यां स महाभुजः ।
उत्तिष्ठ राजन्किं शेषे कस्माच्छोचसि शत्रुहन् ।
शत्रून्प्रताप्य वीर्येण स कथं मर्तुमिच्छसि ॥ ३७
अथ वा ते भयं जातं दृष्ट्वार्जुनपराक्रमम् ।
सत्यं ते प्रतिजानामि वधिष्यामि रणेऽर्जुनम् ॥ ३८
गते त्रयोदशे वर्षे सत्येनायुधमालभे ।
आनयिष्याम्यहं पार्थान्वशं तव जनाधिप ॥ ३९
एवमुक्तस्तु कर्णेन दैत्यानां वचनात्तथा ।
प्रणिपातेन चान्येषामुदतिष्ठत्सुयोधनः ।
दैत्यानां तद्वचः श्रुत्वा हृदि कृत्वा स्थिरां मतिम् ॥ ४०

C. 3. 15199
B. 3. 252. 45
K. 3. 253. 45

---

**32** $B_2$ om. 32 (cf. v.l. 31). — $^{a}$) $D_1$ $M_2$ कर्णो ऽव्या($D_1$ -भ्या)विष्ट°; $B_3$ $D_3$ कर्णोप्याविष्टचितात्मा; $Dc_1$ $G_1$ कर्णोप्यवि($G_1$ °दु)ष्ट°; $D_4$ कर्णोप्यादिष्ट°. — $^{c}$) $T_1$ वधं कर्तुम् (for वधे क्रूराम्). — $^{d}$) $K_3$ $D_1$ अकरोत्स्वां; $T_2$ अतनोत्स (for अकरोत्स). $T_1$ स्मृतिं; $T_2$ समां; $G_1$ सदा (for मतिं). $T_2$ $G_1$ मतिं (for तदा). B Dn $D_{4.6}$ $G_3$ करोति स्म तदा मतिं.

**33** $B_2$ om. 33 (cf. v.l. 31). — $^{a}$) $Ś_1$ संशप्तकान्; $K_{3.4}$ $B_{3.4}$ Dc $D_{1-3}$ संसप्तकाः. $B_1$ तदा; $K_3$ च ये (for च ते). $K_1$ वीर (for वीरा). S (except $G_3$) संशप्तका बभूवुश्च. — $^{c}$) $D_3$ आविष्टाः; $D_{4.6}$ $G_3$ विक्रांताः (for आक्रान्ताः). — $^{d}$) N ($B_2$ om.) $G_{2.3}$ $M_2$ फाल्गुनस्य ($Ś_1$ फल्गुण°; $D_{4.5}$ फाल्गुण°).

**34** $B_2$ om. 34$^{abc}$ (cf. v.l. 31). — $^{a}$) $D_5$ °कृपाचार्या. — $^{b}$) $Ś_1$ दानवाविष्टचेतसः (cf. 33$^{b}$). — $^{c}$) $Ś_1$ तत् (for न). $M_2$ °पुत्रेषु (for °पुत्राणां). — $^{d}$) $T_2$ ते भवंति (for स्नेह°). $G_{2.4}$ M [ऽ]भवंस्तदा (for विशां पते). — $^{e}$) $B_4$ चाचक्षीत; $Dn_3$ चाचक्षेत; $T_2$ चाचष्टे च (for चाचचक्षे). $G_1$ कस्मिंश्चिद्. — $^{f}$) $K_3$ Dc $D_1$ एवं (for एतद्). $B_4$ transp. एतत् and राजा. — After 34, S (except $G_3$) ins.:

1156* कृत्ययानार्यकथितं यदस्य निशि दानवैः ।

**35** $^{b}$) S (except $G_3$) कर्णो वचनमब्रवीत्. — $^{c}$) $G_1$ हस° (for स्मय°). — $^{d}$) $B_1$ सुमहद् (for हेतुमद्). $D_1$ पार्थिवेदं तु मद्वचः.

**36** $B_2$ om. 36$^{b}$–38$^{c}$. — $^{b}$) $B_4$ जीवं तत्रापि पश्यति. — $^{e}$) $T_1$ $G_{2.4}$ M [ऽ]यं (for ऽद्य). — $^{f}$) $T_1$ तत्राद्य (for भयस्य). $Ś_1$ $K_{1.2}$ transp. भयस्य and मरणस्य. $K_{1.2}$ वै; $D_3$ $T_2$ च (for वा).

**37** $B_2$ om. 37 (cf. v.l. 36). — $^{a}$) $K_4$ Dc एवं; $T_1$ वाक्यं; $T_2$ $G_{1.2.4}$ M एनं (for चैनं). — $^{b}$) $T_1$ °बलः; Dc °श्रमः; $G_4$ °भुजं (for °भुजः). — $^{d}$) $B_4$ कस्माच्छोचितुमर्हसि. — $^{e}$) $Ś_1$ प्रतप्य; $D_5$ संताप्य (for प्र°). — $^{f}$) $T_2$ सकलं; $G_1$ कथं त्वं (for स कथं). $Ś_1$ $K_1$ $B_1$ $Dc_1$ $D_{1-3}$ T कर्तुम्; $K_2$ $B_3$ Dn $D_{4-6}$ मृत्युम् (for मर्तुम्). $B_3$ S (except $G_{1.3}$) अर्हसि (for इच्छसि).

**38** $B_2$ om. 38$^{abc}$ (cf. v.l. 36). — $^{a}$) $Ś_1$ $K_{1.2}$ भये जाते (for भयं जातं). — $^{b}$) $G_{2.4}$ अर्जुनस्य पराक्रमं. — After 38$^{ab}$, $D_5$ reads 39$^{cd}$.

**39** $^{a}$) S (except $G_3$) इतस् (for गते). $T_1$ तृतीयके (for त्रयो°). — $^{b}$) $T_1$ शस्त्रेणा° (for सत्येना°). — $D_5$ reads 39$^{cd}$ after 38$^{ab}$. — $^{cd}$) $D_1$ $T_2$ $G_1$ पार्थं (for पार्थान्). $B_1$ आनयिष्ये रणे पार्थान्; $D_5$ आनयिष्यामि पार्थं तु (for $^{c}$). $Ś_1$ $K_{1.2}$ वशे (for वशं). $Ś_1$ $K_{1.2}$ $G_1$ नराधिप; $K_3$ Dc $D_1$ जनेश्वर (for जना°). $K_4$ $D_3$ करिष्यामि वधं राजन्पार्थस्यामिततेजसः.

**40** $^{b}$) $B_{2.4}$ Dc वचनात्तदा; $D_5$ वचनेन वा; S (except $T_1$ $G_{1.3}$) वचसा तदा. — $^{c}$) $D_1$ प्रणिधानेन. B Dn $D_{4.6}$ $G_3$ चाप्येषाम्. — $^{d}$) $Ś_1$ $K_{1.2.4}$ $D_{2.3.5}$ समुत्तस्थौ (for उदतिष्ठत्). — $^{e}$) $K_3$ $D_1$ तु (for तद्). — $^{f}$) $K_4$ transp. स्थिरां and मतिं.

**41** $^{a}$) $K_1$ मनुजशार्दूल; $B_1$ [ऽ]थ नरशार्दूलो; $T_2$ वै राज°.

ततो मनुजशार्दूलो योजयामास वाहिनीम् ।
रथनागाश्वकलिलां पदातिजनसंकुलाम् ॥ ४१
गङ्गौघप्रतिमा राजन्प्रयाता सा महाचमूः ।
श्वेतच्छत्रैः पताकाभिश्चामरैश्च सुपाण्डुरैः ॥ ४२
रथैर्नागैः पदातैश्च शुशुभेऽतीव संकुला ।
व्यपेताभ्रघने काले द्यौरिवाव्यक्तशारदी ॥ ४३
जयाशीर्भिर्द्विजेन्द्रैस्तु स्तूयमानोऽधिराजवत् ।
गृह्णन्नञ्जलिमालाश्च धार्तराष्ट्रो जनाधिपः ॥ ४४
सुयोधनो ययावग्रे श्रिया परमया ज्वलन् ।
कर्णेन सार्धं राजेन्द्र सौबलेन च देविना ॥ ४५
दुःशासनादयश्चास्य भ्रातरः सर्व एव ते ।
भूरिश्रवाः सोमदत्तो महाराजश्च बाह्लिकः ॥ ४६
रथैर्नानाविधाकारैर्हयैर्गजवरैस्तथा ।
प्रयान्तं नृपसिंहं तमनुजग्मुः कुरूद्वहाः ।
कालेनाल्पेन राजंस्ते विविशुः स्वपुरं तदा ॥ ४७

इति श्रीमहाभारते आरण्यकपर्वणि चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥

---

— c) K4 Dn3 D3 °कलिलाः. — B2 om. 41d–42a. — d) Ś1 K1. 2. 4 D2. 3 °ध्वजसंकुलां; D5 पत्तिध्वजसमाकुलां.

**42** B2 om. 42a (cf. v.l. 41); D6 om. 42a–43b. — a) K3 गांगोघ-. B1 T2 G1. 2 -प्रतिमां. T1 G2. 4 चास्य; T2 G1 वीर; M1 सा तु; M2 साद्य (for राजन्). — b) B4 transp. प्रयाता and सा. T1 शुशुभे स महा°; T2 G1. 2 प्रयाणे (T2 प्रायेण) स महाचमूं; G4 M प्रयाणे शुशुभे चमूः. — c) D3 °पत्रैः (for °च्छत्रैः). T पताकैश्च (for °काभिश्च). — d) K1 T1 सपांडु(T1 °ड)रैः; K4 B4 Dc D1–3 [अ]पि पांडुरैः; T2 G1. 4 M सुपांडरैः.

**43** D6 om. 43ab (cf. v.l. 42). — a) Ś1 K1. 2 च पादातैः; B1 पताकैश्च (for पदातैश्च). — b) D1 वीर- (for ऽतीव). K2 शोभना (for संकुला). T1 प्रयाणे सा चमू बभौ; T2 G1. 2. 4 M प्रयाणे सा बभौ (G4 शुशुभे; M प्रबभौ) चमूः. — d) T1 °वासक्तशारदी; T2 °वासीत्सु°; G1 °वाव्यक्तशर्वरी; G4 °वासीत्तु शारदी. — After 43, S (except G3) ins.:

1157* हंसपङ्क्तिसमाकीर्णा भ्रमत्सारसशोभिता ।

**44** a) K4 D2. 3 द्विजाग्र्याणां; D1 द्विजैश्चैव; T2 G2. 4 द्विजेंद्राणां (for द्विजेन्द्रैस्तु). K1 B Dn D4. 6 स; K3 Dc D5 T1 G1 च (for तु). — b) B1 व्यराजत; B4 Dc D5 विराजते (for ऽधि°). — c) K1 °लिमानश्च; Dc °लिमादाय; T2 °लयश्चापि (for °लिमालाश्च). — d) Ś1 G1 जनाधिप; K1 धनाधिपः.

**45** a) D6 दुर्योधनो. D3 यथा चाग्रे; D6 यथा मार्गे (for यया°). — b) B2 T2 युतः (for ज्वलन्). — d) G2. 4 सु- (for च).

**46** After 46ab, M ins.:

1158* प्रत्युद्गताश्च कुरुभिर्नागरैर्ब्राह्मणैरपि ।

— c) K1. 2 भूरिश्रवः. — d) K1 महाराजा च.

**47** c) Ś1 K3. 4 D1–3 प्रयातं. B2 राज°; T2 G1. 2. 4 नर° (for नृप°). K3 तु (for तं). — d) D1 अभिजग्मुः. K1. 4 D2. 3 G1 कुरूद्वहं (K1 °हः; G1 °ह). — After 47cd, S (except G3) ins.:

1159* प्रहृष्टमनसः सर्वे दुर्योधनपुरोगमाः ।

— e) B4 [अ]न्येन (for [अ]ल्पेन). B Dn D4. 6 G3 राजेंद्र; T G1. 2. 4 M ते राजन् (for राजंस्ते). — f) B Dn D4. 6 G3 transp. विविशुः and स्वपुरं.

Colophon. — *Major parvan:* Ś1 K2 Dn2 G2. 4 आरण्य. — *Sub-parvan:* Ś1 K1. 2 घोषयात्रा (followed by समाप्त); K3. 4 B D G3 दुर्योधन(K4 B4 Dc om. दुर्योधन)प्रायोपवेश (followed by समाप्त in K3. 4 B1 D G3). — *Adhy. name:* M2 प्रायोपवेशननिवर्तनं. — *Adhy. no.* (figures, words or both): B4 322; Dn 251 (Dn2 250); D1 253; T1 G4 M (M2 *inf. lin.*) 244 (M2 orig. 246); T2 G1 241; G2 243. — *Śloka no.:* Dn 52; D1 27.

## 241

**1** a) Ś1 K Dc D1–3. 5 T G1 वर्तमानेषु; G2. 4 M एवं गतेषु. — b) T1 वने ब्रह्मन्; T2 G1. 2. 4 M पांडवेषु (for वने तस्मिन्). — d) K4 B Dn D4. 6 T2 G2. 4 अकुर्वत. K1. 2. 4 B Dn D2. 4–6 G4 सत्तमाः (B2 वै द्विज).

**2** a) B D (except D1–3. 5) G1–3 चैव (for चापि). — b) B2 S (except G3) शकुनिश्चापि सौबलः. — c) Ś1 K1. 4 T2 G2. 4 M भीष्मो द्रोणः (Ś1 °मो द्रोण-; G4 °ष्म-द्रौणिः) कृपश्चैव.

**3** a) B2 गतेषु तेषु पार्थेषु. — b) Ś1 K1. 2 B1 नि(B1

# २४१

**जनमेजय उवाच ।**

वसमानेषु पार्थेषु वने तस्मिन्महात्मसु ।
धार्तराष्ट्रा महेष्वासाः किमकुर्वन्त सत्तम ॥ १
कर्णो वैकर्तनश्चापि शकुनिश्च महाबलः ।
भीष्मद्रोणकृपाश्चैव तन्मे शंसितुमर्हसि ॥ २

**वैशंपायन उवाच ।**

एवं गतेषु पार्थेषु विसृष्टे च सुयोधने ।
आगते हास्तिनपुरं मोक्षिते पाण्डुनन्दनैः ।
भीष्मोऽब्रवीन्महाराज धार्तराष्ट्रमिदं वचः ॥ ३
उक्तं तात मया पूर्वं गच्छतस्ते तपोवनम् ।
गमनं मे न रुचितं तव तन्न कृतं च ते ॥ ४
ततः प्राप्तं त्वया वीर ग्रहणं शत्रुभिर्बलात् ।
मोक्षितश्चासि धर्मज्ञैः पाण्डवैर्न च लज्जसे ॥ ५
प्रत्यक्षं तव गान्धारे ससैन्यस्य विशां पते ।
सूतपुत्रोऽपयाद्भीतो गन्धर्वाणां तदा रणात् ।
क्रोशतस्तव राजेन्द्र ससैन्यस्य नृपात्मज ॥ ६
दृष्टस्ते विक्रमश्चैव पाण्डवानां महात्मनाम् ।
कर्णस्य च महाबाहो सूतपुत्रस्य दुर्मतेः ॥ ७
न चापि पादभाक्कर्णः पाण्डवानां नृपोत्तम ।
धनुर्वेदे च शौर्ये च धर्मे वा धर्मवत्सल ॥ ८
तस्य तेऽहं क्षमं मन्ये पाण्डवैस्तैर्महात्मभिः ।
संधिं संधिविदां श्रेष्ठ कुलस्यास्य विवृद्धये ॥ ९
एवमुक्तस्तु भीष्मेण धार्तराष्ट्रो जनेश्वरः ।
प्रहस्य सहसा राजन्विप्रतस्थे ससौबलः ॥ १०
तं तु प्रस्थितमाज्ञाय कर्णदुःशासनादयः ।
अनुजग्मुर्महेष्वासा धार्तराष्ट्रं महाबलम् ॥ ११
तांस्तु संप्रस्थितान्दृष्ट्वा भीष्मः कुरुपितामहः ।
लज्जया व्रीडितो राजञ्जगाम स्वं निवेशनम् ॥ १२

C. 3. 15220
B. 3. 253. 13
K. 3. 254. 13

---

वि)सृष्टेषु (for विसृष्टे च). $K_2$ नराधिप (for सुयो°). — $^{c}$) $B_{1.2.4}$ $D_4$ T $G_{1.2.4}$ हस्तिन°. — $^{e}$) $Ś_1$ तदा राजा (for महा°).

**4** $^{a}$) Dn $D_{4.6}$ $G_3$ तथा (for मया). — $^{b}$) $Ś_1$ K Dc $D_{1-3.5}$ $T_2$ $G_1$ सुयोधन (for तपो°). — $^{c}$) $G_{2.4}$ वचनं (for गमनं). $K_4$ $T_2$ $G_{1.2.4}$ $M_1$ ते; $T_1$ तन् (for मे). — $^{d}$) $T_1$ $G_{2.4}$ मम; $G_1$ M तथा (for तव). $K_{1.3}$ B Dc Dn $D_{4-6}$ $G_3$ तत्र; $T_1$ तं च (for तन्न). $K_3$ च मे; $G_1$ M त्वया (for च ते). $K_4$ $D_{2.3}$ $T_2$ मद्वचो ($T_2$ तत्तथा) न कृतं त्वया; $D_1$ मद्वचो न कृतं च ते.

**5** $^{a}$) $M_2$ तात (for वीर). — $^{b}$) $T_1$ transp. ग्रहणं and शत्रुभिर्. — $^{c}$) $B_2$ $D_{1-3}$ T $M_2$ चापि (for चासि).

**6** $^{a}$) $M_2$ राजेंद्र (for गान्धारे). — $^{b}$) $D_{2.3}$ सैन्यस्य च (for ससैन्यस्य). — $^{c}$) $Ś_1$ तदापेतो; $K_{1.2.4}$ $D_1$ $T_2$ $G_{1.4}$ भयाद्भीतो (for ऽपयाद्भीतो). — $^{d}$) $Ś_1$ तथा रणात्; $B_{2.4}$ तदा भयात्; $B_3$ तदा बलात्; $D_1$ $T_1$ तरस्विनां. — After $6^{cd}$, $T_1$ $G_{2.4}$ ins.:

1160* व्यपयात्पृष्ठतस्तस्मात्प्रेक्षमाणः पुनः पुनः ।

— $^{f}$) $B_4$ $M_1$ विशां पते; $M_2$ यथागतम् (for नृपा°).

**7** $^{b}$) $B_1$ पांडूनां सुमहात्मनां. — $G_4$ om. $7^{c}$–$8^{b}$.

**8** $G_4$ om. $8^{ab}$ (cf. v.l. 7). — $^{b}$) $B_4$ S (except $G_3$; $G_4$ om.) महात्मनां (for नृपो°). $D_1$ पांडवस्य नृपात्मज. — $^{c}$) $K_4$ $D_{2.3}$ धनुर्विद्भिश्च (for °वेदे). $K_3$ $B_3$ Dc $T_1$ $G_{2.4}$ $M_1$ [ऽ]थ (for च). $K_4$ $D_{2.3}$ शूरैश्च (for शौर्ये). $K_3$ $B_1$ $T_1$ $G_2$ M वा (for च). — $^{d}$) $D_1$ कुशलो (for धर्मे वा). $B_1$ धर्मशीलता; Dc $D_1$ धर्मवत्सलः. $K_4$ $D_{2.3}$ सर्वैश्च बलवत्तरैः.

**9** $^{a}$) B Dn $D_{4.6}$ $G_3$ तस्मादहं (for तस्य तेऽहं). — $^{c}$) $T_1$ M संधिमतां. — $^{d}$) $Ś_1$ $K_{1.3.4}$ Dc $D_{1-3}$ स्वकुलस्य (for कुलस्यास्य).

**10** $^{a}$) $B_{1.2.4}$ $Dn_1$ $D_6$ $G_2$ $M_2$ च (for तु). — $^{b}$) $Ś_1$ $K_{1.2}$ जनाधिपः; $T_1$ महीपतिः (for जने°). — $^{c}$) $K_{1.2}$ प्रसह्य; $T_2$ प्रहसन् (for प्रहस्य). $K_4$ $B_1$ $D_{2.3}$ स महाराज; $G_1$ $M_1$ सहसा राजा. — $^{d}$) $Ś_1$ $K_{1.2}$ $T_1$ महाबलः (for ससौ°). $K_4$ $D_{2.3}$ प्रतस्थे सहसौबलः.

**11** $^{a}$) $Ś_1$ K Dc $D_{1-3.5}$ ततः (for तं तु). $Ś_1$ आस्थाय. — $^{b}$) $B_4$ $T_1$ $G_1$ °नावपि (for °नादयः). — $^{c}$) $D_3$ महेष्वासान्; $T_2$ महेष्वासं. — $^{d}$) $T_2$ $G_1$ जनेश्वरं (for महा°). $K_4$ $T_1$ धार्तराष्ट्रा महाबलाः; $D_3$ धार्तराष्ट्रान्महाबलान्.

**12** $^{a}$) $D_1$ श्रुत्वा (for दृष्ट्वा). Dc स तु प्रतस्थिवान्दृष्ट्वा. — $^{b}$) $K_{1.2}$ भीष्मः कुरुकुलोद्वहः. — $^{c}$) $K_4$ $D_{2.3}$ [अ]धो-

C. 3. 15221
B. 3. 253. 14
K. 3. 254. 14

गते भीष्मे महाराज धार्तराष्ट्रो जनाधिपः ।
पुनरागम्य तं देशममन्त्रयत मन्त्रिभिः ॥ १३
किमस्माकं भवेच्छ्रेयः किं कार्यमवशिष्यते ।
कथं नु सुकृतं च स्यान्मन्त्रयामास भारत ॥ १४

कर्ण उवाच ।

दुर्योधन निबोधेदं यत्त्वा वक्ष्यामि कौरव ।
श्रुत्वा च तत्तथा सर्वं कर्तुमर्हस्यरिंदम ॥ १५
तवाद्य पृथिवी वीर निःसपत्ना नृपोत्तम ।
तां पालय यथा शक्रो हतशत्रुर्महामनाः ॥ १६

वैशंपायन उवाच ।

एवमुक्तस्तु कर्णेन कर्णं राजाब्रवीत्पुनः ।
न किंचिद्दुर्लभं तस्य यस्य त्वं पुरुषर्षभ ॥ १७
सहायश्चानुरक्तश्च मदर्थं च समुद्यतः ।
अभिप्रायस्तु मे कश्चित्तं वै शृणु यथातथम् ॥ १८
राजसूयं पाण्डवस्य दृष्ट्वा क्रतुवरं तदा ।
मम स्पृहा समुत्पन्ना तां संपादय सूतज ॥ १९
एवमुक्तस्ततः कर्णो राजानमिदमब्रवीत् ।
तवाद्य पृथिवीपाला वश्याः सर्वे नृपोत्तम ॥ २०
आहूयन्तां द्विजवराः संभाराश्च यथाविधि ।
संभ्रियन्तां कुरुश्रेष्ठ यज्ञोपकरणानि च ॥ २१
ऋत्विजश्च समाहूता यथोक्तं वेदपारगाः ।
क्रियां कुर्वन्तु ते राजन्यथाशास्त्रमरिंदम ॥ २२
बह्वन्नपानसंयुक्तः सुसमृद्धगुणान्वितः ।
प्रवर्ततां महायज्ञस्तवापि भरतर्षभ ॥ २३
एवमुक्तस्तु कर्णेन धार्तराष्ट्रो विशां पते ।
पुरोहितं समानाय्य इदं वचनमब्रवीत् ॥ २४
राजसूयं क्रतुश्रेष्ठं समाप्तवरदक्षिणम् ।
आहर त्वं मम कृते यथान्यायं यथाक्रमम् ॥ २५
स एवमुक्तो नृपतिमुवाच द्विजपुंगवः ।
न स शक्यः क्रतुश्रेष्ठो जीवमाने युधिष्ठिरे ।

---

मुखो ; $T_2$ $G_{2.4}$ [अ]वनतो (for व्रीडितो). — d) $G_4$ $M_2$ स्व- (for स्वं).

**13** b) $K_3$ B Dn $D_{2-4.6}$ $G_3$ जनेश्वरः ($B_4$ सुयोधनः); $T_2$ महाबलः (for जनाधिपः). — c) $K_3$ राजा (for देशम्). — d) $K_1$ आमंत्रयत; $K_3$ न्यमंत्र°.

**14** a) $B_1$ अस्माभिर् (for अस्माकं). — b) $B_1$ $G_1$ मम (for अव-). — c) N $G_{1.3}$ च (for नु). $Ś_1$ $K_1$ नु; $K_{2.3}$ न; $K_4$ $D_5$ नः; $B_{1-3}$ Dn $D_{2-4.6}$ $G_3$ तत्; $B_4$ Dc $D_1$ मे (for च). — d) $Ś_1$ K $D_{1-3.5}$ मंत्रयामोत्र य($K_4$ $D_{2.5}$ त)-द्धितं; $B_{1.3.4}$ Dc Dn $D_{4.6}$ $G_3$ मंत्रयामोद्य य(Dc त)द्धितं; $B_2$ मंत्रयामो धियाकृतं.

**15** a) $Ś_1$ K Dc निबोध त्वं (for °धेदं). — b) $K_4$ B D $T_2$ $G_3$ यत्त्वां; $K_3$ यथा. $Ś_1$ $K_{1.2}$ $D_1$ भारत (for कौरव). — After $15^{ab}$, $K_4$ D (except $D_4$) $G_3$ ins. a passage given in App. I (No. 24). — $K_{2.4}$ $D_2$ om. $15^{cd}$. — c) B Dn $D_{4.6}$ $G_3$ वाचं; $D_5$ तु तत्; $T_1$ च तं. — d) $B_2$ $G_1$ [अ]र्निदित (for [अ]रिंदम).

**16** a) $B_1$ $D_3$ T राजन् (for वीर). — b) $D_1$ संप्रपन्ना (for निःस°). — c) $B_1$ महाराज; $T_2$ महाबाहो (for यथा शक्रो). — d) $B_1$ यथा शक्रो; $G_{1.2.4}$ $M_2$ गतशत्रुर्. $B_2$ $D_1$ महाबलः.

**17** b) S (except $G_3$) राजा कर्णमथाब्रवीत्. — d) $Ś_1$ $K_{1.2.4}$ $D_{2.3.5}$ पुरुषोत्तम.

**18** a) $D_5$ सुसहायोनुरक्तश्च. — b) $B_1$ समर्थं; S (except $T_1$ $G_3$) मदर्थे. — d) $T_2$ $G_{1.4}$ तन्मे (for तं वै).

**19** b) $K_3$ B D (except $D_{1-3.5}$) $G_3$ महत् (for तदा). — d) $G_1$ सुव्रत (for सूतज).

**20** a) $K_{1.3.4}$ $D_{1-3}$ तदा (for ततः). — d) S (except $G_3$) सर्वे वश्या (by transp.). $D_3$ नृपात्मज.

**21** a) $K_1$ $D_2$ आह्वयंतां; $G_1$ आहूयंत. $T_1$ द्विजवरान्.

**22** a) $K_4$ $D_3$ समाहूय; $T_1$ यथा भूता. — b) $K_4$ $B_{2-4}$ Dn $D_{1-4.6}$ $G_3$ $M_2$ यथोक्ता. $K_{1.2}$ $B_{1-3}$ Dc वेदपारगैः. — c) $K_{1.4}$ $B_1$ $D_{1-3}$ S (except $T_2$ $G_3$) क्रियाः.

**23** d) $T_2$ $G_1$ तवाद्य पुरुषर्षभ.

**24** Before 24, $K_4$ $B_1$ $Dc_1$ $D_{1-3.5}$ ins. वैशं° उ°. — c) $K_4$ $D_2$ समासाद्य; $D_4$ $G_3$ °नीय; $T_2$ $G_1$ °हूय. — d) To avoid hiatus, $K_1$ त्विदं (for इदं). $B_{1-3}$ D (except $D_{1-3.5}$) $G_3$ वचनं चेदमब्रवीत्.

**25** a) $=33^{a}$. $K_{1.2}$ S (except $G_3$) क्रतुवरं. — c) $T_2$ $G_{2.4}$ आहरस्व यथाशास्त्रं.

**26** a) $T_1$ एवमुक्तः स नृपतिम्. — b) $B_{1-3}$ Dn $D_{4.6}$ $T_1$ $G_{1.3}$ $M_2$ द्विजसत्तमः. — After $26^{ab}$, S (except $G_3$) ins.:

1161* ब्राह्मणैः सहितो धीमान्ये तत्रासन्समागताः ।

आहर्तुं कौरवश्रेष्ठ कुले तव नृपोत्तम ॥ २६
दीर्घायुर्जीवति च वै धृतराष्ट्रः पिता तव ।
अतश्चापि विरुद्धस्ते क्रतुरेष नृपोत्तम ॥ २७
अस्ति त्वन्यन्महत्सत्रं राजसूयसमं प्रभो ।
तेन त्वं यज राजेन्द्र शृणु चेदं वचो मम ॥ २८
य इमे पृथिवीपालाः करदास्तव पार्थिव ।
ते करान्संप्रयच्छन्तु सुवर्णं च कृताकृतम् ॥ २९
तेन ते क्रियतामद्य लाङ्गलं नृपसत्तम ।
यज्ञवाटस्य ते भूमिः कृष्यतां तेन भारत ॥ ३०
तत्र यज्ञो नृपश्रेष्ठ प्रभूतान्नः सुसंस्कृतः ।
प्रवर्ततां यथान्यायं सर्वतो ह्यनिवारितः ॥ ३१
एष ते वैष्णवो नाम यज्ञः सत्पुरुषोचितः ।
एतेन नेष्टवान्कश्चिदृते विष्णुं पुरातनम् ॥ ३२
राजसूयं क्रतुश्रेष्ठं स्पर्धत्येष महाक्रतुः ।
अस्माकं रोचते चैव श्रेयश्च तव भारत ।
अविघ्नश्च भवेदेष सफला स्यात्स्पृहा तव ॥ ३३
एवमुक्तस्तु तैर्विप्रैर्धार्तराष्ट्रो महीपतिः ।
कर्णं च सौबलं चैव भ्रातॄंश्चैवेदमब्रवीत् ॥ ३४
रोचते मे वचः कृत्स्नं ब्राह्मणानां न संशयः ।
रोचते यदि युष्माकं तन्मा प्रब्रूत माचिरम् ॥ ३५
एवमुक्तास्तु ते सर्वे तथेत्यूचुर्नराधिपम् ।
संदिदेश ततो राजा व्यापारस्थान्यथाक्रमम् ॥ ३६
हलस्य करणे चापि व्यादिष्टाः सर्वशिल्पिनः ।
यथोक्तं च नृपश्रेष्ठ कृतं सर्वं यथाक्रमम् ॥ ३७

C. 3. 15297
B. 3. 255. 25
K. 3. 256. 26

इति श्रीमहाभारते आरण्यकपर्वणि एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥

---

— [c]) $K_3$ शक्यस्तु; $B_2$ स शत्रुः; $D_3$ शक्यः स (by transp.); $T_1$ च शक्यं; $T_2$ वै शक्यं. $Ś_1$ $K_{1.2}$ त्वया राजन्; $K_3$ $D_3$ T $G_{1.2.4}$ M कुरुश्रेष्ठे (T $G_{1.4}$ °ष्ठ; $M_1$ °ष्ठो); $B_2$ कृतश्रेष्ठो. — [d]) $T_2$ वर्त° (for जीव°). — [f]) $B_4$ काले (for कुले). $Ś_1$ $K_{1.2}$ नराधिप; $T_2$ $G_1$ नरोत्तम.

**27** $K_4$ om. (hapl.) 27. — [a]) Dc $G_2$ $M_2$ om. च. $T_2$ $G_1$ स (for च). B D (except $D_{2.3.5}$) $G_3$ ते (for वै). — [b]) $B_{1.3.4}$ D (except $D_{1-3.5}$) $G_3$ नृप (for तव). — [c]) $D_3$ [अ]सौ (for ते).

**28** [a]) $M_1$ अस्तु (for अस्ति). $G_1$ चान्यन्. $B_4$ $D_5$ महासत्रं. $Ś_1$ $K_{1.2}$ अस्ति त्वन्यो महाराज. — [b]) $Ś_1$ $K_{1.2}$ °समः. $T_1$ विदुः; $G_{1.2.4}$ M विभो (for प्रभो). — [d]) Dc शृणुष्वेदं; $T_1$ शृणु चैवं.

**29** [a]) $T_2$ $G_2$ ये चेमे (for य इमे). — [d]) S (except $G_3$) सुवर्णमकृतं कृतं ($T_1$ °तं शुभं; $M_2$ °ताकृतं).

**30** [c]) $K_4$ $D_{1-3}$ वै (for ते). — [d]) $K_3$ ते नृपोत्तम; $B_2$ तव भारत; $G_1$ ते नरर्षभ.

**31** $D_3$ om. 31. — [a]) $K_3$ तेन; $B_2$ रुद्र-; $B_3$ $Dc_2$ यत्र (for तत्र). $T_2$ $G_1$ नरश्रेष्ठ. — [b]) $B_1$ प्रभूतार्थः. — [d]) K $B_{1.4}$ Dc $D_2$ $G_1$ सर्वशोप्यनि°; $D_1$ सर्वपापनिवारणः; $T_1$ $G_{2.4}$ M सर्वशो ह्यनि°; $T_2$ संस्पृशोप्यनि°.

**32** [a]) $Dc_2$ S (except $G_3$) वै (for ते). — [c]) $T_1$ एतेनैव तु यज्ञेन. — [d]) $T_1$ दृष्ट्वा (for ऋते). $G_{2.4}$ विष्णोः. $K_3$ Dc T $G_1$ M सनातनं; $G_{2.4}$ सनातनात्.

**33** [a]) $= 25^a$. $K_1$ $G_1$ क्रतुश्रेष्ठ; Dc क्रतुवरं. — [b]) $T_2$ $G_1$ स्पर्धतेयं. — [c]) $K_{1-3}$ Dc $D_{1.5}$ T $G_2$ M चैष (for चैव). $K_4$ $D_{2.3}$ एवं तु रोचतेस्माकं. — [d]) $K_1$ $B_1$ श्रेष्ठश्च; $G_{2.4}$ M श्रेयांश्च. — [e]) Dc भवत्येष. B Dn $D_{4.6}$ $G_3$ निर्विघ्नश्च भवत्येष. — [f]) K $B_1$ Dc $D_{1-3.5}$ T $G_{1.2.4}$ च ते (for तव). — After 33, S (except $T_1$ $G_3$) ins.:

1162* तस्मादेष महाबाहो तव यज्ञः प्रवर्तताम् ।

**34** [a]) $T_2$ $G_1$ धर्मेण (for तैर्विप्रैर्). — [b]) $K_{1.2}$ $D_5$ महामतिः (for मही°).

**35** [a]) $K_4$ ते (for मे). — [b]) $M_2$ तथैव च (for न संशयः). — [d]) K $D_{2.3.5}$ $T_2$ तन्मां; B Dc Dn $D_{1.4.6}$ $G_3$ तस्मात् ($Dn_2$ तच्च); $G_{2.4}$ M ततः (for तन्मा). $T_2$ ब्रुवत (for प्रब्रूत). $G_1$ तन्मम ब्रूत माचिरं.

**36** [a]) $K_1$ सर्वे ते (by transp.). — [b]) $G_1$ प्रत्यूचुस्तं नरा°. — After $36^{ab}$, $T_2$ ins. 3. 242. $1^{cd}$ (v.l. धृतराष्ट्रं for धार्तराष्ट्रे), *repeating* it in its proper place. — [c]) $G_4$ आदि° (for संदि°). $T_1$ महाराज; $M_2$ तथा राजा. — [d]) T $G_1$ M व्यापारान्स्वा($M_1$ °रांस्ता)न्यथा°.

**37** [a]) $K_3$ करणं; $K_4$ कारणाच्; $D_3$ कारणे. $K_3$ Dc $D_1$ चैव (for चापि). — [b]) $D_1$ शिल्पकारिणः (for सर्व°). — [c]) $T_2$ ते; $G_1$ तन् (for च). — [d]) $T_1$ ते तं (for कृतं). $G_4$ कृत्यं (for सर्वं).

Colophon. $G_3$ broken. — *Major parvan:* $Ś_1$ $K_{1.2}$ $Dn_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* $K_{3.4}$ $D_{1-3.5}$ (all om. sub-parvan name) mention only धार्तराष्ट्रयज्ञ;

# २४२

C. 3. 15298
B. 3. 256. 1
K. 3. 257. 1

वैशंपायन उवाच ।
ततस्तु शिल्पिनः सर्वे अमात्यप्रवराश्च ह ।
विदुरश्च महाप्राज्ञो धार्तराष्ट्रे न्यवेदयत् ॥ १
सज्जं क्रतुवरं राजन्कालप्राप्तं च भारत ।
सौवर्णं च कृतं दिव्यं लाङ्गलं सुमहाधनम् ॥ २
एतच्छ्रुत्वा नृपश्रेष्ठो धार्तराष्ट्रो विशां पते ।
आज्ञापयामास नृपः क्रतुराजप्रवर्तनम् ॥ ३
ततः प्रववृते यज्ञः प्रभूतान्नः सुसंस्कृतः ।
दीक्षितश्चापि गान्धारिर्यथाशास्त्रं यथाक्रमम् ॥ ४
प्रहृष्टो धृतराष्ट्रोऽभूद्विदुरश्च महायशाः ।
भीष्मो द्रोणः कृपः कर्णो गान्धारी च यशस्विनी ॥ ५
निमन्त्रणार्थं दूतांश्च प्रेषयामास शीघ्रगान् ।
पार्थिवानां च राजेन्द्र ब्राह्मणानां तथैव च ।
ते प्रयाता यथोद्दिष्टं दूतास्त्वरितवाहनाः ॥ ६
तत्र कंचित्प्रयातं तु दूतं दुःशासनोऽब्रवीत् ।
गच्छ द्वैतवनं शीघ्रं पाण्डवान्पापपूरुषान् ।
निमन्त्रय यथान्यायं विप्रांस्तस्मिन्महावने ॥ ७
स गत्वा पाण्डवावासमुवाचाभिप्रणम्य तान् ।
दुर्योधनो महाराज यजते नृपसत्तमः ॥ ८
स्ववीर्यार्जितमर्थौघमवाप्य कुरुनन्दनः ।
तत्र गच्छन्ति राजानो ब्राह्मणाश्च ततस्ततः ॥ ९
अहं तु प्रेषितो राजन्कौरवेण महात्मना ।

---

and B Dc Dn $D_{4.6}$, likewise, only दुर्योधनयज्ञ. — *Adhy. name:* $M_2$ धार्तराष्ट्रयज्ञनिर्णयः. — *Adhy. no.* (figures, words or both): $B_4$ 323; Dn 254 ($Dn_2$ 253); $D_1$ 256; $T_1$ $G_4$ M ($M_2$ *inf. lin.*) 245 ($M_2$ orig. 247): $T_2$ $G_1$ 242; $G_2$ 244. — *Śloka no.:* Dn $D_1$ 25 ($Dn_2$ 24).

## 242

**1** [a]) Dc ते; $T_1$ च (for तु). $T_2$ $G_{1.2.4}$ सर्वं. — [b]) $B_{2-4}$ Dn $D_{4.6}$ $G_3$ ये (for ह). To avoid hiatus, $T_1$ M तेमात्यप्रवरा($M_1$ °मुखा)श्च ह; $T_2$ $G_{1.2.4}$ कृतमूचुर्नं- ($G_1$ °र्द्धं न)राधिपं. — [c]) $K_3$ $D_{2.3}$ महाप्रज्ञो. — [d]) $D_1$ T $G_{1.2.4}$ धृतराष्ट्रे ($T_1$ °ष्ट्रं). $Ś_1$ न्यवेशयन्; $K_1$ M न्यवेदयन्.

**2** [a]) $Ś_1$ $K_{1.2}$ सज्जः क्रतुवरो राजन्; T $G_{2.4}$ M सज्जं कृतं ($T_1$ °ज्जः क्रतुं; $G_2$ °ज्जं क्रतुर्; $G_4$ °ज्जः क्रतुर्; $M_1$ °ज्जी- कृतं) महाराज; $G_1$ संभाराः संभृता राजन्. — [b]) $Ś_1$ $K_{1.2}$ Dc प्राप्तकालं; $K_{3.4}$ $D_{1.2}$ कालं प्राप्तं; $T_1$ $G_4$ कालप्राप्तश्च; $T_2$ $G_1$ कालः प्राप्तश्च; $G_2$ काले प्राप्तश्च. — [c]) $B_{2.3}$ Dn $D_{4-6}$ $G_3$ सर्वं; $G_4$ द्रव्यं (for दिव्यं). — [d]) B Dn $D_{4-6}$ $G_3$ च (for सु-).

**3** [a]) $B_2$ चैव (for श्रुत्वा). $K_1$ नृपश्रेष्ठ; $K_{3.4}$ $D_{1-3.5}$ $G_4$ $M_1$ नरश्रेष्ठो. — [b]) $T_2$ $G_{1.2.4}$ धृतराष्ट्रो. $K_4$ नराधिपः; $T_2$ $G_1$ महीपतिः (for विशां पते). — $B_2$ om. $3^{cd}$. — [c]) $D_{4.6}$ प्राज्ञा° (for आज्ञा°). $K_1$ नृप; $G_1$ नृपान्. — [d]) T $G_1$ क्रतू राजन् ($T_2$ राज्ञो यज्ञः; $G_1$ यज्ञो राज्ञः) प्रवर्तितां.

**4** [illegible] om. 4. — [a]) $K_3$ $Dc_2$ प्रवर्तते. — [b]) $B_1$ प्रभूतार्थं; Dn [illegible] $B_1$ °संस्कृतं; $T_2$ °सत्कृतः. — [c]) $G_{2.4}$ गांधारो. — $4^d=23^b$.

**5** [a]) $B_1$ प्रविष्टो. $K_2$ $B_2$ धार्तराष्ट्रः. B Dn $D_{4.6}$ $G_3$ च (for ऽभूद्). — [b]) $T_1$ $G_{2.4}$ M महामनाः; $T_2$ °द्युतिः; $G_1$ °मतिः. — [c]) $G_{2.4}$ भीष्मद्रोणः.

**6** [a]) $T_2$ निमंत्रणाय; $G_{2.4}$ आमंत्रणार्थं. — [b]) $D_2$ प्रेरयामास. $G_1$ वीर्यवान्. — [c]) $K_{1.2.4}$ Dc $D_{1.2.5}$ राजेंद्रो; $K_3$ विप्रेंद्रो. — [d]) $Ś_1$ च भारत; $K_{1.2}$ च पार्थिव (for तथैव च). — [e]) $Ś_1$ $K_{1.2}$ Dc यथाज्ञप्तं; $K_3$ $D_{1-3}$ यथाप्रज्ञं; $K_4$ यथायज्ञं; $B_{2-4}$ Dn $D_{4.6}$ $G_{3.4}$ $M_2$ यथोद्दिष्टा.

**7** [a]) $D_1$ तं तु; $G_4$ ततः (for तत्र). — [d]) $K_4$ $B_{3.4}$ $D_1$ पापपौरुषान्; T $G_1$ पुरुषर्षभान्. — [f]) $K_{3.4}$ Dc $D_{2.3}$ T G वने तथा; B Dn $D_{4.6}$ वने तदा ($B_2$ स्थितान्); $D_1$ च यद्वने; $D_5$ वने यथा (for महावने).

**8** [a]) $B_{2-4}$ Dn $D_{4-6}$ $G_3$ स गत्वा पांडवान्सर्वान्. — [b]) $K_{3.4}$ $B_4$ S (except $G_3$) [अ]थ (for [अ]भि-). B Dn $D_{4-6}$ $G_3$ च (for तान्). — [c]) $Ś_1$ $K_{2.3}$ $B_2$ Dc $D_1$ महाराजो. — [d]) $K_{2.4}$ $B_2$ Dc $D_5$ T $G_{1.4}$ °सत्तम.

**9** [a]) $B_2$ °तमर्थौयम्; $D_4$ °तरत्नौघम्. — [b]) $K_{1-3}$ Dc $D_{1-3.5}$ $G_2$ $M_2$ कुरुनंदन; $B_{2.3}$ Dn $D_{4.6}$ $G_3$ °सत्तमः.

आमन्त्रयति वो राजा धार्तराष्ट्रो जनेश्वरः ।
मनोभिलषितं राज्ञस्तं क्रतुं द्रष्टुमर्हथ ॥ १०
ततो युधिष्ठिरो राजा तच्छ्रुत्वा दूतभाषितम् ।
अब्रवीन्नृपशार्दूलो दिष्ट्या राजा सुयोधनः ।
यजते क्रतुमुख्येन पूर्वेषां कीर्तिवर्धनः ॥ ११
वयमप्युपयास्यामो न त्विदानीं कथंचन ।
समयः परिपाल्यो नो यावद्वर्षं त्रयोदशम् ॥ १२
श्रुत्वैतद्धर्मराजस्य भीमो वचनमब्रवीत् ।
तदा तु नृपतिर्गन्ता धर्मराजो युधिष्ठिरः ॥ १३
अस्त्रशस्त्रप्रदीप्तेऽग्नौ यदा तं पातयिष्यति ।
वर्षात् त्रयोदशादूर्ध्वं रणसत्रे नराधिपः ॥ १४
यदा क्रोधहविर्मोक्ता धार्तराष्ट्रेषु पाण्डवः ।
आगन्तारस्तदा स्मेति वाच्यस्ते स सुयोधनः ॥ १५
शेषास्तु पाण्डवा राजन्नैवोचुः किंचिदप्रियम् ।
दूतश्चापि यथावृत्तं धार्तराष्ट्रे न्यवेदयत् ॥ १६
अथाजग्मुर्नरश्रेष्ठा नानाजनपदेश्वराः ।
ब्राह्मणाश्च महाभागा धार्तराष्ट्रपुरं प्रति ॥ १७
ते त्वर्चिता यथाशास्त्रं यथावर्णं यथाक्रमम् ।
मुदा परमया युक्ताः प्रीत्या चापि नरेश्वर ॥ १८
धृतराष्ट्रोऽपि राजेन्द्र संवृतः सर्वकौरवैः ।
हर्षेण महता युक्तो विदुरं प्रत्यभाषत ॥ १९
यथा सुखी जनः सर्वः क्षत्तः स्यादन्नसंयुतः ।
तुष्येच्च यज्ञसदने तथा क्षिप्रं विधीयताम् ॥ २०
विदुरस्त्वेवमाज्ञप्तः सर्ववर्णानरिंदम ।
यथाप्रमाणतो विद्वान्पूजयामास धर्मवित् ॥ २१
भक्ष्यभोज्यान्नपानेन माल्यैश्चापि सुगन्धिभिः ।

C. 3. 15321
B. 3. 256. 24
K. 3. 257. 23

— [d]) Dc G4 सहस्रशः (for ततस्ततः).

**10** [a]) Ś1 K1. 2. 4 B4 D2. 3. 5 राज्ञा (for राजन्). — K1 om. 10[cd]. — [c]) Dc आमंत्र्य यदि वो राजा. — [d]) Dc1 T2 G1 धृत° (for धार्त°). T2 G1 महीपतिः; G2. 4 नराधिपः (for जने°). — [e]) T2 राजन् (for राज्ञः). — [f]) T1 अर्हसि.

**11** [b]) D1 श्रुत्वा दूतस्य भाषितं. — [c]) Ś1 K1. 2 राज°; G1 नर° (for नृप°). — [d]) T2 यज्ञं (for राजा). — [e]) T2 G1 क्रतुमुख्यानां. — [f]) D1 T G1 M1 सर्वेषां; G4 गच्छेम. T2 G1 कीर्तिवर्धनं; G2. 4 M प्रीतिवर्धन.

**12** [b]) K4 D2. 3 चेदानीं (for त्वि°).

**13** [c]) Ś1 K1. 2. 4 D2. 5 हि; G1 M [अ]त्र (for तु). — [d]) Ś1 K1. 2 कुरु° (for धर्म°).

**14** [a]) Ś1 K B1. 4 D2. 3 G4 °प्रदीप्ताग्नौ. — [b]) G4 पाच°. — [d]) B1 T G1 M नर° (for रण°).

**15** [b]) K1. 2 G1 पांडवाः. Dc धार्तराष्ट्रे युधिष्ठिरः. — [c]) K2. 3 D5 आगंताहं (K3 °ता च); G4 अभ्यंतरस्. Ś1 सदा (for तदा). T1 [अ]स्मि (for स्म). B Dc Dn D4. 6 G3 आगंताहं तदास्मीति. — [d]) T G4 एव; G1. 2 M एवं (for ते स). Ś1 हि (for स).

**16** [a]) Ś1 K Dc D1–3 शिष्टास्तु. — [b]) Ś1 K1. 2 Dc2 D4 च (for [ए]व). — [c]) Ś1 K1. 2 स च दूतस्; K3 B4 Dc D1 T G1 दूतश्च तद्; K4 D2. 3 स दूतस्तद् (D3 °स्तु); G2. 4 दूतस्त्वेतद् (for दूतश्चापि). Ś1 K1. 2 तथा°; D3 ह्यथा°.

**17** [a]) Ś1 K1. 2 T1 G2 M2 नृप°; T2 G1 द्विज° (for नर°). — Ś1 om. (hapl.) 17[c]–18[d]. — [c]) Dn D4. 6 G4 महाभाग. — [d]) B1. 4 D5 धृत° (for धार्त°).

**18** Ś1 om. 18 (cf. v.l. 17). — [a]) B1 यथान्यायं. — [b]) B1 यथाशास्त्रं; B2–4 Dn D4. 6 G3 यथाविधि (for यथावर्णं). B3 यथातथं. — [d]) K4 B Dn D4–6 G3 प्रीताश्चापि. K4 B D (except D1–3) G3 नरेश्वराः; T G1. 2. 4 M जनेश्वर (T °राः).

**19** [a]) D5 स; G4 [ऽ]थ (for ऽपि). K3. 4 B1 Dc2 Dn2. n3 D1. 2 G2 M1 राजेंद्रः. Ś1 धार्तराष्ट्रपुरे जग्मुः. — [b]) Ś1 संवृताः; K1. 3 संवृत्तः. K1. 3 Dc T1 G2 M2 सह (for सर्व-). — After 19[ab], Ś1 ins.:

1163* प्राप्तान्सर्वान्नृपान्दृष्ट्वा धार्तराष्ट्रो महामनाः।

— [c]) K1 महताविष्टो.

**20** [a]) B1 यथा; D2 G1 -सुखं (for सुखी). M1 जनः सुखी (by transp.). K1 सर्वं; T1 सर्वे. — [b]) K4 B1 D2 कृतः; B4 क्रतुः (for क्षत्तः). Dc तत्र (for अन्न-). — [c]) K4 स तुष्येद्; Dc2 तुष्येत; D2. 3 तुष्टश्च; T2 G1 हृष्येच्च. B4 Dn D6 तु (for च). Ś1 °सदनं. — [d]) Ś1 तदा. Dc यत्नो; D5 S (except G3) नीतिर् (for क्षिप्रं).

**21** [a]) B1–3 Dn D4. 6 G3 विदुरस्तु तदाज्ञाय; Dc °स्त्वेवमाज्ञातः. — [b]) K4 B1. 2 D1 अरिंदमः. — [c]) B2 वृद्धान्; D3 विप्रान् (for विद्वान्).

वासोभिर्विविधैश्चैव योजयामास हृष्टवत् ॥ २२
कृत्वा ह्यवभृथं वीरो यथाशास्त्रं यथाक्रमम् ।
सान्त्वयित्वा च राजेन्द्रो दत्त्वा च विविधं वसु ।
विसर्जयामास नृपान्ब्राह्मणांश्च सहस्रशः ॥ २३
विसर्जयित्वा स नृपान्भ्रातृभिः परिवारितः ।
विवेश हास्तिनपुरं सहितः कर्णसौबलैः ॥ २४

इति श्रीमहाभारते आरण्यकपर्वणि द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥

# २४३

वैशंपायन उवाच ।
प्रविशन्तं महाराज सूतास्तुष्टुवुरच्युतम् ।
जनाश्चापि महेष्वासं तुष्टुवू राजसत्तमम् ॥ १
लाजैश्चन्दनचूर्णैश्चाप्यवकीर्य जनास्तदा ।
ऊचुर्दिष्ट्या नृपाविघ्नात्समाप्तोऽयं क्रतुस्तव ॥ २
अपरे त्वब्रुवंस्तत्र वातिकास्तं महीपतिम् ।
युधिष्ठिरस्य यज्ञेन न समो ह्येष ते क्रतुः ।
नैव तस्य क्रतोरेष कलामर्हति षोडशीम् ॥ ३
एवं तत्राब्रुवन्केचिद्वातिकास्तं नरेश्वरम् ।
सुहृदस्त्वब्रुवंस्तत्र अति सर्वानयं क्रतुः ॥ ४

---

**22** $^{a}$) Ś$_1$ K$_{1-3}$ B Dc Dn D$_{1.4.6}$ G$_3$ भक्ष्यपेयान्न पानेन ( K$_{1.2}$ °पानानि; K$_3$ D$_1$ °दानानि; Dc Dn$_2$ °दानेन ); T$_2$ G$_2$ M$_2$ °भोज्यान्नपानैश्च.

**23** $^{a}$) N G$_3$ ह्यावसथान्; T$_2$ G$_1$ [अ]प्यवभृथं; G$_2$ M$_2$ ह्यवभृतं. — $^{b}$) =4$^{d}$. M$_1$ °विधि (for °क्रमम्). — After 23$^{ab}$, M$_1$ ins.:

1164* स्नातश्चावभृथो राजा धार्तराष्ट्रो महामनाः ।

— $^{c}$) D$_1$ सांत्वयामास ( for °यित्वा च ). D$_2$ तु; G$_4$ [अ]थ (for च ). Ś$_1$ K$_{2.4}$ B$_1$ D$_{2.3}$ T$_1$ G$_1$ राजेंद्र; T$_2$ राजेंद्रान्. — $^{d}$) T$_1$ M बहुविधं ( for च वि° ). — Ś$_1$ T$_1$ G$_2$ om. (hapl.) 23$^{f}$–24$^{a}$. — $^{f}$) K$_4$ D$_{2.3}$ G$_4$ ब्राह्मणांश्चापि ( G$_4$ °श्चैव ) सर्वशः.

**24** Dc D$_1$ om. 24$^{ab}$; Ś$_1$ T$_1$ G$_2$ om. 24$^{a}$ (cf. v.l. 23). — $^{a}$) B Dn D$_{4-6}$ G$_3$ विसृज्य च नृपान्सर्वान् (B$_4$ विसर्जयामास नृपान्). — $^{b}$) B$_1$ ब्राह्मणान् *****(cf. 23$^{f}$ ). — $^{c}$) B$_{1.2.4}$ T G$_{2.4}$ M$_1$ हस्तिन°. — $^{d}$) Ś$_1$ कर्णकौरवैः.

Colophon om. in Ś$_1$ K$_{1-3}$. — *Major parvan:* Dn$_2$ T$_1$ G$_{2.4}$ आरण्य. — *Sub-parvan:* K$_4$ B$_1$ Dc D$_{1-3.5}$ (all om. sub-parvan name) mention only धार्तराष्ट्रयज्ञ; B$_{2-4}$ Dn D$_{4.6}$ G$_3$, likewise, only दुर्योधन( Dn$_2$ om. दुर्योधन )यज्ञ. — *Adhy. no.* (figures, words or both): Dn 255 (Dn$_2$ 254); D$_1$ 257; T$_1$ G$_4$ M (M$_2$ *inf. lin.*) 246 (M$_2$ orig. 248); T$_2$ G$_1$ 243; G$_2$ 245. — *Śloka no.*: Dn$_1$. n$_3$ 28; Dn$_2$ D$_1$ 26.

## 243

**1** $^{a}$) K$_4$ Dn$_3$ M$_1$ महाराजं; D$_1$ महाबाहुं. — $^{b}$) T$_2$ G$_1$ अर्चितं ( for अच्युतम् ). — $^{c}$) S ( except G$_3$ ) मागधाश्च ( for जना° ). D$_1$ महाबाहुं; T$_1$ महेष्वासा. — $^{d}$) Ś$_1$ Dn तुष्टुवू राजसत्तम; T G$_{1.2}$ M नागराश्च सहस्रशः ( T$_1$ M$_2$ समंततः ).

**2** $^{a}$) B$_1$ °गंधैश्च; B$_2$ °चूर्णेन; T$_2$ G$_1$ °पुष्पैश्च; G$_2$ °चूतैश्च (for °चूर्णैश्च ). — $^{b}$) Ś$_1$ K$_{1.2}$ [अ]प्यकीर्यंत; K$_3$ D$_1$ [अ]प्यपकीर्य; B Dn D$_{4.6}$ T$_1$ G$_3$ विकीर्य च ( B$_2$ T$_1$ °र्यंत ); Dc अवकीर्य ( with hiatus ); T$_2$ व्यकीर्यंत; G$_1$ व्यकिरंत; G$_{2.4}$ व्यवकीर्य. Ś$_1$ K$_{3.4}$ B D ( except D$_5$ ) G$_3$ ततः; T$_1$ तथा. — $^{c}$) N ( except K$_4$ B$_{1.4}$ ) G$_3$ M$_1$ नृपाविघ्नः; G$_{1.4}$ °विघ्नान्. — $^{d}$) D$_1$ महाक्रतुः ( for क्रतुस्तव ).

**3** T$_2$ om. 3$^{a}$–4$^{b}$; D$_1$ om. 3$^{abcd}$. — $^{b}$) K$_{2.4}$ B$_1$ Dn$_3$ D$_{2.3.5}$ G$_3$ वार्तिका°; T$_1$ G$_{1.2.4}$ M$_1$ त्रादिका°; M$_2$ वादिता°. B$_2$ नराधिपं ( for महीपतिम् ). — $^{c}$) G$_{1.2.4}$ M$_2$ यौधि°. S ( except G$_3$; T$_2$ om. ) यज्ञस्य. — $^{e}$) G$_2$ न वै ( for नैव ). G$_1$ ह्येष.

**4** T$_2$ om. 4$^{ab}$ ( cf. v.l. 3 ); M$_2$ om. 4$^{ab}$. — $^{a}$) B$_1$ तु ते° ( for तत्रा° ). — $^{b}$) K$_{2.4}$ B$_1$ D$_{1-3.5}$ वार्तिका°; Dc$_2$ वीतिका°; T$_1$ G$_{2.4}$ M$_1$ वादिका°; G$_1$ वादिन°. K$_2$ G$_1$ M$_1$ महीपतिं; B$_{1.3}$ Dc$_1$ Dn D$_{1.4-6}$ G$_3$ जनेश्वरं; B$_2$ नराधिपं. — $^{c}$) T$_2$ अपरे ( for सुहृदस् ). B$_4$ D$_5$ च ( for तु ). T$_1$ केचिद् ( for तत्र ). — $^{d}$) M ह्यति ( for अति ). Ś$_1$ क्रतू-

ययातिर्नहुषश्चापि मांधाता भरतस्तथा ।
क्रतुमेनं समाहृत्य पूताः सर्वे दिवं गताः ॥ ५
एता वाचः शुभाः शृण्वन्सुहृदां भरतर्षभ ।
प्रविवेश पुरं हृष्टः स्ववेश्म च नराधिपः ॥ ६
अभिवाद्य ततः पादौ मातापित्रोर्विशां पते ।
भीष्मद्रोणकृपाणां च विदुरस्य च धीमतः ॥ ७
अभिवादितः कनीयोभिर्भ्रातृभिर्भ्रातृवत्सलः ।
निषसादासने मुख्ये भ्रातृभिः परिवारितः ॥ ८
तमुत्थाय महाराज सूतपुत्रोऽब्रवीद्वचः ।
दिष्ट्या ते भरतश्रेष्ठ समाप्तोऽयं महाक्रतुः ॥ ९
हतेषु युधि पार्थेषु राजसूये तथा त्वया ।
आहृतेऽहं नरश्रेष्ठ त्वां सभाजयिता पुनः ॥ १०
तमब्रवीन्महाराजो धार्तराष्ट्रो महायशाः ।
सत्यमेतत्त्वया वीर पाण्डवेषु दुरात्मसु ॥ ११
निहतेषु नरश्रेष्ठ प्राप्ते चापि महाक्रतौ ।
राजसूये पुनर्वीर त्वं मां संवर्धयिष्यसि ॥ १२
एवमुक्त्वा महाप्राज्ञः कर्णमाश्लिष्य भारत ।
राजसूयं क्रतुश्रेष्ठं चिन्तयामास कौरवः ॥ १३
सोऽब्रवीत्सुहृदश्चापि पार्श्वस्थान्नृपसत्तमः ।
कदा तु तं क्रतुवरं राजसूयं महाधनम् ।
निहत्य पाण्डवान्सर्वानाहरिष्यामि कौरवाः ॥ १४
तमब्रवीत्तदा कर्णः शृणु मे राजकुञ्जर ।
पादौ न धावये तावद्यावन्न निहतोऽर्जुनः ॥ १५
अथोत्क्रुष्टं महेष्वासैर्धार्तराष्ट्रैर्महारथैः ।

C. 3. 15342
B. 3. 257. 18
K. 3. 258. 19

---

न्सर्वानहं त्वति; K1. 2 क्रतुः सर्वांस्त्वयं ह्यति; K3. 4 D1–3. 5 T2 क्रतून्सर्वानयं ह्यति; T1 इति सर्वानलंकृतान्; G1 क्रतून्सर्वानवाप्स्यसि. — After 4, T1 G1. 2. 4 M ins.:

1165* प्रवर्तितो ह्ययं राज्ञा धार्तराष्ट्रेण धीमता ।
[ T1 M क्रतुः (M2 शत्रुः) प्रवर्तितो राज्ञा धार्त° etc. ]

**5** a) K3 Dc D1. 3 नाहुष°. B4 T2 G1 चैव (for चापि). — b) D5 मांधाता भरतर्षभ; G2 °भिरतस्तथा. — c) Ś1 K1. 2 B4 D5 T2 M एतं (for एनं). — d) B2 भूताः सर्वे; T1 पूतात्मानो (for पूताः सर्वे).

**6** b) Ś1 K1. 4 B2 °र्षभः. — c) B4 विवेश च (for प्रविवेश). — d) Ś1 सुवेश्म च; T2 G1 स्वयमेव. B1 T2 G1. 4 नराधिप; M1 परंतपः.

**7** a) K1 नृपः (for ततः). G2. 4 M पादान् (for पादौ). — K1 om. (? hapl.) $7^{b}$–$9^{a}$. — c) B D (except D1–3. 5) G3 °कृपादीनां. — d) S (except T1 G3) भारत (for धीमतः).

**8** K1 om. 8 (cf. v.l. 7). — a) Hypermetric! Ś1 K2. 4 B4 D2. 3 कनिष्ठैश्च; T1 कनीयो हि. — b) K3. 4 B D T2 G3 °नंदनः (for °वत्सलः).

**9** K1 om. $9^{a}$ (cf. v.l. 7). — a) Ś1 K2 तमुवाच (for °त्थाय). K3 B2. 4 Dn D2–4. 6 T2 G3 महाराजं; K4 तदा राजन्. — b) Ś1 K1. 2 महद् (for ऽब्रवीद्). — M2 om. (hapl.) $9^{d}$–$12^{a}$. — d) T2 G1 क्रतूत्तमः; G4 मम क्रतुः; M1 त्वया क्रतुः.

**10** M2 om. 10 (cf. v.l. 9). — c) K4 B2 T2 G4 [ऽ]यं; D2 च (for ऽहं). Ś1 K D2. 3 M1 नृप° (for नर°). T1 आहूतोयं नृपश्रेष्ठ; G1 आहृते भरतश्रेष्ठ.

**11** M2 om. 11 (cf. v.l. 9). — a) K4 महाबाहुर्; G1 महाराज. — Before $11^{cd}$, T2 G1. 2 ins. दुर्योधनः. — c) Ś1 K1. 2. 4 D2. 3 T1 एव; D4 एतं (for एतत्). K2 च त्वां वीर; B1–3 D (except D1–3. 5) G3 त्वयोक्तं हि (for त्वया वीर). — d) Dc D3 T G1 महात्मसु (for दुरा°).

**12** M2 om. $12^{a}$ (cf. v.l. 9). — a) K1 नृपश्रेष्ठ; K3 वर°; B1 कुरु°; T1 महावीर; T2 G1. 2 रणे वीर्यात्. — c) T1 G4 महावीर (for पुनर्वीर). — d) K3 B1–3 D (except D1–3) T2 G3 त्वमेवं वर्धं°; B4 M त्वं मां वर्धाप°; T1 त्वं मां वै वर्ध°.

**13** a) B D (except D1–3) T G1. 3 महाराज; G2. 4 महेष्वासः (for महाप्राज्ञः). — b) Ś1 K1. 2. 4 आश्रित्य (for आश्लिष्य). — c) K4 क्रतुवरं; D1 कुरुश्रेष्ठं. — d) M1 भारतः (for कौरवः).

**14** Dc2 D3 om. (? hapl.) 14. — a) T1 G1. 4 M अब्र° (for सोऽब्र°). B Dn D4. 6 T1 G3 कौरवांश्चापि (for सुहृद°). — b) D1 T1 G1. 2 M1 नृप (T1 नर) सत्तम. — After $14^{ab}$, S (except G3) ins.:

1166* राधेयसौबलादीन्वै धार्तराष्ट्रो महीपतिः ।
[ T2 G1 °सौबलान्वीक्ष्य. ]

— c) K1. 2 B2–4 G1 M नु (for तु). — d) Ś1 K1. 2 T1 महाक्रतुं.

**15** b) Ś1 K1. 2 राजपुंगव; K4 राजसत्तम. — After 15, K2 B Dc Dn D2. 3 (marg. *sec. m.*). 4–6 G3 ins.:

1167* कीलालजं न खादेयं करिष्ये चासुरव्रतम् ।

C. 3. 15342
B. 3. 257. 18
K. 3. 258. 19

प्रतिज्ञाते फल्गुनस्य वधे कर्णेन संयुगे ।
विजितांश्चाप्यमन्यन्त पाण्डवान्धृतराष्ट्रजाः ॥ १६
दुर्योधनोऽपि राजेन्द्र विसृज्य नरपुंगवान् ।
प्रविवेश गृहं श्रीमान्यथा चैत्ररथं प्रभुः ।
तेऽपि सर्वे महेष्वासा जग्मुर्वेश्मानि भारत ॥ १७
पाण्डवाश्च महेष्वासा दूतवाक्यप्रचोदिताः ।
चिन्तयन्तस्तमेवार्थं नालभन्त सुखं क्वचित् ॥ १८
भूयश्च चारै राजेन्द्र प्रवृत्तिरुपपादिता ।
प्रतिज्ञा सूतपुत्रस्य विजयस्य वधं प्रति ॥ १९
एतच्छ्रुत्वा धर्मसुतः समुद्विग्नो नराधिप ।
अभेद्यकवचं मत्वा कर्णमद्भुतविक्रमम् ।
अनुस्मरंश्च संक्लेशान्न शान्तिमुपयाति सः ॥ २०
तस्य चिन्तापरीतस्य बुद्धिर्जज्ञे महात्मनः ।
बहुव्यालमृगाकीर्णं त्यक्तुं द्वैतवनं वनम् ॥ २१
धार्तराष्ट्रोऽपि नृपतिः प्रशशास वसुंधराम् ।
भ्रातृभिः सहितो वीरैर्भीष्मद्रोणकृपैस्तथा ॥ २२
संगम्य सूतपुत्रेण कर्णेनाहवशोभिना ।
दुर्योधनः प्रिये नित्यं वर्तमानो महीपतिः ।
पूजयामास विप्रेन्द्रान्क्रतुभिर्भूरिदक्षिणैः ॥ २३
भ्रातॄणां च प्रियं राजन्स चकार परंतपः ।
निश्चित्य मनसा वीरो दत्तभुक्तफलं धनम् ॥ २४

इति श्रीमहाभारते आरण्यकपर्वणि त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥ समाप्तं घोषयात्रापर्व ॥

---

नास्तीति नैव वक्ष्यामि याचितो येन केनचित् ।

**16** $^{a}$) $K_4$ $M_2$ अथोत्कृष्टं; $G_{1.4}$ °द्धुष्टं; $G_2$ °द्धृष्टं. $T_2$ $G_1$ महाराज (for महेष्वासैर्). — $^{c}$) $K_{2.4}$ B D $G_3$ फाल्गुनस्य; $K_3$ अर्जुनस्य. — After 16, S (except $G_3$) ins.:

1168* तदा प्रतिज्ञामारुह्य सूतपुत्रेण भाषिते ।

**17** $^{a}$) T M [ऽ]थ (for ऽपि). $B_2$ $D_{4.6}$ $G_{3.4}$ $M_2$ राजेंद्रो. — $^{b}$) $T_1$ विजित्य; M °हृत्य (for °सृज्य). $D_1$ M नरपुंगवः; $G_1$ च नराधिप. — $^{c}$) $K_4$ $D_{1-3}$ धीमान्; T राजन्; $G_1$ राजा (for श्रीमान्). — $^{d}$) $B_2$ (m as in text) सुखं; $B_4$ विभुः; Dc $D_{1.5}$ हरिः; T $G_{1.4}$ M तथा; $G_2$ प्रति (for प्रभुः). $K_3$ पूज्यमानश्च बंदिभिः. — $D_3$ om. (hapl.) $17^{f}$–$18^{a}$. — After 17, $K_4$ $D_{1.2}$ ins.:

1169* कर्णोऽपि स्वगृहं गत्वा मुदितो बान्धवैः सह ।
प्रददौ वित्तमर्थिभ्यो धनाध्यक्ष इवापरः ।;

while S (except $G_3$) ins.:

1170* स्वानि स्वानि महाराज भीष्मद्रोणादयो नृपाः ।

**18** $D_3$ om. $18^{a}$ (cf. v.l. 17). — $^{a}$) $K_3$ $M_1$ पांडवापि; $G_4$ °स्तु. — $^{b}$) $D_1$ °प्रणोदिताः.

**19** $^{a}$) S (except $G_3$) भूयश्चारैर्नृपश्रेष्ठ. — $^{d}$) $K_3$ अर्जुनस्य; $B_4$ विजानंतु (for विजयस्य).

**20** $^{a}$) $Ś_1$ $K_{1.2}$ धर्मपुत्रः; T $G_1$ °राजः. — $^{b}$) $K_{3.4}$ $B_{1.2}$ Dc $D_{1-3}$ $T_2$ $G_3$ $M_1$ नराधिपः. — After $20^{ab}$, S (except $G_3$) ins.:

1171* अधोमुखश्चिरं तस्थौ किं कार्यमिति चिन्तयन् ।

— $^{c}$) $B_4$ Dc $D_{1.2}$ $M_1$ अभेद्यं कवचं. $B_1$ ज्ञात्वा. — $^{e}$) $T_2$ $G_{1.4}$ सु- (for च). $K_1$ $T_2$ $G_{1.2}$ -संक्लेशं. — $^{f}$) T $G_{1.2.4}$ उपजग्मि($T_1$ °ज्ञि)वान्; M उपयान्नृपः (for °याति सः).

**21** $^{c}$) $Ś_1$ $K_{1.2}$ महाव्यालमृगा°; $B_3$ बहुव्यालगणा°; $D_2$ बहुव्यालसमा°. — $^{d}$) $K_3$ $D_{1.3}$ T $G_{1.2.4}$ सरः (for वनम्).

**22** $^{a}$) $Ś_1$ $K_{1.2}$ [ऽ]पि राजर्षिः; $T_2$ $G_1$ नरपतिः (for ऽपि नृपतिः). — $^{c}$) Dc transp. भ्रातृभिः and सहितो. $M_2$ वीरो. — $^{d}$) $B_2$ भीष्मद्रोणकृपादिभिः; Dc द्रोणभीष्मकृपैस्तथा.

**23** $^{a}$) $T_1$ संगत्य. — After $23^{ab}$, S (except $G_3$) ins.:

1172* सततं प्रीयमाणो वै देविना सौबलेन च ।

— $^{d}$) $Ś_1$ $K_{1.2}$ महामतिः; $K_3$ $B_{1.3.4}$ Dc Dn $D_{1.4.6}$ $G_3$ महीभृतां; $B_2$ $D_{2.3}$ महीक्षितां; $T_2$ $G_1$ $M_1$ महीपतेः.

**24** $^{a}$) $K_3$ कार्यं (for राजन्). — $^{c}$) $K_3$ वीरं; $T_2$ $G_1$ राजन्. — $^{d}$) =2. 5. $101^{b}$ : 5. 39. $51^{d}$.

Colophon. — *Major parvan:* $Ś_1$ $K_1$ $Dn_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* $K_{3.4}$ $B_1$ Dc $D_{1-3.5}$ $M_2$ (all om. sub-parvan name) mention only धार्त($Dc_2$ $D_3$ धृत)राष्ट्रयज्ञ (followed, except in $M_2$, by समाप्त); $B_{2-4}$ $Dn_1$. $n_3$ $D_{4.6}$ $G_3$, likewise, only दुर्योधनयज्ञ (followed, except in $B_2$, by समाप्त). — *Adhy. name:* $M_2$ कर्णप्रतिज्ञानं. — *Adhy. no.* (figures, words or both): Dn 255 ($Dn_3$ 256); $D_1$ 258; $T_1$ $G_4$ M ($M_2$ *inf. lin.*) 247 ($M_2$ orig. 249); $T_2$ $G_1$ 244; $G_2$ 246. — *Śloka no.:* Dn 28; $D_1$ 27.

# २४४

जनमेजय उवाच ।
दुर्योधनं मोचयित्वा पाण्डुपुत्रा महाबलाः ।
किमकार्षुर्वने तस्मिंस्तन्ममाख्यातुमर्हसि ॥ १
वैशंपायन उवाच ।
ततः शयानं कौन्तेयं रात्रौ द्वैतवने मृगाः ।
स्वप्नान्ते दर्शयामासुर्बाष्पकण्ठा युधिष्ठिरम् ॥ २
तानब्रवीत्स राजेन्द्रो वेपमानान्कृताञ्जलीन् ।
ब्रूत यद्वक्तुकामाः स्थ के भवन्तः किमिष्यते ॥ ३
एवमुक्ताः पाण्डवेन कौन्तेयेन यशस्विना ।
प्रत्यब्रुवन्मृगास्तत्र हतशेषा युधिष्ठिरम् ॥ ४
वयं मृगा द्वैतवने हतशिष्टाः स्म भारत ।
नोत्सीदेम महाराज क्रियतां वासपर्ययः ॥ ५
भवन्तो भ्रातरः शूराः सर्व एवास्त्रकोविदाः ।
कुलान्यल्पावशिष्टानि कृतवन्तो वनौकसाम् ॥ ६
बीजभूता वयं केचिदवशिष्टा महामते ।
विवर्धेमहि राजेन्द्र प्रसादात्ते युधिष्ठिर ॥ ७
तान्वेपमानान्वित्रस्तान्बीजमात्रावशेषितान् ।
मृगान्दृष्ट्वा सुदुःखार्तो धर्मराजो युधिष्ठिरः ॥ ८
तांस्तथेत्यब्रवीद्राजा सर्वभूतहिते रतः ।
तथ्यं भवन्तो ब्रुवते करिष्यामि च तत्तथा ॥ ९
इत्येवं प्रतिबुद्धः स रात्र्यन्ते राजसत्तमः ।
अब्रवीत्सहितान्भ्रातॄन्दयापन्नो मृगान्प्रति ॥ १०
उक्तो रात्रौ मृगैरस्मि स्वप्नान्ते हतशेषितैः ।
तनुभूताः स्म भद्रं ते दया नः क्रियतामिति ॥ ११
ते सत्यमाहुः कर्तव्या दयास्माभिर्वनौकसाम् ।
साष्टमासं हि नो वर्षं यदेनानुपयुञ्ज्महे ॥ १२

C. 3. 15364
B. 3. 258. 12
K. 3. 259. 12

## 244

**1** a) Ś1 K Dc D1–3. 5 पांडुपुत्रा; B (B4 marg.) Dn D4. 6 G3 मोक्षयित्वा (for मोच°). — b) Ś1 K Dc D1–3. 5 मोचयित्वा (for पाण्डु°). S (except G3) महारथाः. — c) G4 किमकुर्वन् (for °कार्षुर्). — d) G1 तत्त्वमा° (for तन्ममा°). K4 समा° (for ममा°). D5 समाख्यातुं त्वमर्हसि; T1 तन्ममाचक्ष्व सर्वशः.

**2** a) B2 नृपतिं; B4 राजानं (for कौन्तेयं).

**3** D5 T1 om. (hapl.) 3–4. — b) Ś1 Dc वेपमानः. Dc कृतांजलिः. — c) B1 तु (for स्थ). — d) K4 इच्छते; B4 इच्छथ (for इष्यते). T2 G2. 4 M तत्करिष्याम्यशेषतः; G1 करिष्ये तदशेषतः.

**4** D5 T1 om. 4 (cf. v.l. 3). — b) G4 महात्मना (for यश°). — c) G1 त्रस्ता (for तत्र).

**5** b) B2 S (except G3) हतशेषाः. B1–3 Dn D4. 6 T1 G3 तु भारत; M1 युधिष्ठिर (for स्म भारत). — c) G1 नोत्सादनं (for नोत्सीदेम). — d) G1 °तां पांडवर्षभ.

**6** a) Ś1 Dn2 D2. 3 (by corr.) G3 भवतो. — b) Dc सर्वशस्त्रास्त्र°. — c) Ś1 °शेषाणि.

**7** a) B3 वने (for वयं). — b) Ś1 K Dc D1–3. 5 T2 G1 महीपते; T1 विशां पते (for महामते). — c) Ś1 K1. 2 विवर्धेम महाराज; M1 विवृधेमहि रा°.

**8** Ś1 K1. 3. 4 om. (? hapl.) 8. — c) D1 सुदुःखार्तान्. — d) B1 धर्मपुत्रो.

**9** a) T2 G1 [ए]व (for [इ]ति). — c) B2–4 Dn D4. 6 G3 यथा (for तथ्यं). — d) K3 वचस् (for च तत्). S (except G3) तत्करिष्यामि वो वचः.

**10** a) T G4 M1 सन् (for स). — b) D5 व्युष्टायां (for रात्र्यन्ते). S (except G3) व्युष्टायां निशि पार्थिवः (M1 भारतः). — d) B4 दयावांस्तान्; D1 दयावंतो.

**11** a) Dc2 T1 G4 अस्मिन्. — b) Dc मृगशेषितैः; T1 हतशेषिभिः. — c) K3 तेन्नभूताः; B1 T1 G1 अनु°; B2–4 Dc Dn D2. 4–6 G3 तंतु°; D1 M1 तनू°. T1 अनुभूतास्तु दृश्यंते.

**12** a) T2 G1 कर्तव्यं. — b) Dc दयास्माकं; T2 G1 यदस्माभिर्. — c) T2 हृष्टमासं; G2 हृष्टामांसं. T2 G1 वने (for हि नो). — d) T2 G1 यदेतद्; G2 यदेतम्; G4 M यदेतान्. Ś1 D4 उपयुज्महे; K1. 2 °भुज्महे; K3 °यत्स्महे; K4 °भुंक्ष्वहे; B1 °भुंज्महे; B2–4 °भुंजते; B4m G3 °भुंक्ष्महे; Dc °युंजहे; Dn (Dn3 before corr.) D3 °युंक्ष्महे; T2 °युज्महि; G1 °युंक्ष्वहि; G2. 4 M1 °युंज्महि; M2 °युग्महि. — After 12, S (except G3) ins. :

पुनर्बहुमृगं रम्यं काम्यकं काननोत्तमम् ।
मरुभूमेः शिरः ख्यातं तृणबिन्दुसरः प्रति ।
तत्रेमा वसतीः शिष्टा विहरन्तो रमेमहि ॥ १३
ततस्ते पाण्डवाः शीघ्रं प्रययुर्धर्मकोविदाः ।
ब्राह्मणैः सहिता राजन्ये च तत्र सहोषिताः ।
इन्द्रसेनादिभिश्चैव प्रेष्यैरनुगतास्तदा ॥ १४
ते यात्वानुसृतैर्मार्गैः स्वन्नैः शुचिजलान्वितैः ।
ददृशुः काम्यकं पुण्यमाश्रमं तापसायुतम् ॥ १५
विविशुस्ते स्म कौरव्या वृता विप्रर्षभैस्तदा ।
तद्वनं भरतश्रेष्ठाः स्वर्गं सुकृतिनो यथा ॥ १६

इति श्रीमहाभारते आरण्यकपर्वणि चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥ समाप्तं मृगस्वप्नभयपर्व ॥

## २४५

वैशंपायन उवाच ।
वने निवसतां तेषां पाण्डवानां महात्मनाम् ।
वर्षाण्येकादशातीयुः कृच्छ्रेण भरतर्षभ ॥ १
फलमूलाशनास्ते हि सुखार्हा दुःखमुत्तमम् ।
प्राप्तकालमनुध्यान्तः सेहुरुत्तमपूरुषाः ॥ २
युधिष्ठिरस्तु राजर्षिरात्मकर्मापराधजम् ।
चिन्तयन्स महाबाहुर्भ्रातृणां दुःखमुत्तमम् ॥ ३
न सुष्वाप सुखं राजा हृदि शल्यैरिवार्पितैः ।

---

1173*　　　अर्जुनः ।
त्वदधीना वयं राजन्मा त्वमस्मान्विचारय ।
यत्रैव मन्यसे पार्थ तत्र गच्छामहे वयम् ।

**13** Before 13, S (except G3) ins. युधिष्ठिरः. — b) T G1 M श्रूयते काम्यकं वनं. — c) Dn स्थानं (!); M2 ख्यातस्. G1. 2. 4 मरुभूः शिखरं ख्यातं. — e) B Dn D4. 6 G3 M2 तत्रेमां वसतिं शिष्टां; T2 G1. 2. 4 तत्र मासान्वने शिष्टान्. — f) Ś1 K Dc D1–3. 5 वसेमहि; B1. 2 रमामहे. — After 13, T2 G1. 2. 4 ins.:

1174*　　　वैशंपायनः ।
इत्युक्तास्ते महात्मानः पाण्डवेन महात्मना ।

**14** T2 G1. 2 om. 14ab. — b) B1 युद्ध° (for धर्म°). — d) Ś1 K1 यैस्तैस्तत्र; K3 Dc2 ये तैस्तत्र; K4 Dc1 D2. 3 T1 G4 ये ते तत्र; D1 य एतेत्र; M ये तत्रासन्. D5 ये तत्र वनवासिनः; T2 G1. 2 जग्मुस्तत्र सहोषितैः. — f) T2 G1. 2 भृत्यैर् (for प्रेष्यैर्). Dc अनुगतैस्. K1. 2. 4 B1 D1–3. 5 G3 तथा; T2 G1 च ते.

**15** a) K4 ते याताः; T1 गत्वा ते. K4 D3 T1 G2. 4 M1 सुसुखैर्; B3 M2 [अ]नुगतैर्; T2 तु रथैर्; G1 तु सुखैर्. — b) Ś1 K1. 2. 4 D1. 3 शुभैः; B1 श्वभ्रैः; D5 क्षुण्णैः; T1 स्वच्छैः; T2 G1. 3 शनैः. — c) T1 विविशुः (cf. 16a). G1 पुण्याम्; M2 रम्यम्. — d) K1 तापसावृतं; K2. 4 B Dc Dn D1. 4. 6 T G4 M2 तपसा युतं (B3 T °न्वितं; Dc1 युताः; Dc2 °न्विताः); G1. 2 तापसान्वितं; M1 तापसैर्युतं.

**16** a) T G1 M2 ददृशु° (for विविशु°); cf. 15c. — b) K4 Dc D1–3 विप्रर्षिभिस्. K4 B1 D2. 3 M2 तथा. — c) M °श्रेष्ठ. G1 तद्वनं विविशुः पार्थाः.

Colophon. — *Major parvan:* Ś1 K1. 2 Dn2 G2. 4 आरण्य. — *Sub-parvan:* K3 B4 Dc D1–3 M2 मृगस्वप्नदर्शन; K4 B2. 3 Dn D4. 6 G3 मृगस्वप्न; B1 स्वप्नदर्शन; D5 मृगस्वप्नोद्भवप्रदर्शन. — *Adhy. no.* (figures, words or both): Dn 256 (Dn3 257); D1 259; T1 G4 M (M2 *inf. lin.*) 248 (M2 orig. 250); T2 G1 245; G2 247. — *Śloka no.:* Dn D1 17.

### 245

**2** a) K1 °शिन° (for °शना°). Dn3 D4. 6 G3 [ऽ]ति; T1 [ऽ]पि (for हि). — b) K4 G4 सुखम् (for दुःखम्). — Ś1 D1 om. (hapl.) 2c–3d. — c) T2 प्राप्य- (for प्राप्त-). T2 G1. 2 °प्राप्ताः (for °ध्यान्तः). D5 प्राप्तकालमनुध्यत्वात्. — d) K4 D2. 3 T1 सेहुरुत्तमपौरुषाः; B2. 3. 4 (m as in text) Dn D4. 6 G3 सेहिरे वरपूरुषाः; T2 तेरुस्ते पुरुषर्षभाः.

**3** Ś1 D1 om. 3 (cf. v.l. 2). — c) K1. 3. 4 D5 चिंतयंस्तन्; S (except G3) अचिंतयन्.

**4** a) T1 महाराज; T2 चिरं राजन्; G2. 4 M1 तदा राजा (for सुखं राजा). — b) Ś1 K1. 2 इवार्दितः; B1 T1 G1 M1 इवार्पितः; T2 इवाभवत्. — c) Ś1 K1. 2. 4 D2. 3 अनुपश्यन्स; D1 अनुसंपश्यन्. T1 दौरात्म्यमात्मनः पश्यन्. — d)

दौरात्म्यमनुपश्यंस्तत्काले द्यूतोद्भवस्य हि ॥ ४
संस्मरन्परुषा वाचः सूतपुत्रस्य पाण्डवः ।
निःश्वासपरमो दीनो बिभ्रत्कोपविषं महत् ॥ ५
अर्जुनो यमजौ चोभौ द्रौपदी च यशस्विनी ।
स च भीमो महातेजाः सर्वेषामुत्तमो बली ।
युधिष्ठिरमुदीक्षन्तः सेहुर्दुःखमनुत्तमम् ॥ ६
अवशिष्टमल्पकालं मन्वानाः पुरुषर्षभाः ।
वपुरन्यदिवाकार्षुरुत्साहामर्षचेष्टितैः ॥ ७
कस्यचित्त्वथ कालस्य व्यासः सत्यवतीसुतः ।
आजगाम महायोगी पाण्डवानवलोककः ॥ ८
तमागतमभिप्रेक्ष्य कुन्तीपुत्रो युधिष्ठिरः ।
प्रत्युद्गम्य महात्मानं प्रत्यगृह्णाद्यथाविधि ॥ ९
तमासीनमुपासीनः शुश्रूषुर्नियतेन्द्रियः ।
तोषयन्प्रणिपातेन व्यासं पाण्डवनन्दनः ॥ १०
तानवेक्ष्य कृशान्पौत्रान्वने वन्येन जीवतः ।
महर्षिरनुकम्पार्थमब्रवीद्बाष्पगद्गदम् ॥ ११
युधिष्ठिर महाबाहो शृणु धर्मभृतां वर ।
नातप्ततपसः पुत्र प्राप्नुवन्ति महत्सुखम् ॥ १२
सुखदुःखे हि पुरुषः पर्यायेणोपसेवते ।
नात्यन्तमसुखं कश्चित्प्राप्नोति पुरुषर्षभ ॥ १३
प्रज्ञावांस्त्वेव पुरुषः संयुक्तः परया धिया ।
उदयास्तमयज्ञो हि न शोचति न हृष्यति ॥ १४
सुखमापतितं सेवेद्दुःखमापतितं सहेत् ।
कालप्राप्तमुपासीत सस्यानामिव कर्षकः ॥ १५
तपसो हि परं नास्ति तपसा विन्दते महत् ।
नासाध्यं तपसः किंचिदिति बुध्यस्व भारत ॥ १६

C. 3. 15386
B. 3. 259. 17
K. 3. 260. 17

---

Ś$_1$ K D$_{1.3.5}$ M$_1$ कलेर्; B$_1$ कालं. Ś$_1$ K$_{3.4}$ D$_{1.3.5}$ T$_1$ ह; K$_{1.2}$ च (for हि). B$_1$ Dc काले (B$_1$ °लं) द्यूतोद्भवं स्म ह; B$_3$ G$_3$ काले द्यूतोद्भवं प्रति (G$_3$ स हि).

**5** $^a$) T$_1$ उवाच (for संस्मरन्). — $^c$) Some MSS. निश्वास°. — $^d$) S (except G$_3$) दध्रे (for बिभ्रत्).

**6** $^c$) G$_4$ भीमसेनो महा°. — $^d$) S (except T$_2$ G$_3$) बले (for बली). — After 6$^{cd}$, S (except G$_3$) ins.:

1175* चिरस्य जातधर्मज्ञं सासूयमिव ते तदा ।

— $^e$) Ś$_1$ उपे°; K$_{1.2}$ अपे° (for उदी°). — $^f$) Ś$_1$ K$_{1.2}$ सेहिरे दुःखमुत्तमं.

**7** $^a$) Ś$_1$ ह्यल्पकालं; G$_1$ च कालं तु; G$_{2.4}$ त्वल्प°; M$_1$ चाल्प°. K$_4$ D$_{2.3}$ अवशिष्टाल्पकालं च. — $^b$) B$_1$ पुरुषोत्तमाः. — $^c$) T$_1$ अन्य; G$_1$ अन्यम् (for अन्यद्). — $^d$) G$_1$ °चोदितैः.

**8** 8$^a$=1. 123. 68$^a$. — 8$^b$=1. 157. 1$^d$: 3. 27. 20$^d$: (var.) 1. 100. 16$^c$. — $^c$) =3. 37. 20$^c$. Ś$_1$ K$_{1-3}$ Dc D$_{1.5}$ महातेजाः (for °योगी). — $^d$) =3. 180. 44$^d$.

**9** $^a$) T$_1$ तमापतंतमुद्वीक्ष्य.

**10** $^a$) Ś$_1$ उपा°; G$_{2.4}$ समा° (for तमा°). B$_1$ च शुश्रूषुर्; Dc उपासीनं; G$_2$ उपासीनाः. — $^b$) B$_1$ नियतो (for शुश्रूषुर्). K$_4$ विजितेंद्रियः; D$_1$ G$_2$ नियतेंद्रियाः. — $^c$) Ś$_1$ K Dc D$_{1-3}$ प्रणिधानेन. G$_{2.4}$ M तोषयामास शौचेन. — $^d$) K$_{1.3}$ G$_1$ पांडवनंदन; B$_4$ सत्यवतीसुतं.

**11** $^a$) Ś$_1$ K$_{1.3.4}$ Dc D$_{1-3}$ समीक्ष्य; T$_2$ G$_1$ प्रेक्ष्य च (for अवेक्ष्य). T$_1$ समवेक्ष्य तु तान्पौत्रान्. — $^b$) B$_3$ Dc$_2$ Dn$_1$ D$_{1.3}$ T$_2$ G$_4$ जीवित: (D$_1$ G$_4$ °नः); G$_2$ जीवनः. — $^c$) Ś$_1$ K Dc D$_{1.3.5}$ °रनुकंपंस्तान्. — $^d$) D$_5$ वाक्य° (for बाष्प°).

**12** $^a$) K$_4$ महाप्राज्ञ; D$_{2.3}$ महाराज. — $^c$) Ś$_1$ कामं; K$_3$ B$_{2.3}$ Dn D$_{1.4.6}$ T$_2$ G$_{2.3}$ लोके; B$_{1.4}$ T$_1$ पुंसः; D$_3$ शीघ्रं; M$_2$ पार्थं (for पुत्र). — $^d$) B$_1$ Dn D$_1$ M$_2$ महासुखं; T$_2$ G$_1$ महत्फलं.

**13** $^a$) T$_2$ G$_1$ सुखदुःखं. — $^b$) B$_1$ [उ]पभुंजते; T$_2$ G$_1$ च सेवते. — $^c$) Ś$_1$ K D$_{1.3.5}$ न ह्यत्यंतं सुखं; B Dc Dn D$_{2.4.6}$ G$_3$ न ह्यनंतं सुखं; T$_1$ M नात्यंतं हि (T$_1$ च) सुखं. — $^d$) K$_4$ Dc D$_{2.3.5}$ भरतर्षभ; T$_2$ M$_2$ पुरुषर्षभः.

**14** $^a$) G$_4$ भाग्य° (for प्रज्ञा°). K$_1$ एव; K$_4$ D$_{2.3}$ चैव; D$_1$ त्वेष (for त्वेव). — $^b$) K$_4$ संसक्तः; D$_2$ M$_2$ स युक्तः. D$_1$ युक्तः परमया धिया. — $^c$) K$_4$ B D (except D$_{1.3.5}$) G$_3$ °स्तमनज्ञो. — $^d$) B$_{2.3}$ Dn D$_{4.6}$ G$_3$ transp. शोचति and हृष्यति. Dc कुप्यति (for हृष्य°).

**15** $^a$) T$_2$ G$_{1.2}$ सेहेद्; G$_4$ विद्वान् (for सेवेद्). Dc दुःखं च पतितं से°. — $^b$) Ś$_1$ K$_{1.2}$ तथा; B$_{2.3}$ Dn D$_{4.6}$ वहेत्; D$_3$ महत्; T$_1$ G$_4$ सहन्; G$_1$ सहे; M$_2$ सह. — Ś$_1$ K$_{1.2}$ om. 15$^c$–16$^b$. — $^c$) K$_3$ D$_1$ T$_1$ प्राप्तकाल°; G$_4$ काल्यप्राप्ति° (for कालप्राप्त°). — $^d$) K$_4$ D$_{1.2}$ इव कर्षुकः; Dc उपकर्षकः.

**16** Ś$_1$ K$_{1.2}$ om. 16$^{ab}$ (cf. v.l. 15). — $^c$) Ś$_1$ K$_1$ तपसां; S (except G$_3$ M$_1$) °सा.

**17** $^b$) K$_1$ संविभागे दमश्च सः. — Ś$_1$ K$_{1.2}$ om. 17$^{cd}$

सत्यमार्जवमक्रोधः संविभागो दमः शमः ।
अनसूयाविहिंसा च शौचमिन्द्रियसंयमः ।
साधनानि महाराज नराणां पुण्यकर्मणाम् ॥ १७
अधर्मरुचयो मूढास्तिर्यग्गतिपरायणाः ।
कृच्छ्रां योनिमनुप्राप्य न सुखं विन्दते जनाः ॥ १८
इह यत्क्रियते कर्म तत्परत्रोपभुज्यते ।
तस्माच्छरीरं युञ्जीत तपसा नियमेन च ॥ १९
यथाशक्ति प्रयच्छेच्च संपूज्याभिप्रणम्य च ।
काले पात्रे च हृष्टात्मा राजन्विगतमत्सरः ॥ २०
सत्यवादी लभेतायुरनायासमथार्जवी ।
अक्रोधनोऽनसूयश्च निर्वृतिं लभते पराम् ॥ २१
दान्तः शमपरः शश्वत्परिक्लेशं न विन्दति ।
न च तप्यति दान्तात्मा दृष्ट्वा परगतां श्रियम् ॥ २२
संविभक्ता च दाता च भोगवान्सुखवान्नरः ।
भवत्यहिंसकश्चैव परमारोग्यमश्नुते ॥ २३
मान्यान्मानयिता जन्म कुले महति विन्दति ।
व्यसनैर्न तु संयोगं प्राप्नोति विजितेन्द्रियः ॥ २४
शुभानुशयबुद्धिर्हि संयुक्तः कालधर्मणा ।
प्रादुर्भवति तद्योगात्कल्याणमतिरेव सः ॥ २५

युधिष्ठिर उवाच ।

भगवन्दानधर्माणां तपसो वा महामुने ।
किं स्विद्बहुगुणं प्रेत्य किं वा दुष्करमुच्यते ॥ २६

व्यास उवाच ।

दानान्न दुष्करतरं पृथिव्यामस्ति किंचन ।
अर्थे हि महती तृष्णा स च दुःखेन लभ्यते ॥ २७
परित्यज्य प्रियान्प्राणान्धनार्थं हि महाहवम् ।

---

(cf. v.l. 15). — $^{c}$) K$_4$ D$_{2.3}$ अहिंसा चानसूया च; K$_3$ D$_1$ T G$_{1.2.4}$ अनसूयाप्य(K$_3$ °यापि; D$_1$ °या त्व)हिंसा च. — $^{d}$) D$_5$ T$_2$ G$_1$ °निग्रहः; T$_1$ °संगमः; G$_2$ °संयमं. — $^{e}$) K$_3$ D$_{3.5}$ साधकानि; B$_{2.3}$ Dn D$_{2.4.6}$ G$_3$ पावनानि. S (except T$_2$ G$_3$) महाबाहो. — $^{f}$) K$_4$ नृणां वै (for नराणां).

**18** $^{b}$) G$_1$ तिर्यग्योनि°. — $^{c}$) T$_1$ G$_{2.4}$ गति° (for योनि°). B$_{1-3}$ Dn D$_{4.6}$ G$_3$ अनुप्राप्ता. — $^{d}$) B$_4$ (m as in text) महत् (for जनाः). Ś$_1$ K$_{1.2}$ B$_1$ D$_3$ न विंदंते (D$_3$ °ति) सुखं जनाः; S (except G$_3$) सुखं विंदंति नो जनाः. — After 18, K$_4$ D$_{2.3}$ ins.:

1176* कर्मभूमिरियं तात फलभूमिरसौ परा ।

**19** $^{a}$) Ś$_1$ कुरुते (for क्रियते). — $^{b}$) B$_{2.4}$ Dn D$_{1.4.6}$ G$_3$ °युज्यते (for °भुज्यते). — After 19$^{ab}$, B Dc D$_5$ ins.:

1177* मूले सिक्तस्य वृक्षस्य फलं शाखासु दृश्यते ।

**20** $^{a}$) Ś$_1$ B$_{2.4}$ Dn D$_{2.4.6}$ G$_3$ प्रयच्छेत (for °च्छेच्च). — $^{c}$) Ś$_1$ K$_{1.2}$ B Dn D$_{1.4-6}$ G$_3$ प्राप्ते (for पात्रे).

**21** $^{a}$) K D$_3$ M लभत्यायुर्; D$_5$ T$_2$ लभेदायुर्. — $^{b}$) Ś$_1$ अथार्जकः; K$_{1.2}$ B Dn D$_{2.4-6}$ T$_2$ G$_3$ अथार्जवं; K$_3$ Dc D$_{1.3}$ अथार्जवात्; K$_4$ अनामयः. — $^{c}$) Ś$_1$ Dc D$_4$ G$_{1.4}$ M$_1$ [ऽ]नसूयुश्च. — $^{d}$) K$_4$ B$_1$ D$_{1-3}$ निवृत्तिं.

**22** $^{a}$) K$_4$ D$_3$ प्रेत्य (for शश्वत्). — $^{b}$) K$_{1.3}$ Dc D$_1$ G$_4$ M परिक्लेशान्. — G$_1$ om. (hapl.) 22$^{c}$–24$^{b}$. — $^{c}$) M$_2$ कुप्यति (for त°). Ś$_1$ K$_{1.2}$ D$_1$ शांतात्मा; D$_3$ दीनात्मा.

**23** G$_1$ om. 23 (cf. v.l. 22). — $^{d}$) T$_2$ M °रोग्यसंयुतः.

**24** G$_1$ om. 24$^{ab}$ (cf. v.l. 22). — $^{a}$) K$_{3.4}$ B Dn D$_{2-6}$ G$_3$ M$_1$ मान्य-; Dc D$_1$ T$_1$ मान्यं; M$_2$ मान्या (for मान्यान्). — After 24$^{ab}$, S (except G$_3$) ins.:

1178* विन्दते सुखमत्यन्तमिह लोके परत्र च ।

— $^{c}$) K$_4$ नैव; T G$_{1.4}$ M न च.

**25** $^{a}$) G$_{2.4}$ शुभानुबंध°. — $^{b}$) B$_{3.4}$ M$_2$ कालकर्मणा. — $^{c}$) Dc संयोगात् (for तद्योगात्). — $^{d}$) T$_1$ G$_1$ ह; G$_{2.4}$ हि; M च (for सः).

**26** $^{c}$) K$_{3.4}$ D$_3$ किंचिद्बहु°. T$_1$ प्राप्य (for प्रेत्य). — G$_1$ om. 26$^{d}$–27$^{a}$.

**27** G$_1$ om. 27$^{a}$ (cf. v.l. 26). — $^{a}$) B$_{1.3}$ D (except D$_{1-3.5}$) T$_1$ G (G$_1$ om.) दुष्करं तात (G$_{2.4}$ पार्थ) (for दुष्करतरं). — $^{c}$) B$_1$ अर्थे तु; B$_2$ अर्थेषु; B$_{3.4}$ Dc$_1$ Dn D$_{5.6}$ T$_2$ G$_{1.3}$ M$_1$ अर्थे च; Dc$_2$ D$_4$ अर्थेन; M$_2$ अर्थेति. — $^{d}$) D$_1$ कृच्छ्रेण (for दुःखेन). — After 27, D$_2$ ins.:

1179* राजन्प्रत्यक्षमेवैतद्दृश्यते लोकसाक्षिकम् ।

**28** $^{b}$) Ś$_1$ K$_{1.2}$ धनार्थे; B$_1$ परार्थं. B$_{1-3}$ D (except D$_{1-3.5}$) G$_3$ °मते (for °हवम्). B$_4$ T$_1$ G$_{2.4}$ M प्रविशंति रणाजिरं; T$_2$ G$_1$ धनार्थे दुर्गमं स्थलं. — $^{c}$) B$_1$ आविशंति. Ś$_1$ K B$_1$ D$_{1.3}$ नरा (K$_4$ महा-) धीराः; T$_2$ G$_1$ महावीराः. B$_4$ T$_1$ G$_{2.4}$ M तथैव प्रतिपद्यंते; D$_5$ प्रविशंते महाधीराः. — After 28$^{c}$, T$_2$ G$_1$ ins.:

प्रविशन्ति नरा वीराः समुद्रमटवीं तथा ॥ २८
कृषिगोरक्ष्यमित्येके प्रतिपद्यन्ति मानवाः ।
पुरुषाः प्रेष्यतामेके निर्गच्छन्ति धनार्थिनः ॥ २९
तस्य दुःखार्जितस्यैवं परित्यागः सुदुष्करः ।
न दुष्करतरं दानात्तस्माद्दानं मतं मम ॥ ३०
विशेषस्त्वत्र विज्ञेयो न्यायेनोपार्जितं धनम् ।
पात्रे देशे च काले च साधुभ्यः प्रतिपादयेत् ॥ ३१
अन्यायसमुपात्तेन दानधर्मो धनेन यः ।
क्रियते न स कर्तारं त्रायते महतो भयात् ॥ ३२
पात्रे दानं स्वल्पमपि काले दत्तं युधिष्ठिर ।
मनसा सुविशुद्धेन प्रेत्यानन्तफलं स्मृतम् ॥ ३३
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
व्रीहिद्रोणपरित्यागाद्यत्फलं प्राप मुद्गलः ॥ ३४

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५ ॥

# २४६

युधिष्ठिर उवाच ।
व्रीहिद्रोणः परित्यक्तः कथं तेन महात्मना ।
कस्मै दत्तश्च भगवन्विधिना केन चात्थ मे ॥ १
प्रत्यक्षधर्मा भगवान्यस्य तुष्टो हि कर्मभिः ।

C. 3. 15406
B. 3. 260. 2
K. 3. 261. 2

---

1180* शास्त्रार्थकुशला भुवि ।
तथैव प्रतिपद्यन्ते.

— $^{d}$) $B_3$ धनार्थ° (for समुद्र°). $Ś_1$ $K_{1-3}$ Dc अटवीस्.

**29** $^{a}$) $Ś_1$ $D_2$ $T_1$ $G_{1.2}$ $M_2$ कृषिगोरक्षम्; $K_4$ $B_2$ कृषिगोरक्षम् ($B_2$ °क्ष्यम्); $B_{1.3}$ कृषि($B_3$ °षिं)गौरक्ष्यम्. $B_1$ $G_1$ $M_2$ इत्येते; $B_2$ अप्यन्ये (for इत्येके). — $^{b}$) $K_1$ Dc प्रतिपद्यंति. — $^{c}$) $M_1$ प्रेत्यताम्. — $K_2$ om. $29^{d}$–$31^{c}$. — $^{d}$) $Ś_1$ $K_1$ गच्छंति हि; $G_{2.4}$ नियच्छंति.

**30** $K_2$ om. 30 (cf. v.l. 29). — $^{a}$) $B_{1.2}$ Dn $D_{4-6}$ $G_3$ तस्माद् (for तस्य). B Dn $D_{4-6}$ $G_3$ $M_1$ [ए]व (for [ए]वं). — $^{b}$) $G_1$ हि (for सु-). — $^{c}$) $D_4$ $G_{3.4}$ सु- (for न). $K_3$ $G_{3.4}$ दानं; $K_4$ तात (for दानात्). $G_2$ सुदुष्करकरं दानं. — $^{d}$) $K_{3.4}$ दानात् (for तस्मात्). $Ś_1$ $K_{1.4}$ $D_{1-3}$ राजन्; $K_3$ तस्मान् (for दानं). $B_{2.4}$m परं मतं (for मतं मम). — After 30, $G_1$ ins.:

1181* तद्दुष्करतरं दानं तस्माद्दानं विशिष्यते ।

**31** $K_2$ om. $31^{abc}$ (cf. v.l. 29). — $^{a}$) $Ś_1$ K ($K_2$ om.) B $Dc_2$ $D_{1.2}$ $T_2$ $G_1$ तत्र; $T_1$ $G_{2.4}$ M तस्य (for त्वत्र). — $^{b}$) $T_2$ $G_1$ °नैवा° (for °नोपा°). — $^{c}$) $B_3$ Dn $D_{4-6}$ $G_3$ transp. देशे and काले. — $^{d}$) S (except $G_3$) प्रयतः (for साधुभ्यः). $B_1$ प्रतिपादनं. — After 31, $D_2$ ins.:

1182* श्रद्धया विधिवत्पात्रे दत्तस्यान्तो न विद्यते ।

**32** $^{a}$) B D (except $D_{1.3}$) $T_1$ $G_{2-4}$ अन्यायात् (for अन्याय-). — $^{b}$) $K_1$ $G_1$ दानधर्मौ; $B_2$ दानं सम्यग्. $Ś_1$ $K_{1.2}$ न चोदयः; $K_3$ विशां पते (for धनेन यः). — $^{c}$) $T_2$ $G_2$ कुरुते (for क्रियते). — $32^{d}$=Gītā (Vulg.) 2. 40.

**33** $^{a}$) $T_2$ $G_1$ न्यायार्जितं (for पात्रे दानं). — $^{b}$) $G_{2.4}$ दानं; $M_1$ दत्वा (for दत्तं). — $^{c}$) B D (except $D_{1-3}$) $G_{2-4}$ हि ($B_2$ तु) (for सु-). $T_1$ मनसा तु विशिष्टेन. — $^{d}$) $B_2$ प्रेत्यानंतफलप्रदं. — After 33, $K_4$ ins.:

1183* देशे काले च पात्रे च मुद्गलः श्रद्धयान्वितः ।
व्रीहिद्रोणं प्रदायाथ परमं पदमाप्तवान् ।

**34** $34^{ab}$ =5. 35. $5^{ab}$; etc., etc. — $^{d}$) $G_4$ M transp. यत् and फलं.

Colophon. — *Major parvan:* $Ś_1$ $K_{1.2}$ $Dn_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* $K_{3.4}$ $B_{2-4}$ Dc $Dn_1$. $n_3$ $D_{1-6}$ $G_3$ व्रीहिद्रौ($B_{2.4}$ °द्रो)णिक; $M_2$ व्रीहिद्रोण. — *Adhy. name:* $M_1$ व्यासवचनं. — *Adhy. no.* (figures, words or both): Dn 257 ($Dn_3$ 258); $D_1$ 260; $T_1$ $G_4$ M ($M_2$ *inf. lin.*) 249 ($M_2$ orig. 251); $T_2$ $G_1$ 246; $G_2$ 248. — *Śloka no.:* Dn 35; $D_1$ 33.

## 246

**1** $^{a}$) $T_2$ $G_{1.2.4}$ °द्रोणं °त्यक्तं. — $^{b}$) $Ś_1$ K Dc $D_{1-3.5}$ महर्षिणा (for महा°). — $^{c}$) T दत्तं च. — $^{d}$) $Ś_1$ $K_{1.2}$ तद्वद; $K_4$ $D_{1-3.5}$ शंस मे; $B_1$ वा विभो; $B_{2-4}$ $D_4$ वात्थ मे; $T_2$ चार्थिने.

**2** $^{a}$) $Ś_1$ $K_{1.2.4}$ $B_1$ $D_{3.5}$ °धर्मो; $K_3$ $D_4$ $G_1$ °धर्म-;

C. 3. 15406
B. 3. 260. 2
K. 3. 261. 2

सफलं तस्य जन्माहं मन्ये सद्धर्मचारिणः ॥ २

व्यास उवाच ।

शिलोञ्छवृत्तिर्धर्मात्मा मुद्गलः संशितव्रतः ।
आसीद्राजन्कुरुक्षेत्रे सत्यवागनसूयकः ॥ ३
अतिथिव्रती क्रियावांश्च कापोतीं वृत्तिमास्थितः ।
सत्रमिष्टीकृतं नाम समुपास्ते महातपाः ॥ ४
सपुत्रदारो हि मुनिः पक्षाहारो बभूव सः ।
कपोतवृत्त्या पक्षेण व्रीहिद्रोणमुपार्जयत् ॥ ५
दर्शं च पौर्णमासं च कुर्वन्विगतमत्सरः ।
देवतातिथिशेषेण कुरुते देहयापनम् ॥ ६
तस्येन्द्रः सहितो देवैः साक्षात् त्रिभुवनेश्वरः ।
प्रत्यगृह्णान्महाराज भागं पर्वणि पर्वणि ॥ ७
स पर्वकालं कृत्वा तु मुनिवृत्त्या समन्वितः ।
अतिथिभ्यो ददावन्नं प्रहृष्टेनान्तरात्मना ॥ ८
व्रीहिद्रोणस्य तदहो ददतोऽन्नं महात्मनः ।
शिष्टं मात्सर्यहीनस्य वर्धत्यतिथिदर्शनात् ॥ ९
तच्छतान्यपि भुञ्जन्ति ब्राह्मणानां मनीषिणाम् ।
मुनेस्त्यागविशुद्ध्या तु तदन्नं वृद्धिमृच्छति ॥ १०
तं तु शुश्राव धर्मिष्ठं मुद्गलं संशितव्रतम् ।
दुर्वासा नृप दिग्वासास्तमथाभ्याजगाम ह ॥ ११
बिभ्रच्चानियतं वेषमुन्मत्त इव पाण्डव ।
विकचः परुषा वाचो व्याहरन्विविधा मुनिः ॥ १२
अभिगम्याथ तं विप्रमुवाच मुनिसत्तमः ।
अन्नार्थिनमनुप्राप्तं विद्धि मां मुनिसत्तम ॥ १३

---

$T_2$ °तुष्टो; $M_1$ °कर्मा (for °धर्मा). — $^{b}$) Ś$_1$ $K_{1.2}$ $T_1$ तुष्टोसि. $T_1$ कर्मतः. — $^{c}$) $T_2$ $G_1$ जन्मेति (for जन्माहं). — $^{d}$) Ś$_1$ $K_{1.2}$ तद्धर्मं°; $K_4$ Dc षड्धर्मं°; $D_3$ $T_1$ सद्ब्रह्म°.

**3** Ś$_1$ $D_1$ श्रीव्यासः. — $^{a}$) Some S MSS. सिलोंछ°. — $^{b}$) $K_4$ $D_{1-3}$ शंसितव्रतः; B Dn $D_{4.6}$ T $G_{1.3}$ संयतेंद्रियः. — $^{d}$) $G_{2.4}$ सत्यवान्.

**4** $^{a}$) Hypermetric! Ś$_1$ $K_3$ अतिव्रत-; $K_{1.2}$ $D_1$ $M_2$ अतिव्रतः; $D_{2.3.5}$ $M_1$ अतिथिव्रतः; T $G_{2.4}$ अतिथिप्रियः. $K_4$ अतिथिव्रतचर्यायां. — $^{b}$) Ś$_1$ $B_2$ $D_1$ $G_1$ आश्रितः (for आस्थितः). $K_4$ तथा धर्मप्रियो ह्यति. — M om. $4^{cd}$. — $^{c}$) $K_4$ इष्टा°; $D_{1.3}$ इष्टि°; T $G_{1.2.4}$ इष्ट°. — $^{d}$) Ś$_1$ $K_1$ समुपास्थ; $K_2$ °स्त.

**5** $^{a}$) $T_2$ $G_1$ स (for हि). — $^{b}$) $T_1$ पक्षांते च; $M_2$ भैक्षाहारो. B D (except $D_{2.3.5}$) $T_2$ $G_3$ ह (for सः). — After $5^{ab}$, $T_1$ $G_4$ M ins.:

1184* मुनिः स तु महाराज महात्मा नियतव्रतः ।

— $^{c}$) $T_1$ कपोतवृत्तिः. — $^{d}$) Ś$_1$ $K_{1.2}$ उपार्जयन्.

**6** $^{a}$) Ś$_1$ $K_1$ दार्शं. $K_3$ M पौर्णमास्यं. — $^{d}$) $K_4$ $B_2$ Dc $D_1$ देहपालनम्; $G_1$ °पोषणम्.

**7** $^{a}$) $T_2$ तदेंद्रः; $G_2$ $M_1$ तत्रेंद्रः. — $^{d}$) $M_1$ यागं.

**8** $^{a}$) $G_{2.4}$ M °काल्यं (for °कालं). Ś$_1$ $K_{1.2}$ च (for तु). $T_2$ $G_1$ सर्वकालेषु भागं तु. — $^{b}$) $K_3$ $T_1$ $G_4$ $M_1$ मुनिर्धृत्या; $G_1$ मुनिः प्रीत्या. $K_1$ समुत्थितः (for समन्वितः). $D_{2.5}$ मुनिर्भृत्यसम°. — $^{c}$) $K_{3.4}$ Dc $D_{1-3.5}$ $G_4$ M ददात्यन्नं; $T_1$ गतेभ्योयं (for ददावन्नं). — $8^{d}$ = 1. 124. $4^{b}$; 5. 8. $25^{b}$.

**9** $^{a}$) $K_4$ $B_{1.3.4m}$ Dc $D_1$ सिद्धस्य; $B_{2.4}$ (orig.) Dn $D_{4-6}$ $G_3$ तद्धयस्य; $D_{2.3}$ तदहर्; T $G_{1.2.4}$ तत्प्रीत्या; M तद्धयन्नं (for तदहो). — $^{b}$) M [ऽ]स्य (for ऽन्नं). — $^{c}$) Ś$_1$ $K_{1-3}$ $D_2$ सृष्टं; $K_4$ $D_{1.3}$ मृष्टं; $T_1$ M दृष्टं; $T_2$ $G_{1.2.4}$ ऋषेर् (for शिष्टं). — $^{d}$) Ś$_1$ $K_{1.2}$ T $G_{1.4}$ वर्धते°; $K_3$ $D_1$ वर्धता°; $K_4$ पर्वण्य°.

**10** $^{a}$) Ś$_1$ $K_{1.2}$ अयुतान्यपि; $T_1$ तच्छेषा°; $G_1$ तच्छिष्टा°. — $^{b}$) Ś$_1$ $K_{1.2}$ $D_5$ महात्मनां; $K_3$ $T_1$ $G_{2.4}$ M तपस्विनां (for मनी°). — $^{c}$) Ś$_1$ $K_{1.2}$ पुन° (for मुने°). Ś$_1$ हि; $B_4$ च (for तु). $B_3$ (m as in text) स नेष्ट्या परिशुद्धात्मा. — $^{d}$) Ś$_1$ ऋद्धिम् (for वृद्धिम्). Ś$_1$ $G_1$ M इच्छति ($G_1$ °तः); $K_3$ $B_{1-3}$ Dn $D_{2-6}$ $G_3$ अर्छति; Dc अर्हं° (for ऋच्छ°).

**11** $^{a}$) $K_3$ तत्र; $B_4$ तत्तु. Ś$_1$ $K_{1.2}$ $D_5$ $T_1$ धर्मज्ञं. $T_2$ $G_2$ तं तु शुद्धं सुधर्मिष्ठं. — $^{b}$) $B_4$ स्वकुलं (for मुद्गलं). $K_4$ $D_{1-3}$ शंसित°; $T_2$ संयतेंद्रियं (for संशित°). — $^{c}$) Ś$_1$ $K_{1.2}$ दुर्वासो नृप दुर्वासास्. — $^{d}$) Ś$_1$ K $D_{1-3.5}$ तत्राथा- ($D_{1.3}$ °प्य)भ्या°; $T_2$ स तमभ्या°.

**12** $^{a}$) Ś$_1$ सुनियतं; K B Dc $D_{1.5}$ $T_1$ न ($K_4$ स) नि°; $D_2$ अनि°; $D_3$ त्वनि° (for चानि°). Ś$_1$ $K_{1.2}$ B वेशं. — $^{b}$) Ś$_1$ भारत (for पाण्डव). — $^{c}$) $T_1$ परुषाकारो (for °षा वाचो). — $^{d}$) $G_1$ विविधं; $G_2$ $M_2$ विविधान्. $T_1$ गिरः (for मुनिः).

**13** $^{a}$) $T_2$ $G_1$ देशम् (for विप्रम्). — $^{b}$) $D_3$ T $G_1$ $M_1$ मुनिसत्तमं; $G_{2.4}$ °पुंगवः. — $T_1$ om. (hapl.) $13^{cd}$. — $^{c}$) $B_1$ $M_1$ अर्थार्थिनम्. $D_2$ इह; $M_2$ अभि- (for अनु-).

स्वागतं तेऽस्त्विति मुनिं मुद्गलः प्रत्यभाषत ।
पाद्यमाचमनीयं च प्रतिवेद्यान्नमुत्तमम् ॥ १४
प्रादात्स तपसोपात्तं क्षुधितायातिथिव्रती ।
उन्मत्ताय परां श्रद्धामास्थाय स धृतव्रतः ॥ १५
ततस्तदन्नं रसवत्स एव क्षुधयान्वितः ।
बुभुजे कृत्स्नमुन्मत्तः प्रादात्तस्मै च मुद्गलः ॥ १६
भुक्त्वा चान्नं ततः सर्वमुच्छिष्टेनात्मनस्ततः ।
अथानुलिलिपेऽङ्गानि जगाम च यथागतम् ॥ १७
एवं द्वितीये संप्राप्ते पर्वकाले मनीषिणः ।
आगम्य बुभुजे सर्वमन्नमुञ्छोपजीविनः ॥ १८
निराहारस्तु स मुनिरुञ्छमार्जयते पुनः ।
न चैनं विक्रियां नेतुमशकन्मुद्गलं क्षुधा ॥ १९
न क्रोधो न च मात्सर्यं नावमानो न संभ्रमः ।
सपुत्रदारमुञ्छन्तमाविवेश द्विजोत्तमम् ॥ २०
तथा तमुञ्छधर्माणं दुर्वासा मुनिसत्तमम् ।
उपतस्थे यथाकालं षट्कृत्वः कृतनिश्चयः ॥ २१
न चास्य मानसं किंचिद्विकारं ददृशे मुनिः ।
शुद्धसत्त्वस्य शुद्धं स ददृशे निर्मलं मनः ॥ २२
तमुवाच ततः प्रीतः स मुनिर्मुद्गलं तदा ।
त्वत्समो नास्ति लोकेऽस्मिन्दाता मात्सर्यवर्जितः ॥ २३
क्षुद्धर्मसंज्ञां प्रणुदत्यादत्ते धैर्यमेव च ।
विषयानुसारिणी जिह्वा कर्षत्येव रसान्प्रति ॥ २४
आहारप्रभवाः प्राणा मनो दुर्निग्रहं चलम् ।
मनसश्चेन्द्रियाणां चाप्यैकाग्र्यं निश्चितं तपः ॥ २५
श्रमेणोपार्जितं त्यक्तुं दुःखं शुद्धेन चेतसा ।
तत्सर्वं भवता साधो यथावदुपपादितम् ॥ २६

C. 3. 15430
B. 3. 260. 26
K. 3. 261. 27

---

— [d]) $K_{3.4}$ B D $G_3$ द्विज° ( $B_1$ नृप° ) (for मुनि°).

**14** [a]) $K_4$ $T_1$ मुनिर्; $B_1$ मुहुर्; $D_1$ मुने. — [b]) $B_4$ (m as in text) स्वकुलः (for मुद्गलः). — [d]) B D (except $D_{1-3.5}$) $T_1$ $G_1$ °पाद्या° (for °वेद्या°).

**15** [a]) $D_1$ $T_1$ प्रादाद्य( $T_1$ °त्त )त्; $T_2$ प्रदाय; $M_2$ प्रासादात् (for प्रादात्स). $Ś_1$ $K_{1.2}$ तापसोपात्तं; $B_{2.4}$ तपसोपातुं (sic); Dn $D_{4.6}$ $G_3$ तापसायान्नं; $D_5$ मनसोपात्तं. — [b]) T $G_{1.2.4}$ °तिथिप्रियः. — [d]) $Ś_1$ Dc $D_2$ स दृढ°; $K_{1.2}$ $G_1$ सुदृढ°; $D_3$ T $G_4$ M सुधृत°.

**16** [a]) $B_4$ सकलं (m बलवत्); $T_1$ सर्वं हि (for रसवत्). — [b]) $Ś_1$ K $D_{1-3.5}$ $T_2$ $G_{1.2}$ °र्दितः (for °न्वितः). — [d]) $Ś_1$ $K_{1.2}$ T $G_1$ स (for च).

**17** [a]) $Ś_1$ $K_{1.2}$ transp. चान्नं and सर्वं. — [b]) $T_1$ तनुं (for ततः). $K_4$ $D_2$ उच्छिष्टेनांतरात्मना. — After $17^{ab}$, $K_4$ ins.:

1185* शेषे****लिप्य हसन्गायन्प्रधावति ।
　　नृत्यते धावते चैव बुद्ध्या तत्क्रोशते यथा ।

— [c]) $B_{1.2.4}$ Dn $G_3$ अथांगं लिलिपेन्नानि ( $B_{2.4}$ $G_3$ °पेंगानि; $Dn_1$ °पेन्नेन ); $D_{4.6}$ अथांगानि लिपेत्तानि. — [d]) $K_3$ यथासुखं. $B_{1.2.4}$ Dn $D_{4.6}$ $G_3$ यथागतमगाच्च सः.

**18** [a]) $G_{2.4}$ ततो (for एवं). — [b]) $K_1$ पूर्वं°; $K_2$ $G_1$ सर्वं°; $B_{2.4}$ Dn $D_{4.6}$ $T_2$ $G_3$ यथा° (for पर्व°). — [c]) $K_4$ $T_1$ आगत्य. — [d]) $K_1$ Dc °जीवनः.

**19** [a]) $Ś_1$ $K_{1.2}$ transp. तु and स. $K_4$ $D_1$ च (for तु). — [b]) $Ś_1$ K Dc $D_{1-3}$ °मर्जयते. — [c]) $B_4$ Dc $D_1$ चैवं. — [d]) $K_{1.2}$ दुर्बलं; $T_1$ $M_2$ मुद्गलः.

**21** [b]) $K_{3.4}$ B Dc $D_{1-3.5}$ $T_2$ $G_{2.4}$ °सत्तमः. — [c]) $Ś_1$ $K_1$ यथाकामं. — [d]) $D_{2.3}$ मुनिपुंगवः (for कृत°).

**22** [a]) $K_4$ $Dn_3$ मनसः कंचिद्; $B_2$ $G_1$ मनसः कश्चिद्; $B_3$ $D_{2.3}$ $T_1$ M मनसः किंचिद्; $B_4$ $Dn_{1}$. $n_2$ $D_{4.6}$ $T_2$ $G_3$ मनसा कश्चिद्; $G_2$ मानसः किंचिद्. — [b]) $T_2$ $G_{1.2}$ विकारो दृश्यते मुनेः. — [c]) $K_{3.4}$ $B_2$ $D_1$ सत्वं स ( $K_4$ तु). Dc शुद्धस्य; $T_1$ सदृशो; $G_1$ शुद्धांतं; $G_{2.4}$ M ददृशे (for शुद्धं स). $D_{2.3}$ तु (for स). $Ś_1$ $K_{1.2}$ सत्वशुद्धस्य शुद्धं हि ( $K_2$ तु). — [d]) Dc ददर्श. $T_1$ $G_{2.4}$ M विशुद्धं (for ददृशे).

**23** [a]) $G_1$ मुनिः (for ततः). — [b]) $K_1$ तथा; $K_{3.4}$ B Dn $D_{4.6}$ $G_3$ $M_2$ ततः (for तदा).

**24** [a]) $K_4$ Dc $D_1$ प्रणुदन् (for प्रणुदति). — [b]) $Ś_1$ [आ]धत्ते; Dc नादातुं; $D_3$ नादत्ते (for [आ]दत्ते). $Ś_1$ $K_{1-3}$ $D_5$ वा (for च). $K_4$ यो दत्ते धर्ममास्थितः. — [c]) Hypermetric! $B_{1-3}$ D (except $D_{1.2}$) $T_1$ $G_3$ रसानुसारिणी; $B_4$ विषयास्वादिनी. — [d]) $Ś_1$ कर्षत्यन्न-; $K_3$ कर्षते च; Dc कर्षत्येनं (for कर्षत्येव). $G_1$ रसं. $Dn_2$ कस्मात्त्वां न प्रबाधते; $T_2$ क्षरत्येव रसं प्रति.

**25** [a]) $K_1$ आहारं; Dc आहारः (for आहार-). — [c]) $K_4$ $B_{1.3}$ $Dc_2$ $Dn_3$ $G_3$ वा (for च). — [d]) $Ś_1$ $K_{1.2}$ Dc $D_{1-3.5}$ $T_1$ $M_2$ [अ]प्येकाग्रं; $T_2$ $G_2$ निग्रहं; $G_1$ एकाग्रं (for [अ]प्यैकाग्र्यं). $B_1$ निष्ठितं; $B_4$ °श्चलं (for °श्चितं).

**26** [a]) Dc $D_1$ $G_4$ त्यक्तं; $G_2$ दत्तं. — [b]) Dc दुःखे. $B_3$ तेजसा (for चेतसा). $T_2$ $G_{2.4}$ न च दुःखेन चेतसा; M

C. 3. 15431
B. 3. 260. 27
K. 3. 261. 28

प्रीताः स्मोऽनुगृहीताश्च समेत्य भवता सह ।
इन्द्रियाभिजयो धैर्यं संविभागो दमः शमः ॥ २७
दया सत्यं च धर्मश्च त्वयि सर्वं प्रतिष्ठितम् ।
जितास्ते कर्मभिर्लोकाः प्राप्तोऽसि परमां गतिम् ॥ २८
अहो दानं विघुष्टं ते सुमहत्स्वर्गवासिभिः ।
सशरीरो भवान्गन्ता स्वर्गं सुचरितव्रत ॥ २९
इत्येवं वदतस्तस्य तदा दुर्वाससो मुनेः ।
देवदूतो विमानेन मुद्गलं प्रत्युपस्थितः ॥ ३०
हंससारसयुक्तेन किङ्किणीजालमालिना ।
कामगेन विचित्रेण दिव्यगन्धवता तथा ॥ ३१
उवाच चैनं विप्रर्षिं विमानं कर्मभिर्जितम् ।
समुपारोह संसिद्धिं प्राप्तोऽसि परमां मुने ॥ ३२
तमेवंवादिनमृषिर्देवदूतमुवाच ह ।
इच्छामि भवता प्रोक्तान्गुणान्स्वर्गनिवासिनाम् ॥ ३३
के गुणास्तत्र वसतां किं तपः कश्च निश्चयः ।
स्वर्गे स्वर्गसुखं किं च दोषो वा देवदूतक ॥ ३४
सतां सप्तपदं मित्रमाहुः सन्तः कुलोचिताः ।
मित्रतां च पुरस्कृत्य पृच्छामि त्वामहं विभो ॥ ३५
यदत्र तथ्यं पथ्यं च तद्ब्रवीह्यविचारयन् ।
श्रुत्वा तथा करिष्यामि व्यवसायं गिरा तव ॥ ३६

इति श्रीमहाभारते आरण्यकपर्वणि षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥

---

दुःख( M$_1$ °खं )युक्तेन चे°.

**27** $^{a}$) Ś$_1$ K$_{1.2}$ Dc स्म (for च). K$_3$ D$_{2.3}$ T G$_{1.2.4}$ M प्रीतोस्म्यनुगृहीतश्च ( T$_2$ °तोस्मि ). — $^{b}$) Ś$_1$ सत्येन (for समेत्य ). B$_3$ समेत्य भरतर्षभ. — After 27$^{ab}$, K$_4$ D$_{1-3}$ ins.:

1186* सद्भिः समागमो नित्यं सर्वपापहरः स्मृतः ।;

while S (except G$_3$) ins.:

1187* पावनं परमं मन्ये दर्शनं ते महामुने ।

— $^{c}$) M$_1$ इंद्रियाणां (for °याभि- ). G$_4$ M$_2$ इंद्रियाणि मनोधैर्यं. — $^{d}$) K$_4$ D$_{2.3}$ transp. दमः and शमः.

**28** $^{a}$) T$_1$ G$_4$ M$_1$ दयालुत्वं ; G$_1$ तथा सत्यं ; M$_2$ दयार्थत्वं (for दया सत्यं). — $^{b}$) Dc सत्यं (for सर्वं). — After 28$^{ab}$, K$_4$ D$_{1-3}$ ins.:

1188* लोकाः समस्ता धर्मेण धार्यन्ते सचराचराः ।
धर्मोऽपि धार्यते ब्रह्मन्धृतियुक्तात्मना त्वया ।;

while S (except G$_3$) ins.:

1189* विशुद्धसत्त्वसंपन्नो न त्वदन्योऽस्ति कश्चन ।

**29** $^{a}$) K$_1$ विसंघुष्टं; B$_{1.3}$ विशिष्टं ते. — $^{b}$) B$_4$ (m as in text) कामकृत्स्वर्गवासिनः. — $^{d}$) K$_{3.4}$ Dc D$_{1-6}$ T$_2$ G$_3$ °व्रतः.

**30** $^{d}$) K$_3$ समुपास्थितः; T$_2$ प्रत्यपद्यत; G$_1$ प्रत्यभाषत.

**31** $^{b}$) =1. 212. 3$^{d}$; etc. T$_1$ °शोभिना; G$_4$ °नादिना. — $^{c}$) Ś$_1$ K D$_{1-3.5}$ विमानेन (for विचित्रेण). — $^{d}$) Ś$_1$ D$_2$ T$_1$ G$_1$ तदा (for तथा).

**32** $^{a}$) Ś$_1$ K$_{1.3.4}$ B D$_{1-3}$ विप्रर्षे; Dc विप्रर्षिर्. — $^{b}$) D$_2$ G$_4$ M कर्मनिर्जि( M$_1$ °र्मि )तं. — $^{c}$) T$_1$ G$_{2.4}$ M त्वमु° (for °समु°). — $^{d}$) K$_4$ B$_2$ गतिं (for मुने). G$_1$ संप्राप्तोसि परां मुने.

**33** $^{c}$) K$_4$ भगवत्- (for भवता). — $^{d}$) K$_3$ °वासिनं; B$_2$ °वासिनः.

**34** $^{c}$) B$_{2-4}$ Dn D$_{4.6}$ G$_3$ तत्र सुखं; Dc स्वर्गफलं. K$_{3.4}$ B$_{1.3}$ D$_{1.3}$ G$_1$ M$_2$ किंचिद्; D$_5$ किं स्विद्; G$_{2.4}$ किं तु; M$_1$ किं नु (for किं च). — $^{d}$) K$_{1.2.4}$ D$_2$ T$_2$ दोषा. Ś$_1$ K$_{1.2.4}$ °दूत के.

**35** $^{a}$) K$_1$ B$_2$ Dn D$_1$ G$_4$ M$_1$ साप्तपदं. K$_4$ Dc Dn$_3$ (by corr.) D$_1$ T$_2$ G$_1$ मैत्रम्. — $^{b}$) D$_3$ प्राहुः. K$_4$ T$_2$ G$_1$ कुलोदिताः; T$_1$ M$_2$ °द्गताः; G$_{2.4}$ M$_1$ °द्गताः. — $^{c}$) Ś$_1$ K Dc D$_{1-3.5}$ तु (for च). — $^{d}$) K$_2$ विभो ह्यहं; K$_4$ D$_{1.3}$ T अहं प्रभो.

**36** $^{a}$) K$_{2-4}$ B$_1$ Dc D$_{1.5}$ transp. तथ्यं and पथ्यं. T$_1$ तत्र (for तथ्यं), and यत् (for च). — $^{b}$) Ś$_1$ K$_{1.2}$ तत्त्वं ब्रूहि; D$_5$ T$_2$ G$_1$ तद्ब्रूहि त्वं; T$_1$ प्रब्रवीहि (for तद्ब्रवीहि). D$_5$ महामते; T$_2$ G$_1$ विचारयन् (for [अ]विचारयन्). — $^{c}$) T$_2$ G$_1$ तदा (for तथा). — $^{d}$) K$_1$ G$_4$ गिरां; T$_1$ G$_1$ M गिरं.

Colophon. — *Major parvan:* Ś$_1$ K$_{1.2}$ Dn$_2$ T$_1$ G$_{2.4}$ आरण्य. — *Sub-parvan:* K$_{3.4}$ B Dc Dn$_1$. n$_3$ D$_{1-6}$ T$_1$ G$_3$ व्रीहिद्रौणिक; M$_2$ व्रीहिद्रोणोपाख्यान. G$_1$ (om. sub-parvan name) mentions only मुद्गलोपाख्यान. — *Adhy. name:* M$_2$ देवदूतागमनं. — *Adhy. no.* (figures, words or both): Dn 258 (Dn$_3$ 259); D$_1$ 261; T$_1$ G$_4$ M 250 (M$_2$ 252); T$_2$ G$_1$ 247; G$_2$ 249. — *Śloka no.:* Dn 36.

# २४७

देवदूत उवाच ।

महर्षेऽकार्यबुद्धिस्त्वं यः स्वर्गसुखमुत्तमम् ।
संप्राप्तं बहु मन्तव्यं विमृशस्यबुधो यथा ॥ १
उपरिष्टादसौ लोको योऽयं स्वरिति संज्ञितः ।
ऊर्ध्वगः सत्पथः शश्वद्देवयानचरो मुने ॥ २
नातप्ततपसः पुंसो नामहायज्ञयाजिनः ।
नानृता नास्तिकाश्चैव तत्र गच्छन्ति मुद्गल ॥ ३
धर्मात्मानो जितात्मानः शान्ता दान्ता विमत्सराः ।
दानधर्मरताः पुंसः शूराश्चाहतलक्षणाः ॥ ४
तत्र गच्छन्ति कर्माग्र्यं कृत्वा शमदमात्मकम् ।
लोकान्पुण्यकृतां ब्रह्मन्सद्भिरासेवितान्नृभिः ॥ ५
देवाः साध्यास्तथा विश्वे मरुतश्च महर्षिभिः ।
यामा धामाश्च मौद्गल्य गन्धर्वाप्सरसस्तथा ॥ ६
एषां देवनिकायानां पृथक्पृथगनेकशः ।
भास्वन्तः कामसंपन्ना लोकास्तेजोमयाः शुभाः ॥ ७
त्रयस्त्रिंशत्सहस्राणि योजनानां हिरण्मयः ।
मेरुः पर्वतराड्यत्र देवोद्यानानि मुद्गल ॥ ८
नन्दनादीनि पुण्यानि विहाराः पुण्यकर्मणाम् ।
न क्षुत्पिपासे न ग्लानिर्न शीतोष्णभयं तथा ॥ ९
बीभत्समशुभं वापि रोगा वा तत्र केचन ।

C. 3. 15450
B. 3. 261. 10
K. 3. 262. 11

---

## 247

**1** $^{a}$) $B_{2.4}$ Dn $D_{4.6}$ $G_3$ आर्यबुद्धि° (with hiatus!); $T_1$ पात्रमुख्य°; $T_2$ [ऽ]कल्यबुद्धि°. — $^{b}$) $K_4$ $D_{2.3}$ $G_2$ यत् (for यः). — $^{c}$) S (except $G_3$) °प्तं प्रतिपत्त($T_1$ °वक्त)व्यं. — $^{d}$) $Ś_1$ $B_3$ Dc विमृष°; $K_{1-3}$ $B_1$ $Dn_{2}$. $n_3$ $D_{4.6}$ विमृष्य°; $D_1$ विमृक्ष्य°; $D_3$ विमृज्य°. — After 1, $K_4$ $D_{1-3}$ ins.:

1190* नन्दनादीनि रम्याणि तत्रोद्यानानि मुद्गल ।
सर्वकामफलैर्वृक्षैः शोभितानि समन्ततः ।
[Cf. 9.]

**2** $^{a}$) $B_{1.3}$ Dc Dn $D_{4.6}$ $G_3$ च स्वर्-; $B_2$ $D_2$ T $G_{1.2.4}$ M अयं (for असौ). — $^{b}$) $K_4$ $D_3$ संज्ञकः; $B_4$ शब्दितः (for संज्ञितः). $T_1$ यः स्वर्ग इति संज्ञितः.

**3** $^{a}$) $Ś_1$ चैव; $K_1$ धैर्यं; $K_2$ चर्या; Dc पुंसा; $D_{1-3.5}$ मर्त्या (for पुंसो). — $^{b}$) $K_4$ °याचकाः (for °याजिनः). — $^{c}$) $T_1$ नादृता. $D_{1.2}$ स्तेनास् (for चैव).

**4** $^{a}$) $B_2$ हि पुरुषाः; T $G_{1.4}$ $M_2$ महात्मानः (for जिता°). — $^{b}$) $B_4$ $T_1$ $G_{2.4}$ M जितेंद्रियाः (for विमत्सराः). — $^{c}$) $K_3$ $D_5$ $T_1$ $G_{2.4}$ °पराः (for °रताः). $Ś_1$ $K_{2.4}$ प्रज्ञाः; $K_1$ यज्ञाः; $K_3$ $D_{2.3.5}$ प्राज्ञाः; Dc $D_1$ मर्त्याः; $T_1$ $G_{2.4}$ $M_1$ नित्यं (for पुंसः). — $^{d}$) $B_1$ शूरास्तेजोमयाः शुभाः; $B_{2-4}$ D (except $D_{3.5}$) $G_3$ $M_2$ शूराश्चाहवलक्षणाः; T $G_{1.2.4}$ °श्चाहितल°.

**5** $^{a}$) $K_3$ ते कर्म; $B_{1-3}$ Dn $D_{4.6}$ $T_1$ $G_{2-4}$ धर्माग्र्यं; $D_{2.3}$ कृत्वाग्र्यं; $M_2$ धामाग्र्यं (for कर्माग्र्यं). — $^{b}$) $Ś_1$ शमदमादिकं; $B_1$ $G_{1.4}$ M दमशमात्मकं. — $^{c}$) $K_4$ Dc $D_{1.6}$ पुण्यकृतान्; $M_2$ °तमान्. — $^{d}$) $B_2$ °चरितात्मभिः; $B_{3.4}$ Dn $D_{4.6}$ $G_3$ °चरितान्नृभिः; Dc °सेवितात्मभिः; $T_1$ °चरितं नृप.

**6** $^{b}$) Dc महर्षयः; $D_1$ $T_1$ M सहर्षिभिः. B Dn $D_{4.6}$ $G_3$ तथैव च महर्षयः. — $^{c}$) $K_1$ $T_2$ $G_{2-4}$ यामायामाश्च; $K_4$ $Dc_2$ $T_1$ $G_1$ यमो धाता च; $D_1$ यामा वामाश्च. $B_4$ सौकुल्य (for मौद्गल्य); cf. v.l. $13^{e}$. — $B_2$ om. (hapl.) $6^{d}$–$13^{c}$. — After 6, $K_3$ (line 2 in marg. *sec. m.*) ins.:

1191* देवानामपि मौद्गल्य काङ्क्षिता सा परा गतिः ।
न दुःखमसुखं चापि रागद्वेषौ कुतो मुने ।

**7** $B_2$ om. 7 (cf. v.l. 6); $K_3$ om. $7^{ab}$. — $^{a}$) $Ś_1$ $K_{1.2}$ $D_5$ एवं; $T_2$ एतद्; $G_3$ येषां (for एषां). $T_1$ एते देवनिकायास्ते. — $D_4$ om. (?hapl.) from $7^{b}$ up to योजनानां in $8^{b}$. — $^{c}$) $K_3$ ततो वै; $T_1$ भ्राजंतः (for भास्वन्तः). — $^{d}$) $K_4$ स्मृताः (for शुभाः).

**8** $B_2$ om. 8 (cf. v.l. 6); $D_4$ om. up to योजनानां (cf. v.l. 7). — $^{b}$) $B_{3.4}$ Dn $D_6$ $T_2$ $G_{2.3}$ योजनानि. — $^{c}$) $D_{3.4}$ $G_{2.4}$ अत्र; $D_6$ $G_3$ तत्र (for यत्र). $K_3$ मेरुः पर्वतराजानं; $T_1$ मेरोः पर्वतराजस्य.

**9** $B_2$ om. 9 (cf. v.l. 6). — $^{a}$) $T_2$ चत्वारि (for पुण्यानि). — $^{b}$) $K_1$ $T_2$ विहारः. $T_1$ °कर्मणः. — $^{c}$) $Ś_1$ $K_{1.2}$ न क्षुत्तृष्णे न च ग्लानिर्. — $^{d}$) B Dn $D_{4.6}$ $G_3$ $M_2$ शीतोष्णे; $T_2$ $G_1$ °ष्णौ; $M_1$ °ष्णं (for °ष्ण-).

**10** $B_2$ om. 10 (cf. v.l. 6). — $^{a}$) $T_1$ अश्विनां; $T_2$

C. 3. 15450
B. 3. 261. 10
K. 3. 262. 11

मनोज्ञाः सर्वतो गन्धाः सुखस्पर्शाश्च सर्वशः ॥ १०
शब्दाः श्रुतिमनोग्राह्याः सर्वतस्तत्र वै मुने ।
न शोको न जरा तत्र नायासपरिदेवने ॥ ११
ईदृशः स मुने लोकः स्वकर्मफलहेतुकः ।
सुकृतैस्तत्र पुरुषाः संभवन्त्यात्मकर्मभिः ॥ १२
तैजसानि शरीराणि भवन्त्यत्रोपपद्यताम् ।
कर्मजान्येव मौद्गल्य न मातृपितृजान्युत ॥ १३
न च स्वेदो न दौर्गन्ध्यं पुरीषं मूत्रमेव च ।
तेषां न च रजो वस्त्रं बाधते तत्र वै मुने ॥ १४
न म्लायन्ति स्रजस्तेषां दिव्यगन्धा मनोरमाः ।
पर्युह्यन्ते विमानैश्च ब्रह्मन्नेवंविधाश्च ते ॥ १५
ईर्ष्याशोकक्लमापेता मोहमात्सर्यवर्जिताः ।
सुखं स्वर्गजितस्तत्र वर्तयन्ति महामुने ॥ १६
तेषां तथाविधानां तु लोकानां मुनिपुंगव ।
उपर्युपरि शक्रस्य लोका दिव्यगुणान्विताः ॥ १७
पुरस्ताद्ब्रह्मणस्तत्र लोकास्तेजोमयाः शुभाः ।
यत्र यान्त्यृषयो ब्रह्मन्पूताः स्वैः कर्मभिः शुभैः ॥ १८
ऋभवो नाम तत्रान्ये देवानामपि देवताः ।
तेषां लोकाः परतरे तान्यजन्तीह देवताः ॥ १९
स्वयंप्रभास्ते भास्वन्तो लोकाः कामदुघाः परे ।
न तेषां स्त्रीकृतस्तापो न लोकैश्वर्यमत्सरः ॥ २०
न वर्तयन्त्याहुतिभिस्ते नाप्यमृतभोजनाः ।

---

G1 वाशुभं (for अशुभं). Ś1 K2 D1 M1 चापि; B1 चैव (for वापि). — b) D3. 5 न च (for तत्र). B (B2 om.) Dc Dn D4. 6 T1 G3 M तत्र किंचिन्न (T1 °च न) विद्यते; T2 G1. 2. 4 रोगो वा तत्र कश्चन. — c) T2 G1 सर्वशो. — d) Ś1 च सर्वतः; D1 च मारुतः; T1 समंततः; T2 G1. 2. 4 M1 च वायवः (for च सर्वशः).

**11** B2 om. 11 (cf. v.l. 6). — a) Dc गंधाः (for शब्दाः). T2 G2. 4 M शब्द[:] श्रुतिमनोग्राह्यः. — b) Ś1 श्रूयंते (for सर्वतस्). — K4 om. (hapl.) 11c–16d. — d) Ś1 Dc D3 G1. 4 M नायासः परिदेवनं (Dc °ने; D3 M °ना); K1. 2 नायासपरिवेदनं; T G2 °परिदेवना.

**12** K4 B2 om. 12 (cf. v.l. 6, 11). — a) D3 न ईर्ष्या तु (for ईदृशः स). K1 D3 स मुनेर्; T2 सुमनो- (for स मुने). — b) Ś1 K2 सुकर्म°; B4 T G1. 2. 4 M2 स्वधर्म°. — c) D1–3 M पुरुषः. T1 सुकृतस्तत्र पुरुषः. — d) K1 Dc2 D2. 3 T1 M1 संभवति; D1 संचरंति. D3 °कर्मसु.

**13** K4 om. 13 (cf. v.l. 11); B2 om. 13abc (cf. v.l. 6). — a) K3 Dc तेजसानि. — b) Dc °युज्यतां (for °पद्यताम्). — c) G4 धर्म° (for कर्म°). B4 सौकुल्य (for मौद्ग°). — d) B3 [अ]तः; D2 तु; D3 च; D5 [अ]पि (for [उ]त).

**14** K4 om. 14 (cf. v.l. 11). — a) T2 G1 वा (for च). Ś1 K (K4 om.) Dc D1–3. 5 न स्वेदो न च दौ°; B Dn D4. 6 G2. 3 M न संस्वेदो न दौ°. — b) Ś1 K1. 2 पुरीषो. B M1 वा (for च). — c) D2. 3 एषां. Ś1 K (K4 om.) Dc D1–3 (by transp.) च न; G1 तु न. T1 जरा (for रजो). — d) T1 न बाधा (for बाधते). G1 बाधंते नाधयो मुने; G2. 4 बाधते हि तपोधन.

**15** K4 om. 15 (cf. v.l. 11). — a) B1. 4 G1 न ग्लायंति; D5 (by transp.) म्लायंति न. G1 सर्वा (for तेषां). — c) K3 D5 पर्युज्यंते; B1 Dc2 प्रयुज्यंते; B2–4 Dc1 Dn D4. 6 G3 संयुज्यं(B2. 3 °ज्य)ते; D3 पर्यटंति; T1 G1. 4 पर्यूह्यंते; T2 G2 समू(G2 °मु)ह्यंते. — d) K3 B Dn D4–6 G3 ब्रह्मन्नेवंविधैश्च; Dc °न्नेवंविधैश्च. D2. 3 T1 G2. 4 M हि (for च). B1 ताः; B3 D1 ये (for ते).

**16** K4 om. 16 (cf. v.l. 11). — a) Ś1 K1 Dc D3 °क्रमोपेता; T1 °मोहक्लमा°; G1 °शोकसमो°. — b) T1 मद°. — d) B Dn D4. 6 T1 G3 वर्तयंते. M2 मनोरमाः (for महा°).

**17** a) T1 तेषां तथा विमानानां. — c) B2. 3 D (except D1–3) G3 लोकस्य (for शक्र°). — d) Dn2. n3 D4. 6 G3 लोका दिव्या गुणा°; T G2. 4 M लोको °न्वितः; G1 दिव्यो लोकगुणान्वितः.

**18** a) T1 G4 परितो; T2 G1 परस्ताद्; G2 M परतो (for पुरस्ताद्). Ś1 B2. 3 Dn1 ब्राह्मण°. S (except G3) तस्य (for तत्र). — b) S (except G3) लोकस्तेजोमयः शुभः. — d) Dc सुखैः (for शुभैः). B4 पूताः स्वैः स्वैस्तु कर्मभिः.

**19** a) K3 B4 D3 ऋषयो; T1 मानवा (for ऋभवो). — T1 om. 19c–22b; K4 G1 om. (hapl.) 19cd. — c) K1. 2 G2 लोकः; B4 Dc1 Dn1 G4 लोकात्. Ś1 K1. 2 परतरस्. — d) K3 क्षरंतीह; G4 D1. 3 जयंतीह.

**20** T1 om. 20 (cf. v.l. 19). — a) Dc वा (for ते). B1. 2 D4 G3 भासंतो. — b) M कामदुहः. — c) Ś1 K1. 3 D1–3. 5 श्री° (for स्त्री°). — d) Ś1 Dc लोकैश्वर्यमत्सराः; G1. 2. 4 M भोगै(G1 लोभै)श्वर्यमत्सरः.

**21** T1 om. 21 (cf. v.l. 19). — a) D3 (by corr.)

तथा दिव्यशरीरास्ते न च विग्रहमूर्तयः ॥ २१
न सुखे सुखकामाश्च देवदेवाः सनातनाः ।
न कल्पपरिवर्तेषु परिवर्तन्ति ते तथा ॥ २२
जरा मृत्युः कुतस्तेषां हर्षः प्रीतिः सुखं न च ।
न दुःखं न सुखं चापि रागद्वेषौ कुतो मुने ॥ २३
देवानामपि मौद्गल्य काङ्क्षिता सा गतिः परा ।
दुष्प्रापा परमा सिद्धिरगम्या कामगोचरैः ॥ २४
त्रयस्त्रिंशदिमे लोकाः शेषा लोका मनीषिभिः ।
गम्यन्ते नियमैः श्रेष्ठैर्दानैर्वा विधिपूर्वकैः ॥ २५
सेयं दानकृता व्युष्टिरत्र प्राप्ता सुखावहा ।
तां भुङ्क्ष्व सुकृतैर्लब्धां तपसा द्योतितप्रभः ॥ २६
एतत्स्वर्गसुखं विप्र लोका नानाविधास्तथा ।
गुणाः स्वर्गस्य प्रोक्तास्ते दोषानपि निबोध मे ॥ २७
कृतस्य कर्मणस्तत्र भुज्यते यत्फलं दिवि ।
न चान्यत्क्रियते कर्म मूलच्छेदेन भुज्यते ॥ २८
सोऽत्र दोषो मम मतस्तस्यान्ते पतनं च यत् ।
सुखव्याप्तमनस्कानां पतनं यच्च मुद्गल ॥ २९
असंतोषः परीतापो दृष्ट्वा दीप्ततराः श्रियः ।
यद्भवत्यवरे स्थाने स्थितानां तच्च दुष्करम् ॥ ३०
संज्ञामोहश्च पततां रजसा च प्रधर्षणम् ।
प्रम्लानेषु च माल्येषु ततः पिपतिषोर्भयम् ॥ ३१
आ ब्रह्मभवनादेते दोषा मौद्गल्य दारुणाः ।

C. 3. 15472
B. 3. 261. 32
K. 3. 262. 33

---

ते ( for न ). G1 वर्तयंत्याहुतिभिस्ते; M न वर्तयंत्याहुतिस्ते. — b) T2 G2. 4 ते न वा; G1 न च च; M न चापि ( for ते नापि ). K3 B2 D2. 3 G1. 2 °भोजिनः. D5 ते नानामृतभोजिनः. — d) B1 °रूपिणः ( for °मूर्तयः ).

**22** D4 om. $22^{a}$–$23^{b}$; T1 om. $22^{ab}$ ( cf. v.l. 19 ). — a) K4 निमेषाः; T2 G1. 2 नासुखाः; G4 M नासुखे ( for न सुखे ). B2. 3 Dn D6 G3 ते ( for च ). B1 न च सुखे सुखकामा. — c) K4 न कल्पे परिवर्तते; T1 न कल्पपरिवृत्तेषु; T2 न °वर्तते.

**23** D4 om. $23^{ab}$ ( cf. v.l. 22 ). — a) K1 Dc2 T2 G1. 2 जरामृत्यु; K4 D2. 6 G3 जरामृत्यू. — b) Ś1 K1. 2 तथैव; M2 सुखानि ( for सुखं न ). K3 Dc Dn1 D2. 3. 5. 6 T2 G3 हर्षः ( K3 °र्ष-; D3 °र्षं ) प्रीतिसुखं न च; Dn2 हर्षः प्रीति कथंचन; T1 G1. 2 M1 हर्षः ( G2 M1 °र्ष- ) प्रीतिसुखानि च. — c) D1 च दुःखं ( for दुःखं न ). K3 D3 T1 M1 असुखं; G1 वासुखं ( for न सुखं ). Ś1 K1. 2 चास्ति; K3 B1–3 Dc2 T1 G1. 2. 4 M1 वापि ( for चापि ). T2 दुःखं वाप्यसुखं वापि.

**24** b) K1 T1 पुरा ( for परा ). — c) T2 पुष्पोपमा परा सिद्धिर्. — d) Ś1 K1 Dc2 अकाम्या का°.

**25** a) Ś1 K1. 2 अमी ( for इमे ). K3. 4 B D T2 G1. 3 देवाः ( D1 भावाः ) ( for लोकाः ). — b) N T G1. 3 येषां ( K4 तेषां ) ( for शेषा ). — c) T नियतैर्. T दांतैर्; G1 शांतैर् ( for श्रेष्ठैर् ). — d) T2 G1 दांतै° ( for दानै° ). T2 वृद्धि° ( for विधि° ).

**26** a) T2 सेयं दानवतां वीर. — b) K Dc D1. 3. 5 त्वया; T G1 अनु- ( for अत्र ). Ś1 त्वया प्राप्ता ह्यनुत्तमा; B Dn D2. 4. 6 अनुप्राप्ता सुखं त्वया. — Ś1 om. $26^{c}$–$27^{b}$. — c) Dc प्रकृतैर्. K3 तां भुंक्ष्व सुकृतेनाद्य.

**27** Ś1 om. $27^{ab}$ ( cf. v.l. 26 ). — a) G2. 4 एवं ( for एतत् ). K4 D3 G1 स्वर्गफलं. — c) Ś1 K1. 2 ते प्रोक्ता ( by transp. ); K3 Dc S ( except G3 ) चोक्तास्ते; B1 भोग्यास्ते. K4 D1–3 उक्ता गुणास्ते स्वर्गस्य.

**28** a) B1 तात; T1 G1 तस्य ( for तत्र ). — b) B1 सृज्यते. Ś1 K1. 2 Dc तत् ( for यत् ). K4 यत्फलं भुज्यते दिवि. — d) B1 मूलभेदेन; G3 सूत्रछेदेन.

**29** a) G1 तत्र ( for सोऽत्र ). — b) T1 तस्याधः- ( for तस्यान्ते ). K4 D1. 3 गमनं ( for पतनं ). — d) T G2. 4 M1 सहसा ( for पतनं ). B4 Dc यत्र; D2 तच्च; T2 यं च. G1 सहश्लाघश्च मुद्गल.

**30** a) Ś1 K Dc Dn2 D3 T1 G1 असंतोषपरीतापो ( K1. 2 Dc2 D3 °पौ; T1 °नां ). — b) K3. 4 D3. 5 दीप्ततरां श्रियं; D2 दीप्ताः परश्रियः; T1 G2. 4 M दीप्तां परश्रियं; T2 G1 परगतां श्रियं. — c) T1 M तद् ( for यद् ). Ś1 K1. 2 D1 °त्यमरस्थाने; K3 °त्परम°; Dn3 D4. 6 °त्यधरे स्थाने; D2 °त्यपरे स्थाने; T1 °त्यातुले ज्ञाते; T2 G1. 2. 4 °त्य( G1 °त्या )तुले स्थाने; M °त्यातुरे स्थाने. — d) B1 यच्च; B2. 3 Dn D4–6 G3 तत्सु-; Dc चेन्न ( for तच्च ). Ś1 K1–3 दुःखदं; T2 G1. 2. 4 दुष्कृतं; M1 दुष्षहं ( for दुष्करम् ).

**31** a) Ś1 °मोहाश्च. — b) K4 D2. 4 सं- ( for च ). — c) K3 Dc G1 अम्ला°; M2 प्रमादेषु ( for प्रम्ला° ). D1 तु; T1 हि ( for च ). Dc मानेषु; D1 पुण्ये° ( for माल्ये° ). — d) G2. 4 M तस्मात् ( for ततः ). B2 D1 प्रपतितोर्; G1 पिबतिषोर्. D1 भृशं; T2 ह्ययं ( for भयम् ). T1 तस्माच्च

C. 3. 15472
B. 3. 261. 32
K. 3. 262. 33

नाकलोके सुकृतिनां गुणास्त्वयुतशो नृणाम् ॥ ३२
अयं त्वन्यो गुणः श्रेष्ठश्च्युतानां स्वर्गतो मुने ।
शुभानुशययोगेन मनुष्येषूपजायते ॥ ३३
तत्रापि सुमहाभागः सुखभागभिजायते ।
न चेत्संबुध्यते तत्र गच्छत्यधमतां ततः ॥ ३४
इह यत्क्रियते कर्म तत्परत्रोपभुज्यते ।
कर्मभूमिरियं ब्रह्मन्फलभूमिरसौ मता ॥ ३५
एतत्ते सर्वमाख्यातं यन्मां पृच्छसि मुद्गल ।
तवानुकम्पया साधो साधु गच्छाम माचिरम् ॥ ३६

व्यास उवाच ।

एतच्छ्रुत्वा तु मौद्गल्यो वाक्यं विममृशे धिया ।
विमृश्य च मुनिश्रेष्ठो देवदूतमुवाच ह ॥ ३७
देवदूत नमस्तेऽस्तु गच्छ तात यथासुखम् ।
महादोषेण मे कार्यं न स्वर्गेण सुखेन वा ॥ ३८
पतनं तन्महद्दुःखं परितापः सुदारुणः ।
स्वर्गभाजश्च्यवन्तीह तस्मात्स्वर्गं न कामये ॥ ३९
यत्र गत्वा न शोचन्ति न व्यथन्ति चलन्ति वा ।
तदहं स्थानमत्यन्तं मार्गयिष्यामि केवलम् ॥ ४०

---

पततो भयं.

**32** a) Ś1 K Dc D1–3. 5 °भुवनाद्. — b) B4 मौकुल्य. — c) Ś1 K1. 2 B3. 4 D1 G1 नाक(G1 देव)लोकेषु कृ°; T1 G4 M2 नाग(T1 देव)लोके सु°. — d) T1 M1 मिताः; G2. 4 M2 मताः (for नृणाम्).

**33** a) K1 अन्यस्त्वयं (for अयं त्वन्यो). K3 त्वल्पो गुणः; K4 B2. 4 Dc D1. 4 त्वन्यो गुण-; B1 तुल्यो गुण- (for त्वन्यो गुणः). — b) Ś1 K1. 2 D1. 3 T1 सर्व° (for स्वर्ग°). Ś1 K1. 2. 4 D1. 3 गुणैः (for मुने). — c) K4 D3 T G1. 2. 4 M2 सु(T1 दुः)खानु°. — d) Ś1 K1. 2 मानुषेषु. Ś1 प्र-; S (except G3) [ए]व (for [उ]प-).

**34** T1 om. 34[ab]. — a) K3 B1 T2 G1 M2 सुमहाभाग; B2–4 Dc Dn D1–4. 6 G3 स महाभागः (D2–4 G3 °ग). — b) Ś1 K1. 2 B4 Dc T2 अपि (for अभि-). K4 D3 सुखभो(D3 °भा)गी हि जायते; G2. 4 कुले महति जा°. — c) Dc G1 M स; T1 सु- (for सं-). — d) Ś1 प्राप्नोधमतां ततः (sic); T2 गच्छत्ययमतंद्रितः. — After 34, M1 ins.:

1192* तत्र गत्वा निवर्तन्ते न बुधा योगिनस्तथा ।

**35** a) T2 G1 लोके (for कर्म). — b) D1 G1 (*sup. lin.* as in text) [उ]पयुज्यते. — d) Ś1 K1. 2 D2 असौ परा; K4 D3 अतो परा; T1 तु स स्मृतः. T2 भोगभूमिरसौ स्मृता. — After 35, D3 ins. 1193*.

**36** b) Ś1 K1. 2 Dc यन्मां त्वं परिपृच्छसि; M1 यन्मा पृच्छति मुद्गल. — d) T2 G1. 2 तत्र (for साधु). B3 D1. 3 G4 गच्छामि; G1 °व.

**37** Ś1 K2 श्रीव्यासः (for व्यास उ°). — a) T1 G2. 4 M एवमुक्तस (for एतच्छ्रुत्वा). Ś1 K1. 2 च (for तु). — b) Ś1 K1. 2 B1. 4 Dn3 D4. 6 विममृषे; B2. 3 Dc विमृशते; T1 स विमृशद्; G2. 4 सोवि(M1 °प)मृशद्. — c) Ś1 K1. 2 B1–3 Dn2. n3 D6 विमृष्य च; Dc विमृशंत; M2 विमृष्यंत.

**38** Before 38, M1 ins. मुनिः. — c) K3 Dc D3 महादोषेन. B1 वाक्यं (for कार्यं). — d) Dc स्वर्गे न. K2. 3 D1. 5 च (for वा).

**39** G2 om. (hapl.) 39[a]–40[b]. — a) Ś1 K1. 2. 4 D3 T2 G1 पतनांतं; K3 B Dc Dn D1. 2. 4–6 G3 °नांते; T1 °तां तन्; M °तां तु (for °नं तन्). B2. 4 Dc2 Dn1 D2–6 T G4 महादुःखं. — b) K3. 4 D1. 3 परितापं; G1 पततोपि. Ś1 K B2–4 Dc1 D1. 3 सुदारुणं. — c) Ś1 K1–3 T1 [अ]श्रुवंति; B2 Dc1 Dn D1–6 G3 चरंति; Dc2 भवंति; D3 (by corr.) G4 पतंति; T2 स्रवंति (for च्यवन्ति).

**40** G2 om. 40[ab] (cf. v.l. 39). — b) D1 T1 G4 M व्यथंते. K3 B4 Dc G4 च (for वा). T2 G न च्यवंति पतंत्वितः (G °त्युत). — c) G1 ततोहं. B4 अव्यग्रं; T1 अन्यत्तन् (for अत्यन्तं). — d) Ś1 जन°; K B4 D1–3. 5 अर्जं° (for मार्गं°). B2 माचिरं (for केवलम्). — Dn (!) ins. after 40: D3, after 35:

1193* मुद्गल उवाच ।
महान्तस्तु अमी दोषास्त्वया स्वर्गस्य कीर्तिताः ।
निर्दोष एव यस्त्वन्यो लोकं तं प्रवदस्व मे ।
देवदूत उवाच ।
ब्रह्मणः सदनादूर्ध्वं तद्विष्णोः परमं पदम् ।
शुद्धं सनातनं ज्योतिः परं ब्रह्मेति यद्विदुः ।
न तत्र विप्र गच्छन्ति पुरुषा विषयात्मकाः । [5]
दम्भलोभमहाक्रोधमोहद्रोहैरभिद्रुताः ।
निर्ममा निरहंकारा निर्द्वंद्वाः संयतेन्द्रियाः ।
ध्यानयोगपराश्चैव तत्र गच्छन्ति मानवाः ।

[*N. B.* Some printed ed. wrongly read these lines after 35 (cf. D3 above).]

**41** Before 41, B4 ins. व्यास उ°. — a) B1 एवमुक्त्वा

इत्युक्त्वा स मुनिर्वाक्यं देवदूतं विसृज्य तम् ।
शिलोञ्छवृत्तिमुत्सृज्य शममातिष्ठदुत्तमम् ॥ ४१
तुल्यनिन्दास्तुतिर्भूत्वा समलोष्टाश्मकाञ्चनः ।
ज्ञानयोगेन शुद्धेन ध्याननित्यो बभूव ह ॥ ४२
ध्यानयोगाद्बलं लब्ध्वा प्राप्य चर्द्धिमनुत्तमाम् ।
जगाम शाश्वतीं सिद्धिं परां निर्वाणलक्षणाम् ॥ ४३
तस्मात्त्वमपि कौन्तेय न शोकं कर्तुमर्हसि ।
राज्यात्स्फीतात्परिभ्रष्टस्तपसा तदवाप्स्यसि ॥ ४४
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
पर्यायेणोपवर्तन्ते नरं नेमिमरा इव ॥ ४५
पितृपैतामहं राज्यं प्राप्स्यस्यमितविक्रम ।
वर्षात् त्रयोदशादूर्ध्वं व्येतु ते मानसो ज्वरः ॥ ४६

वैशंपायन उवाच ।

एवमुक्त्वा स भगवान्व्यासः पाण्डवनन्दनम् ।
जगाम तपसे धीमान्पुनरेवाश्रमं प्रति ॥ ४७

इति श्रीमहाभारते आरण्यकपर्वणि सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥ समाप्तं व्रीहिद्रौणिकपर्व ॥

## २४८

वैशंपायन उवाच ।

तस्मिन्बहुमृगेऽरण्ये रममाणा महारथाः ।
काम्यके भरतश्रेष्ठा विजह्रुस्ते यथामराः ॥ १
प्रेक्षमाणा बहुविधान्वनोद्देशान्समन्ततः ।

C. 3. 15572
B. 3. 264. 2
K. 3. 265. 2

---

(for इत्युक्त्वा स). — $^{b}$) $K_3$ $B_1$ $G_1$ विसर्ज्य. Dc च; $G_1$ वै (for तम्). — $^{c}$) $B_{1-3}$ D (except $D_{1.3.5}$) $G_3$ °वृत्ति-धर्मात्मा.

**42** $42^{a}$=(var.) Gītā (Vulg.) 12. 19. — $42^{b}$=*ibid.* 6. 8. — $^{c}$) Ś$_1$ $K_{1.2}$ ज्ञानशुद्धेन योगेन. — $^{d}$) $M_2$ ज्ञाननित्यो. — After 42, $K_4$ $D_{1-3}$ ins.:

1194* निगृहीतेन्द्रियग्रामं समयोजयदात्मनि ।
युक्तचित्तं तथात्मानं युयोज परमेश्वरे ।

**43** $^{a}$) $G_1$ ध्यानयोगे. $T_1$ फलं; $G_4$ वरं (for बलं). $Dn_2$ $G_2$ $M_1$ °योगबलं लब्ध्वा; $T_2$ °योगे मनो बध्वा; $M_2$ ज्ञानयोगफलं लब्ध्वा. — $^{b}$) $K_4$ $D_3$ वृद्धिम्; B Dn $D_{1.2.4}$ T G बुद्धिम्; $D_6$ ऋद्धिम् (for चर्द्धिम्). $D_1$ च उत्तमां (for अनु°). — $^{c}$) Ś$_1$ वृद्धिं; $K_2$ $B_1$ ऋद्धिं (for सिद्धिं). — $^{d}$) $B_4$ निर्वेद° (for निर्वाण°).

**44** $T_1$ om. $44^{cd}$. — $^{c}$) $D_3$ राज्यस्यांतात्; $G_2$ राज्यात्स्थिरात्.

**45** $^{c}$) Ś$_1$ $K_{1.2}$ $M_2$ °णोपवर्तंत ($M_2$ °ते); $K_4$ $D_{2.3}$ °णैव वर्तंते; $B_{1-3}$ Dc Dn $D_{4.6}$ $T_1$ $G_3$ °णोपसर्पंति (Dn $T_1$ °ते); $T_2$ $G_1$ °णोपगच्छंते ($G_1$ °ति); $G_{2.4}$ °णानुवर्तंते. — $^{d}$) Ś$_1$ $K_{1.2}$ $B_4$ नरं नेमिचरा; $K_4$ (m as in text) $D_3$ (*sup. lin. sec. m.*) नरं नेमिपरा; $B_3$ Dc रथं नेमिनरा; $D_5$ $T_2$ $G_1$ नरा नेमिचरा ($T_2$ °गता; $G_1$ °मरा); $T_1$ नराश्चेवमरा.

**46** $^{b}$) $B_1$ लप्स्यसे°; Dc प्राप्स्यसे°.

**47** T $G_1$ om. the ref. — $^{a}$) $B_{2-4}$ $Dn_1$. $n_2$ स एवमुक्त्वा (by transp.). $D_5$ T $G_1$ तु (for स). — $^{b}$) $M_1$ व्यासः सत्यवतीसुतः. — $47^{cd}$=1. 1. $55^{cd}$. — $47^{c}$=1. 107. $23^{c}$.

Colophon. — *Major parvan:* Ś$_1$ $K_2$ $Dn_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* N $G_3$ व्रीहि($K_4$ om. व्रीहि)-द्रौणिक, followed (except in $B_2$ $D_2$) by समाप्त; T $G_2$ व्रीहिद्रो($T_2$ °द्रौ)णोपाख्यान. $G_1$ (om. sub-parvan name) mentions only मुद्गलोपाख्यान. — *Adhy. name:* $M_2$ व्रीहिद्रोणमोक्षस्तुतिः. — *Adhy. no.* (figures, words or both): Dn 259 ($Dn_3$ 260); $D_1$ 262; $T_1$ $G_4$ M ($M_2$ *inf. lin.*) 251 ($M_2$ orig. 254); $T_2$ $G_1$ 248; $G_2$ 250. — *Śloka no.:* Dn 51 ($Dn_2$ 50); $D_1$ 53.

☞ After adhy. 247, $Dc_1$ Dn $D_{1.2.6}$ $G_3$ ins. two addl. adhy. given in App. I (No. 25), comprising the famous Durvāsas episode, which, as may be seen, is a clear interpolation.

## 248

**1** $^{a}$) Ś$_1$ $K_{1.3.4}$ रम्ये (for ऽरण्ये). — $^{b}$) $K_4$ $B_{1-3}$

C. 3. 15572
B. 3. 264. 2
K. 3. 265. 2

यथर्तुकालरम्याश्च वनराजीः सुपुष्पिताः ॥ २
पाण्डवा मृगयाशीलाश्चरन्तस्तन्महावनम् ।
विजह्रुरिन्द्रप्रतिमाः कंचित्कालमरिंदमाः ॥ ३
ततस्ते यौगपद्येन ययुः सर्वे चतुर्दिशम् ।
मृगयां पुरुषव्याघ्रा ब्राह्मणार्थे परंतपाः ॥ ४
द्रौपदीमाश्रमे न्यस्य तृणबिन्दोरनुज्ञया ।
महर्षेर्दीप्ततपसो धौम्यस्य च पुरोधसः ॥ ५
ततस्तु राजा सिन्धूनां वार्धक्षत्रिर्महायशाः ।
विवाहकामः शाल्वेयान्प्रयातः सोऽभवत्तदा ॥ ६
महता परिबर्हेण राजयोग्येन संवृतः ।
राजभिर्बहुभिः सार्धमुपायात्काम्यकं च सः ॥ ७
तत्रापश्यत्प्रियां भार्यां पाण्डवानां यशस्विनीम् ।
तिष्ठन्तीमाश्रमद्वारि द्रौपदीं निर्जने वने ॥ ८
विभ्राजमानां वपुषा बिभ्रतीं रूपमुत्तमम् ।
भ्राजयन्तीं वनोद्देशं नीलाभ्रमिव विद्युतम् ॥ ९
अप्सरा देवकन्या वा माया वा देवनिर्मिता ।
इति कृत्वाञ्जलिं सर्वे ददृशुस्तामनिन्दिताम् ॥ १०
ततः स राजा सिन्धूनां वार्धक्षत्रिर्जयद्रथः ।
विस्मितस्तामनिन्द्याङ्गीं दृष्ट्वासीद्धृष्टमानसः ॥ ११
स कोटिकाश्यं राजानमब्रवीत्काममोहितः ।
कस्य त्वेषानवद्याङ्गी यदि वापि न मानुषी ॥ १२
विवाहार्थो न मे कश्चिदिमां दृष्ट्वातिसुन्दरीम् ।
एतामेवाहमादाय गमिष्यामि स्वमालयम् ॥ १३
गच्छ जानीहि सौम्यैनां कस्य का च कुतोऽपि वा ।

Dc Dn $D_{2.4.6}$ $G_3$ अटमाना ; $D_3$ वसमाना ( for रममाणा ). S ( except $G_3$ ) महाबलाः. — Dc om. $1^{cd}$. — $^{c}$) $K_{1.3.4}$ $Dn_2$ $T_1$ $G_{1.4}$ M भरतश्रेष्ठ. — $^{d}$) $B_1$ यथा सुराः ( for °मराः ). $T_2$ $G_1$ महात्मानो महाबलाः.

**2** $^{a}$) $K_{1.3.4}$ $B_{1.2}$ $Dc_1$ $Dn_3$ $D_{1.3}$ प्रेक्ष्य° ; $B_4$ वीक्ष° ( for प्रेक्ष° ). — $^{b}$) $T_1$ $G_{2.4}$ M मुदा युताः ( for समन्ततः ). — $^{c}$) $Ś_1$ अथर्तु° ; $D_5$ सर्वर्तु° ( for यथर्तु° ).

**3** $D_5$ om. 3–4. — $^{b}$) $T_1$ $G_{2.4}$ M च ( for तन् ). $K_3$ B D ( except $D_{1.2}$ ; $D_5$ om. ) $T_2$ $G_{1.3}$ महद्वनं ( $B_1$ वनं महत् ) ; $T_1$ $M_1$ महावने. — $^{d}$) $K_4$ $D_1$ किंचित् ; $G_1$ क्वचित्. $Ś_1$ $K_2$ Dn अरिंदम. $T_2$ कालशेषमरिंदमाः.

**4** $D_5$ om. 4 (cf. v.l. 3). — $^{b}$) M ययुः प्रतिदिशो नृप.

**5** $^{cd}$) $T_1$ $G_{2.4}$ M महर्षिं दीप्ततपसं धौम्यं चापि पुरोहितं ( $T_1$ नृप पुरोधसं ; $M_1$ चैव पुरोहितं ; $M_2$ चापि पुरोधसं ).

**6** $^{a}$) $B_2$ च ; $D_6$ $T_2$ $G_{1.3}$ स ( for तु ). $D_1$ सिंहानां ( for सिन्धू° ). — $^{b}$) Dc वार्धक्षत्रो ; $T_1$ वार्धक्षेमिर् ; $M_1$ वर्धक्षत्रिर्. $K_1$ महाबलः ; $K_{3.4}$ $D_{1-3}$ जयद्रथः (cf. $11^{b}$). — $^{c}$) T $G_1$ कर्तुं विवाहं ( for विवाह° ). $K_1$ $D_3$ T $G_{2.4}$ M साल्वे° ; $B_1$ पार्थै° ( for शाल्वे° ). — $^{d}$) $B_{2.4}$ Dc स्म ; S ( except $G_3$ ) [अ]थ ( for सः ). $G_2$ $M_2$ भवत्तदा.

**7** $^{a}$) $D_2$ पारिबर्हेण. — $^{b}$) $B_4$ संभृतः ; $M_1$ संयुतः. — $^{d}$) $K_1$ $B_2$ $D_3$ सरः ; $T_1$ हि सः ; $G_{1.2}$ वनं ( for च सः ).

**8** $^{b}$) $K_1$ मनस्विनीं ; $M_1$ यशस्विनां. — $^{c}$) $D_1$ $T_1$ °द्वारे.

**9** $9^{a}=1^{a}$. 65. $11^{a}$; (var.) 57. $92^{c}$. — $^{b}$) $K_4$ बिभ्रती. $B_1$ कालम् ( for रूपम् ). $G_2$ ( *sup. lin.* as in text ) अद्भुतं ( for उत्तमम् ). — $^{c}$) $K_4$ भ्राजयंती. $G_1$ बिभ्राजतीं वनोद्देशे. — After 9, $M_1$ *repeats* $9^{cd}$ (v.l. राजयंतीं for भ्राज° ).

**10** $^{a}$) $Ś_1$ देवकाया. — $^{b}$) $G_1$ मायया ( for माया वा ). — $^{c}$) $Ś_1$ $K_{1.3}$ $D_1$ $G_4$ [अं]जलीन् ; $K_4$ [अं]जलीः ; $B_2$ मतिं ; $D_2$ [अं]जसा.

**11** $^{a}$) $T_1$ $G_{2.4}$ M तु ( for स ). — $^{b}$) $Ś_1$ वार्धक्षत्रो ; $T_1$ वार्धक्षेमिर्. — $^{c}$) $K_3$ विस्मितस्त्वननिंद्यांगीं ; $K_4$ विस्मितो ह्यनवद्यांगीं ; B ( $B_4$m as in text ) Dn $D_{4.6}$ $G_3$ विस्मितस्त्वनवद्यांगीं ; $G_{2.4}$ विष्ठितामनवद्यांगीं. — $^{d}$) $B_4$ T $G_1$ दुष्टमानसः ; $G_{2.4}$ M दुष्टचेतनः ( $G_4$ °सः ). $Ś_1$ $K_{1.2}$ $B_{1-3}$ Dn $D_{4.6}$ $G_3$ दृष्ट्वा तां दु( $Ś_1$ $K_1$ संहृ )ष्टमानसः.

**12** $Dc_1$ om. 12. — $^{a}$) $Ś_1$ $K_4$ $B_{1.4}$ $Dn_3$ $D_{1.3}$ Cn कोटिकास्यं ; $K_{1.2}$ °श्वं ; $B_{2.3}$ $Dc_2$ $D_{2.6}$ Cnp °ख्यं ; Cnp also as in text. — $^{c}$) $T_2$ कैषा ( for त्वेषा ). $G_1$ ह्यनिंद्यांगी ( for [अ]नवद्याङ्गी ). — $^{d}$) $Ś_1$ यदि वा नाप्यमानुषी ; $K_4$ देवी वा मानुषी यदि.

**13** $^{a}$) T $G_1$ विवाहेच्छा ( for °हार्थो ). $T_1$ $G_1$ काचिद्. — $^{b}$) $B_{2-4}$ Dn $D_{4.6}$ $G_3$ प्राप्य ( for दृष्ट्वा ). $Ś_1$ $K_{1.2.4}$ $D_5$ तु सुंदरीं ; $B_1$ $M_2$ [अ]तिमानुषीं. — $^{c}$) $T_2$ $G_1$ एनाम् ( for एताम् ). — $^{d}$) $Ś_1$ सुरालयं.

**14** $^{a}$) $Dc_1$ सौम्य तां ; $Dn_3$ $D_4$ $G_3$ सौम्येमां ; $T_2$ सौरथ्य ; M सौम्यैतां. — $^{b}$) $Ś_1$ $K_{1.2}$ वापि ; $K_3$ $D_1$ $G_1$ वा नु ; $K_4$ वाथ ; B $Dn_2$. $n_3$ $D_{2-4.6}$ $G_3$ वात्र ; Dc वा त्वं ; $T_1$ का वा ; $T_2$ का नु ; $M_2$ कापि ( for का च ). — $^{c}$) $T_1$ $G_1$ चागता ( for आगता ).

किमर्थमागता सुभ्रूरिदं कण्टकितं वनम् ॥ १४
अपि नाम वरारोहा मामेषा लोकसुन्दरी ।
भजेदद्यायतापाङ्गी सुदती तनुमध्यमा ॥ १५
अप्यहं कृतकामः स्यामिमां प्राप्य वरस्त्रियम् ।
गच्छ जानीहि को न्वस्या नाथ इत्येव कोटिक ॥ १६
स कोटिकाश्यस्तच्छ्रुत्वा रथात्प्रस्कन्द्य कुण्डली ।
उपेत्य पप्रच्छ तदा क्रोष्टा व्याघ्रवधूमिव ॥ १७

इति श्रीमहाभारते आरण्यकपर्वणि अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४८ ॥

# २४९

कोटिकाश्य उवाच ।
का त्वं कदम्बस्य विनम्य शाखा-
मेकाश्रमे तिष्ठसि शोभमाना ।
देदीप्यमानाग्निशिखेव नक्तं
दोधूयमाना पवनेन सुभ्रूः ॥ १
अतीव रूपेण समन्विता त्वं
न चाप्यरण्येषु बिभेषि किं नु ।
देवी नु यक्षी यदि दानवी वा
वराप्सरा दैत्यवराङ्गना वा ॥ २
वपुष्मती वोरगराजकन्या
वनेचरी वा क्षणदाचरस्त्री ।
यद्येव राज्ञो वरुणस्य पत्नी
यमस्य सोमस्य धनेश्वरस्य ॥ ३
धातुर्विधातुः सवितुर्विभोर्वा
शक्रस्य वा त्वं सदनात्प्रपन्ना ।
न ह्येव नः पृच्छसि ये वयं स्म

C. 3. 15591
B. 3. 265. 4
K. 3. 266. 4

---

**15** $^{c}$) Ś1 K1 भजेत व्यायतापांगी (K1 °गा); T2 G1 °द्यासितापांगी. — $^{d}$) B4 T1 G4 M2 सुंदरी (for सुदती).

**16** B1 om. 16$^{ab}$. — $^{c}$) Ś1 K1 कोन्योस्या; T2 को वास्या. — $^{d}$) T G1. 2. 4 नाथः सम्यग्विचारय.

**17** Before 17, M ins. वैशं°. — $^{a}$) Ś1 K1. 2 B3 Dc D2. 3 कोटिकाख्य°; K3. 4 B1. 3. 4 Dn2. n3 D1. 6 °कास्य°. — $^{b}$) =4. 30. 4$^{d}$; 32. 32$^{b}$: 5. 46. 14$^{b}$; etc., etc. T G1 मैश्यात्प्रस्कंद्य तद्रथात्. — $^{d}$) K1. 2 G1 सिंह° (for व्याघ्र°).

Colophon om. in Ś1 K1. 3 D5 (cf. colophon of adhy. 249). — *Major parvan:* Dn2 G2. 4 आरण्य. — *Sub-parvan:* N (Ś1 K1. 3 D5 om.) T1 G3 M2 द्रौपदीप्रमाथ. — *Adhy. no.* (figures, words or both): Dn 262 (Dn3 263): D1 265; T1 G4 M (M2 *inf. lin.*) 252 (M2 orig. 254); T2 G1 249; G3 251. — *Śloka no.:* Dn D1 17.

## 249

**1** Ś1 K1 om. the ref.! K2. 3 B Dc Dn D4. 6 G3 कोटिक उ°; K4 D1–3 कोटिकास्य (D2. 3 °स्य) उ°. — $^{a}$) K3. 4 B1. 2. 4 Dc1 D3. 5 विनाम्य; M1 नियम्य. — $^{b}$) G2. 4 किमाश्रमे (for एका°). — $^{c}$) D2. 3 प्रदीप्य°. — $^{d}$) B2–4 Dc D4. 6 G3 व्याधू° (for दोधू°). Ś1 K1–3 Dn D2. 5. 6 T1 G4 सुभ्रु; Dc D1 सुभ्रू. M आचक्ष्व शीघ्रं (M2 तत्वं) व्रजिनाग्रकेशि (M2 °केशिनी).

**2** $^{b}$) T1 बिभर्षि. D3. 5 किं तु; T G1 का नु; G2. 4 M देवि. — $^{c}$) K3 च; D2 T1 तु; G1. 4 न (for नु). D2. 3 न च (for यदि). Ś1 K1. 2 D5 दानवी त्वं; B4 (m as in text) मानवी वा; Dc T1 मानुषी वा; T2 वापि मानुषी; G1 वा मनुष्या.

**3** $^{a}$) K3 Dn2 D1. 2 G1. 4 च (for वा). K3 °नाग-कन्या; T2 °राजकन्यका; M2 °कन्यका वा (for °राजकन्या). — $^{b}$) S (except T1 G3) वनेचरा. K3 वनेचरी वा कुसुमायुधस्त्री. — $^{c}$) K4 D1–3 किं देव-; G2. 4 त्वं देव- (for यद्येव).

**4** $^{a}$) K3 T1 G2. 4 M1 प्रभोर्वा; K4 D1–3. 5 प्रभा वा (for विभोर्वा). — $^{c}$) D5 चैव (for ह्येव). Ś1 K D1–3 सं- (for नः). D2. 3 के (for ये). — $^{d}$) G1 वयं न (for न चापि). K1. 2 जाता कुले कस्य हि चंद्रवक्त्रे.

**5** $^{b}$) Ś1 भवनं (for प्रभवं). Ś1 K1. 2 D5 पतिं; T2 G1. 2 भुवं (for प्रभुं). — $^{c}$) B1 G4 M transp. पतिं and

C. 3. 15591
B. 3. 265. 4
K. 3. 266. 4

न चापि जानीम तवेह नाथम् ॥ ४
वयं हि मानं तव वर्धयन्तः
पृच्छाम भद्रे प्रभवं प्रभुं च ।
आचक्ष्व बन्धूंश्च पतिं कुलं च
तत्त्वेन यच्चेह करोषि कार्यम् ॥ ५
अहं तु राज्ञः सुरथस्य पुत्रो
यं कोटिकाश्येति विदुर्मनुष्याः ।
असौ तु यस्तिष्ठति काञ्चनाङ्गे
रथे हुतोऽग्निश्चयने यथैव ।
त्रिगर्तराजः कमलायताक्षि
क्षेमंकरो नाम स एष वीरः ॥ ६
अस्मात्परस्त्वेष महाधनुष्मा-
न्पुत्रः कुणिन्दाधिपतेर्वरिष्ठः ।
निरीक्षते त्वां विपुलायतांसः
सुविस्मितः पर्वतवासनित्यः ॥ ७
असौ तु यः पुष्करिणीसमीपे
श्यामो युवा तिष्ठति दर्शनीयः ।
इक्ष्वाकुराज्ञः सुबलस्य पुत्रः
स एष हन्ता द्विषतां सुगात्रि ॥ ८
यस्यानुयात्रं ध्वजिनः प्रयान्ति
सौवीरका द्वादश राजपुत्राः ।
शोणाश्वयुक्तेषु रथेषु सर्वे
मखेषु दीप्ता इव हव्यवाहाः ॥ ९
अङ्गारकः कुञ्जरगुप्तकश्च
शत्रुंजयः संजयसुप्रवृद्धौ ।
प्रभंकरोऽथ भ्रमरो रविश्च
शूरः प्रतापः कुहरश्च नाम ॥ १०
यं षट्सहस्रा रथिनोऽनुयान्ति
नागा हयाश्चैव पदातिनश्च ।
जयद्रथो नाम यदि श्रुतस्ते

---

कुलं. — d) Ś1 K1. 2 D5 T2 G1 यच्चेह; K3. 4 Dc2 D1–3 G2. 4 जातिं च; T1 गतिं च; M1 ज्ञातिं च; M2 ज्ञातींश्च (for तत्त्वेन). Ś1 K1. 2 D5 भद्रे प्र-; T2 किं वाद्य; G1 लोको हि (for यच्चेह).

**6** a) Ś1 K1. 2 D5 हि; Dc D3 च (for तु). — b) =3. 250. $4^{b}$. Dc मां (for यं). Ś1 K B1 Dn D3–5 कोटिकास्ये(K1 °श्ये)ति; B2. 3 Dc D1. 2. 6 °काख्येति; B4 °शश्चाति. — After $6^{ab}$, S (except G3) ins.:

1195* वश्येन्द्रियः सभ्यरुचिर्वरोरु
वृद्धोपसेवी गुरुपूजकश्च ।

— c) T2 G1 अथो नु (G1 न) (for असौ तु). Ś1 K1 कांचनांके. — d) K1. 4 T2 हुताग्निश्च; Dc नतोग्निश्च; G4 चितोग्निश्च. Dc2 G1 च वने; T1 स वने. — e) B Dc Dn D3. 4. 6 G3 °यताक्षः. — f) K3 ममर्ष; B1 D1. 2 G4 स एव (for स एष).

**7** a) B3 तस्मात्; B4 G1 अस्मत्. D2. 3 पुरस्त्वेष. — b) B D (except D1. 2) T2 G3 कुलिंदा°. — cd) Ś1 M2 त्वा (for त्वां). B1. 3. 4 Dn D2. 4. 6 T1 G3 M1 विपुलायताक्षः; B2 Dc कमलायताक्षि (B2 °क्षः). B1. 2. 3m Dc Dn M1 सुपुष्पितः; B3. 4 D3 शुचिस्मितः; T1 आविस्मितः; T2 G1 भुवि स्थितः; G4 सुरस्मिते (for सुविस्मितः). K2 °वासमुख्यः. — For $7^{cd}$, K1 subst.:

1196* सुविस्मितः पर्वतवासनिद्रो
न चापि जानीम तवेह नाथम् ।

[Prior half = (var.) $7^{d}$. Posterior half = $4^{d}$.]

**8** c) Ś1 K3 B2 D2. 5 G2. 4 °राजः (for °राज्ञः). G3 सुभवस्य (for सुबलस्य); and this is the reading of some of our old ed.! — d) B1 Dc Dn D1 एव (for एष).

**9** a) Ś1 K B2. 4 Dc Dn1. n3 D2. 3 T2 यस्यानुचक्रं; B1. 3 Dn2 D5 °नुयात्रां; T1 G2. 4 °नुयात्र-. Cnp अनुयात्रा[:]. — d) Dc मध्येषु; M कुंडे° (for मखे°). Dc1 तप्ता (for दीप्ता).

**10** a) B2. 4 Dn1. n2 D2 G3 कुंजरो गुप्तकश्च; B3 कुंजरगुप्तकंठः; T2 G1. 2. 4 M1 °गुप्तकौ च. — b) Dc2 शत्रुंतपः. K4 °पुत्रबुद्धौ; B1 T G2. 4 M1 °सुप्रबुद्धौ; B3 °सुप्रवृत्तौ; B4 °संप्रवृत्तौ; D1 °सप्रबुद्धौ; M2 °सुप्रसिद्धौ. — c) Ś1 K1. 2 भ्रूभंगुरोथ; K4 Dn D3. 6 G3 भयंकरोथ; B4 M2 प्रभा°; T G1 शुभं°; M1 भ्रमं°. K4 D1 भ्रमरोथ विश्वः. — d) K4 प्रतीपः; T1 परागः; G2. 4 पतंगः (for प्रतापः). K4 कुररश्च; B2 च सहश्च; B3 Dc D3 T G1. 2. 4 M2 कुहक°; B4 Dn G3 कुहन°. D3 T G1. 4 M1 नाम्ना; G2 नाम्नः.

**11** b) T1 G2. 4 M चापि (for चैव). Ś1 K B1. 3 Dc2 D1–3. 5 T2 G1 पदातयश्च. — c) Ś1 K2 यथा (for यदि). — d) Ś1 K1. 2 B1. 2. 4 सुभगः. Ś1 K1 य (for स).

सौवीरराजः सुभगे स एषः ॥ ११
तस्यापरे भ्रातरोऽदीनसत्त्वा
बलाहकानीकविदारणाद्याः ।
सौवीरवीराः प्रवरा युवानो
राजानमेते बलिनोऽनुयान्ति ॥ १२
एतैः सहायैरुपयाति राजा
मरुद्गणैरिन्द्र इवाभिगुप्तः ।
अजानतां ख्यापय नः सुकेशि
कस्यासि भार्या दुहिता च कस्य ॥ १३

इति श्रीमहाभारते आरण्यकपर्वणि एकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २४९ ॥

## २५०

वैशंपायन उवाच ।
अथाब्रवीद् द्रौपदी राजपुत्री
पृष्टा शिबीनां प्रवरेण तेन ।
अवेक्ष्य मन्दं प्रविमुच्य शाखां
संगृह्णती कौशिकमुत्तरीयम् ॥ १
बुद्ध्याभिजानामि नरेन्द्रपुत्र
न मादृशी त्वामभिभाष्टुमर्हा ।
न त्वेह वक्तास्ति तवेह वाक्य-
मन्यो नरो वाप्यथ वापि नारी ॥ २
एका ह्यहं संप्रति तेन वाचं
ददानि वै भद्र निबोध चेदम् ।
अहं ह्यरण्ये कथमेकमेका
त्वामालपेयं निरता स्वधर्मे ॥ ३
जानामि च त्वां सुरथस्य पुत्रं

C. 3. 15605
B. 3. 266. 4
K. 3. 267. 4

---

12 a) Ś1 K1. 2 Dc अस्यापरे. — b) T G1 °कामित्रविदा(T1 °चा)रणाद्याः; G2. 4 M °काभीरविचारणाद्याः. — c) G2 सुवीर°. — d) D3. 5 °याताः (for °यान्ति).

13 b) Ś1 इवावगुप्तः; B2. 3 इवाति°; T1 इवानुयातः. — c) K3 T G2. 4 M सा जानती; Dc न जानतां; D1–3 साजानतां. K4 आख्याहि मे शीघ्र * * * * *; G1 (corrupt) सजानमख्यापय नः सुकेशि. — d) K4 D3 G2. 4 [अ]सि; T2 [अ]थ (for च).

Colophon om. in Ś1 K1. 3 D1 (cf. colophon of adhy. 248). — *Major parvan:* Dn2 G4 आरण्य; G2 श्रीमदारण्यकांड (!). — *Sub-parvan:* N (Ś1 K1. 3 D1 om.) T1 G3 M2 द्रौपदीप्रमाथ. — *Adhy. name:* M2 कोटिकाश्यवचनं. — *Adhy. no.* (figures, words or both): Dn 263 (Dn3 264); T1 G4 M (M2 *inf. lin.*) 253 (M2 orig. 255); T2 G1 250; G2 252. — *Śloka no.:* Dn 13 (Dn3 14).

## 250

1 a) G2. 4 राजपुत्रं (for °पुत्री). T2 G1 अथाब्रवीद्राजपुत्री तदानीं. — b) B2 G1 ऋषभेण (for प्रवरेण). — c) B1 (m as in text) सर्वं (for मन्दं). G1 शालां (for शाखां). — d) T2 संगृह्य सा; G2 संगृह्णंती.

2 a) Ś1 K1. 2 बुद्ध्या विजानामि; K3 शुद्धाभिजा°; D2. 3 बुद्ध्याभिजानासि; T1 अन्यापि जानामि; T2 G1. 3. 4 M अद्याभिजानीहि (M °नामि). — b) B2 अभिभाष्यमाना; Dn अभिभाष्टुमर्हति (!); D1 T1 अभिप्रष्टुमर्हा; G2. 4 अभिद्रष्टुमर्हा. T2 G1 न मादृशी त्वादृशैः (G1 त्वद्विधैः) प्रष्टुमर्हा. — c) Ś1 K1. 2 B1 Dc2 Dn2 D2. 6 G2–4 त्वेव (for त्वेह). T2 G1 न त्वेव वक्ता हि न मेद्य वाक्यं.

3 K3 om. 3ab. — a) Ś1 K1. 2 एकाप्यहं. G1 नैव (for तेन). B4 G2 वाक्यं; T1 वाचा. — b) K4 Dn2 D1–3 T1 ददामि. Ś1 K (K3 om.) D1–3 T2 G1 ते; T1 G2. 4 M तद् (for वै). — c) K3 अरण्ये (om. हि); G4 त्वरण्ये. — d) Ś1 K1 समा°; B4 त्वां वा°; M1 यामा° (for त्वामा°). T2 G1 नियता.

4 a) Ś1 K1. 2 G1 त्वा (for त्वां). — b) = 3. 249. 6b. Ś1 K2. 4 B1. 4 Dn1. n3 D1. 5 °कास्ये°; K1 °काश्चे°; K3m B2. 3 Dc D2. 3. 6 °काख्ये° (for °काश्ये°). — K3. 4 M om. (hapl.) 4c–5b. — c) Ś1 तुभ्यं हि सर्वम् (for

C. 3. 15605
B. 3. 266. 4
K. 3. 267. 4

यं कोटिकाश्येति विदुर्मनुष्याः ।
तस्मादहं शैब्य तथैव तुभ्य-
माख्यामि बन्धून्प्रति तन्निबोध ॥ ४
अपत्यमस्मि द्रुपदस्य राज्ञः
कृष्णेति मां शैब्य विदुर्मनुष्याः ।
साहं वृणे पञ्च जनान्पतित्वे
ये खाण्डवप्रस्थगताः श्रुतास्ते ॥ ५
युधिष्ठिरो भीमसेनार्जुनौ च
माद्र्याश्च पुत्रौ पुरुषप्रवीरौ ।
ते मां निवेश्येह दिशश्चतस्रो
विभज्य पार्था मृगयां प्रयाताः ॥ ६
प्राचीं राजा दक्षिणां भीमसेनो
जयः प्रतीचीं यमजावुदीचीम् ।
मन्ये तु तेषां रथसत्तमानां
कालोऽभितः प्राप्त इहोपयातुम् ॥ ७
संमानिता यास्यथ तैर्यथेष्टं
विमुच्य वाहानवगाहयध्वम् ।
प्रियातिथिर्धर्मसुतो महात्मा
प्रीतो भविष्यत्यभिवीक्ष्य युष्मान् ॥ ८
एतावदुक्त्वा द्रुपदात्मजा सा
शैब्यात्मजं चन्द्रमुखी प्रतीता ।
विवेश तां पर्णकुटीं प्रशस्तां
संचिन्त्य तेषामतिथिस्वधर्मम् ॥ ९

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५० ॥

# २५१

वैशंपायन उवाच ।
अथासीनेषु सर्वेषु तेषु राजसु भारत ।
कोटिकाश्यवचः श्रुत्वा शैब्यं सौवीरकोऽब्रवीत् ॥ १
यदा वाचं व्याहरन्त्यामस्यां मे रमते मनः ।

---

तथैव तुभ्यम्). — $^{d}$) Ś$_{1}$ K$_{1.2}$ ते; T$_{1}$ G$_{1}$ तान् (for तन्). B D (except D$_{1-3}$) आख्यामि बंधून्प्रथितं कुलं च; T$_{2}$ आख्यामि बंधुप्रतिमं निबोध.

**5** K$_{3.4}$ M om. $5^{ab}$ (cf. v.l. 4). — $^{b}$) Ś$_{1}$ B$_{1}$ मा (for मां). — $^{c}$) G$_{2.4}$ M वृता (for वृणे). Dn$_{2}$. n$_{3}$ पतीन्वै (for पतित्वे).

**6** $^{a}$) M भीमसेनोर्जुनश्च.

**7** $^{a}$) Ś$_{1}$ K$_{1}$ भीमसेनोप्यवाचीं (for दक्षिणां भी°). — $^{b}$) G$_{1}$ जिष्णुः (for जयः). T$_{2}$ G$_{1}$ च यमा° (for यमजा°). — $^{d}$) B$_{1}$ कालोचितः; T G$_{1}$ कालोतीतः; G$_{2.4}$ M कालो बहु. D$_{1}$ कालोभीतः प्रातरिहोपयातुं.

**8** $^{a}$) Ś$_{1}$ संमानिताश्चाप्यथ वा यथेष्टं. — $^{b}$) B Dc Dn D$_{2.4.6}$ G$_{3}$ अवरोह(D$_{2}$ °प)यध्वं; M अवगाहयंतु. — $^{d}$) T$_{1}$ G$_{2.4}$ M सर्वान् (for युष्मान्).

**9** $^{b}$) B$_{1}$ प्रशस्ता (for प्रतीता). — $^{c}$) B$_{2.3}$ Dn D$_{4.6}$ G$_{3}$ पर्णशालां; D$_{2.3}$ पत्रकुटीं. — $^{d}$) Dn$_{1}$. n$_{2}$ D$_{6}$ G$_{3}$ अतिथिस्वधर्मं. The reading अतिथिस्वमर्थं (for °स्वधर्मम्) of some old printed ed. was *not* found in any MS. collated!

Colophon. — *Major parvan:* Ś$_{1}$ K$_{2}$ Dn$_{2}$ G$_{2.4}$ आरण्य. — *Sub-parvan:* Ś$_{1}$ K B Dc Dn D$_{1.2.4-6}$ G$_{3}$ M$_{2}$ द्रौपदीप्रमाथ. — *Adhy. name:* B$_{4}$ द्रौपदीवाक्यं. — *Adhy. no.* (figures, words or both): Dn 264 (Dn$_{3}$ 265); D$_{1}$ 266; T$_{1}$ G$_{4}$ M (M$_{2}$ *inf. lin.*) 254 (M$_{2}$ orig. 256); T$_{2}$ G$_{1}$ 251; G$_{2}$ 253. — *Śloka no.:* Dn 9; D$_{1}$ 23.

## 251

**1** $^{a}$) K$_{3}$ B$_{1.3.4}$ D (except D$_{1-3.5}$) S (except G$_{2.4}$) तथा° (for अथा°). — After $1^{ab}$, B$_{2-4}$ D (except D$_{1.2}$) ins.:

1197* यदुक्तं कृष्णया सार्धं तत्सर्वं प्रत्यवेदयत् ।

सीमन्तिनीनां मुख्यायां विनिवृत्तः कथं भवान् ॥ २
एतां दृष्ट्वा स्त्रियो मेऽन्या यथा शाखामृगस्त्रियः ।
प्रतिभान्ति महाबाहो सत्यमेतद्ब्रवीमि ते ॥ ३
दर्शनादेव हि मनस्तया मेऽपहृतं भृशम् ।
तां समाचक्ष्व कल्याणीं यदि स्याच्छैब्य मानुषी ॥ ४

कोटिकाश्य उवाच ।

एषा वै द्रौपदी कृष्णा राजपुत्री यशस्विनी ।
पञ्चानां पाण्डुपुत्राणां महिषी संमता भृशम् ॥ ५
सर्वेषां चैव पार्थानां प्रिया बहुमता सती ।
तया समेत्य सौवीर सुवीरान्सुसुखी व्रज ॥ ६

वैशंपायन उवाच ।

एवमुक्तः प्रत्युवाच पश्यामो द्रौपदीमिति ।
पतिः सौवीरसिन्धूनां दुष्टभावो जयद्रथः ॥ ७
स प्रविश्याश्रमं शून्यं सिंहगोष्ठं वृको यथा ।
आत्मना सप्तमः कृष्णामिदं वचनमब्रवीत् ॥ ८
कुशलं ते वरारोहे भर्तारस्तेऽप्यनामयाः ।
येषां कुशलकामासि तेऽपि कच्चिदनामयाः ॥ ९

द्रौपद्युवाच ।

कौरव्यः कुशली राजा कुन्तीपुत्रो युधिष्ठिरः ।
अहं च भ्रातरश्चास्य यांश्चान्यान्परिपृच्छसि ॥ १० C. 3. 15622 B. 3. 267. 12 K. 3. 268. 12

---

[D5 वीर (for सार्ध). B2 समवर्धयत्; D5 कोटिकोब्रवीत् (for प्रत्य°).]

— D5 cont.:

1198* वाक्यं यथार्थं तच्छ्रुत्वा कोटिकाश्यमुखोद्गतम् ।

On the other hand, after 1ab, G2. 4 ins.:

1199* कोटिकाश्यो जगामाशु सिन्धुराजनिवेशनम् ।

— c) MSS. °कास्य°, °काख्य°, °काश्व°, etc. T2 G1. 2. 4 श्रोतुं (for श्रुत्वा). — d) A few MSS. सैब्यं.

**2** a) K3. 4 Dc D1–3 यदा वाचो; T1 पांचालीति; T2 यदुवाच. — b) T निरतं; G1 नियतं (for रमते). — c) K3 Dc2 T2 मुख्यानां; B4 मुख्या सा; D1 मुख्येयं. — d) T2 विनियुक्तः. K3 भवेत्; D1 तदा; G2 पुमान् (for भवान्).

**3** a) Dc स्त्रिया; T2 G1. 2. 4 स्त्रियं. Ś1 K1 [ऽ]प्यन्या; B1 [ऽ]न्या मे; T2 G1 मन्ये; G2 मेन्यां.

**4** ab) Ś1 K2 मनो यया; K1. 4 D1. 3. 5 मनोनया (for मनस्तया). T1 M प्रसभं (for ऽपहृतं). Ś1 K1. 2 बलात् (for भृशम्). — c) D4. 6 T1 G2. 4 M तां ममाचक्ष्व; G1 नाममाचक्ष्व (corrupt). — d) T1 G4 M2 मानुषीं.

**5** Ś1 K4 D1. 3 कोटिकास्य उ° (Ś1 om. उ°); K1 °काश्वः; K2. 3 B Dc Dn D4. 6 G3 कोटिक उ°; D2 °काख्य उ°; M शैब्यः. — b) D2 राजपत्नी. M1 तर° (for यश°). — d) B4 T2 G1 transp. महिषी and संमता.

**6** a) B4 T1 G2. 4 M1 om. च. — b) T2 G1 या वै प्रियतमा सती. — c) Ś1 यथा; K2 तथा (for तया). G1 सौवीरान्. — d) Ś1 K1. 2 सुवीरां; B1. 4 Dc T1 G2. 4 सौवीरान्; G1 प्रयाहि. K1. 2 सुमुखीं; K4 B1. 4 Dc D2. 5 सुमुखी; G2 सुकृती. B2. 3 Dn D4. 6 G3 सौवीराभिमुखो व्रज.

**7** T2 G1 om. the ref. — b) K3 पश्याम; B2. 4 D1 G1. 3 पश्यामि; T2 नापश्यं. K1. 2 प्रति (for इति). — c) Ś1 K Dc D1–3. 5 T2 G1 नृपः (for पतिः). D5 सौवीरसिंहानां; T1 G2 सुवीरसिंधूनां.

**8** a) T1 तत्; T2 M1 सं- (for स). B1. 3. 4 Dn D4. 6 G3 M पुण्यं (for शून्यं). G2. 4 स प्रविश्याश्रमपदं. — b) Ś1 K1. 2 सिंहीगोष्ठ-; T1 सिंहपर्णीं; G1 M1 सिंहकोष्ठं; G4 सिंहकोष्ठ-. B4 (m as in text) मृगो (for वृको). — c) Ś1 K1. 2 आत्मनः. D1 मुदितः (for सप्तमः). B4m आत्मनाभिमुखः कृष्णाम्; T2 G1. 2 आत्मना सप्तदशमः. — d) T2 G1. 2 कृष्णां (for इदं). B4 इदमित्यब्रवीद्वचः; T1 G4 M अथोवाच हसन्निव (G4 महीपते).

**9** D4 om. 9. — b) B1 G4 हि (for ऽपि). — c) T2 येषां कुशलकामासीत्. — d) T G4 तेषां (for तेऽपि). T G2. 4 अनामयं. G1 तेषां संप्रत्यनामयं.

**10** K2 B1 Dc Dn D2. 4–6 ins. after the ref.: B2–4 ins. after 10: T G ins. after 1201*:

1200* अपि ते कुशलं राज्ये राष्ट्रे कोशे बले तथा ।
कच्चिदेकः शिबीनाढ्यान्सौवीरान्सह सिन्धुभिः ।
अनुतिष्ठसि धर्मेण ये चान्ये विदितास्त्वया ।

[(L. 1) Dn राजन् (!); T G राष्ट्रे (for राज्ये). T G तथा कोशे च सैंधव. — (L. 2) D5 अथ; T G1. 2. 4 सर्वान् (for आढ्यान्). Dc2 सह बंधुभिः; T G1. 2. 4 चाप्यकंटकान्. — (L. 3) T G विजिताः. G1 स्मृताः (for त्वया).]

— D1 om. 10–11. — a) G4 राजन् (for राजा). — b) Ś1 K Dc2 D2. 3. 5 धर्म° (for कुन्ती°). — d) Ś1 K Dc2 D2. 3. 5 अनु° (for परि°). — After 10, B2–4 ins. 1200*; while T G ins.:

1201* अपि त्वं कुशली राजन्सहामात्यः सहप्रजः ।,

followed by 1200*.

C. 3. 25623
B. 3. 267. 13
K. 3. 268. 13

पाद्यं प्रतिगृहाणेदमासनं च नृपात्मज ।
मृगान्पञ्चाशतं चैव प्रातराशं ददानि ते ॥ ११
ऐणेयान्पृषतान्न्यङ्कून्हरिणाञ्शरभाञ्शशान् ।
ऋश्यान्रुरूञ्शम्बरांश्च गवयांश्च मृगान्बहून् ॥ १२
वराहान्महिषांश्चैव याश्चान्या मृगजातयः ।
प्रदास्यति स्वयं तुभ्यं कुन्तीपुत्रो युधिष्ठिरः ॥ १३

जयद्रथ उवाच ।

कुशलं प्रातराशस्य सर्वा मेऽपचितिः कृता ।
एहि मे रथमारोह सुखमाप्नुहि केवलम् ॥ १४
गतश्रीकांश्च्युतान्राज्यात्कृपणान्गतचेतसः ।
अरण्यवासिनः पार्थान्नानुरोद्धुं त्वमर्हसि ॥ १५
न वै प्राज्ञा गतश्रीकं भर्तारमुपयुञ्जते ।
युञ्जानमनुयुञ्जीत न श्रियः संक्षये वसेत् ॥ १६
श्रिया विहीना राज्याच्च विनष्टाः शाश्वतीः समाः ।
अलं ते पाण्डुपुत्राणां भक्त्या क्लेशमुपासितुम् ॥ १७
भार्या मे भव सुश्रोणि त्यजैनान्सुखमाप्नुहि ।
अखिलान्सिन्धुसौवीरानवाप्नुहि मया सह ॥ १८

वैशंपायन उवाच ।

इत्युक्ता सिन्धुराजेन वाक्यं हृदयकम्पनम् ।
कृष्णा तस्मादपाक्रामद्देशात्सभ्रुकुटीमुखी ॥ १९
अवमत्यास्य तद्वाक्यमाक्षिप्य च सुमध्यमा ।
मैवमित्यब्रवीत्कृष्णा लज्जस्वेति च सैन्धवम् ॥ २०
सा काङ्क्षमाणा भर्तृणामुपयानमनिन्दिता ।
विलोभयामास परं वाक्यैर्वाक्यानि युञ्जती ॥ २१

इति श्रीमहाभारते आरण्यकपर्वणि एकपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५१ ॥

---

**11** D1 om. 11 (cf. v.l. 10). — a) B2 T G1. 2. 4 त्वम् (for [इ]दम्). — c) K1 D3 पंचशतं. Ś1 चापि; K1. 2 चास्य (for चैव). T1 G1 मृगान्हत्वा मृगीं चैव; T2 मृगान्हतान्मृतांश्चैव; G2. 4 मृगान्विता मृगीश्चैव. — d) G4 प्रातराशीन्. K3. 4 D2. 3 T G1. 2. 4 ददामि.

**12** a) Ś1 K1. 2 Dc D3 एणेयान्. T1 न्यंकुकांश्चैव (for पृषतान्न्यङ्कून्). — b) M1 शलभान्. G4 शकान्; M1 शलान् (for शशान्). — c) Ś1 K1. 2 B2. 3 Dc1 D3. 5 ऋष्यान्; K3 B1. 4 Dc2 Dn D1. 2. 4. 6 T G3 ऋक्षान्. Ś1 K1 कुरूञ् (for रुरूञ्)! Ś1 K1. 2 शंभरांश्च; D3 M1 च सृमरान्; T1 M2 वराहांश्च; T2 G1. 2. 4 च चमरान्.

**14** b) Ś1 सर्वस्य; K1. 2 सर्वापि; D3 सदा मे; D5 सर्वा च (for सर्वा मे). B Dc Dn D4. 6 G3 सर्वं मे दित्सितं (B1 तृषितं) त्वया. — c) K4 आरुह्य.

**15** a) T2 G1. 2. 4 हत° (for गत°). B Dn D4. 6 हृतराज्यान्. — b) D5 नष्ट° (for गत°). — c) K3 T2 आरण्य°. — d) D1 इहा° (for त्वम°).

**16** a) K4 B1. 3 Dn1. n2 T2 G3 नैव; G1. 2. 4 न तु; M न हि (for न वै). Ś1 पूज्या; K1 G4 प्रज्ञा. M गतश्रीकान्. T1 न तु प्राज्ञान्गतश्रीकान्. — b) Ś1 K1. 2 B1. 2. 4 उपभुंजते; K3 Dc °युंजसे (K3m °भुंजसे); G2 °युज्यते. T1 M भर्तॄन्समुपयुं(T1 °भुं)जते. — c) Ś1 K1. 2 भुंजानम्. K1. 3 Dc2 D1–3 T1 M उपयुं(T1 °भुं)जीत. — d) B1 श्रिया न; B4 श्रियश्च (for न श्रियः). Ś1 संक्षयं; B4 Dn2 D1. 2. 4. 6 प्रक्षये; T2 संक्षयो. T2 भवेत् (for वसेत्).

**17** a) B3. 4 विहीनान्. Dn राष्ट्राच्च (!). — b) S (except G3) च्युतास्ते (for विनष्टाः). — c) B1 अनष्टे (for अलं ते).

**18** 18a = 1. 67. 1c, etc. — b) K3. 4 Dc2 D1–3 T1 G4 M1 त्यजैतान्. — d) B1. 4 तानाप्नुहि; B2. 3 Dn D4. 6 T2 G3 आप्नुहि त्वं; G1. 2. 4 प्राप्नुहि त्वं (for अवाप्नुहि).

**19** K4 om. 19. — d) G1 क्रोधात् (for देशात्). B3. 4 Dc सा (for स-).

**20** a) Ś1 K Dc D1–3. 5 अनादृत्य तु (K4 Dc च); B1. 3 अवमन्यास्य. T1 G2. 4 M transp. तद् and वाक्यं. — b) S (except G3) तदाक्षिप्य (for आक्षिप्य च). — c) M2 वाक्यं (for कृष्णा). — d) T1 वधस्वेति; T2 G1. 4 त्यज° (for लज्ज°). B4 लज्जसे नेति सैंधवं; Dc2 न लज्जस्वेति सैंधव.

**21** b) B1–3 Dc Dn D3 उपयातम्; D5 उपस्थानम्. — c) G1. 2 विलंब° (for विलोभ°). Ś1 K B1. 4 Dn3 D1–6 परैर् (for परं). — d) T [अ]योजयत्; M योजयत् (for युञ्जती). G1. 2. 4 वाक्यैर्वाक्यं न योजयत् (G2 न्ययोजयेत्). — After 21, T G1. 2. 4 ins.:

1202* द्रौपदी ।

नैवं वद महाबाहो न्याय्यं त्वं न च मन्यसे ।
पाण्डूनां धार्तराष्ट्राणां स्वसा चैव कनीयसी ।
दुःशला नाम तस्यास्त्वं भर्ता राजकुलोद्भवः ।
मम भ्राता च न्याय्येन त्वया रक्ष्या महारथ ।

तत्सर्वमानुपूर्व्येण शशंसास्मै वृषस्तदा ॥ १८
तच्छ्रुत्वा भगवान्देवो भानुः स्वर्भानुसूदनः ।
उवाच तं तथेत्येव कर्णं सूर्यः स्मयन्निव ॥ १९
ततस्तत्त्वमिति ज्ञात्वा राधेयः परवीरहा ।
शक्तिमेवाभिकाङ्क्षन्वै वासवं प्रत्यपालयत् ॥ २०

इति श्रीमहाभारते आरण्यकपर्वणि षडशीत्यधिकद्विशततमोऽध्यायः ॥ २८६ ॥

# २८७

जनमेजय उवाच ।
किं तद्गुह्यं न चाख्यातं कर्णायेहोष्णरश्मिना ।
कीदृशे कुण्डले ते च कवचं चैव कीदृशम् ॥ १
कुतश्च कवचं तस्य कुण्डले चैव सत्तम ।
एतदिच्छाम्यहं श्रोतुं तन्मे ब्रूहि तपोधन ॥ २
वैशंपायन उवाच ।
अयं राजन्ब्रवीम्येतद्यत्तद्गुह्यं विभावसोः ।
यादृशे कुण्डले चैव कवचं चैव यादृशम् ॥ ३
कुन्तिभोजं पुरा राजन्ब्राह्मणः समुपस्थितः ।
तिग्मतेजा महाप्रांशुः श्मश्रुदण्डजटाधरः ॥ ४
दर्शनीयोऽनवद्याङ्गस्तेजसा प्रज्वलन्निव ।
मधुपिङ्गो मधुरवाक्तपःस्वाध्यायभूषणः ॥ ५
स राजानं कुन्तिभोजमब्रवीत्सुमहातपाः ।
भिक्षामिच्छाम्यहं भोक्तुं तव गेहे विमत्सर ॥ ६
न मे व्यलीकं कर्तव्यं त्वया वा तव चानुगैः ।
एवं वत्स्यामि ते गेहे यदि ते रोचतेऽनघ ॥ ७

C. 3. 17004
B. 3. 303. 7
K. 3. 304. 7

---

**19** $^{c}$) K1. 2 S (except G3) तत् (for तं). Dc D2 G2. 4 M [ए]वं (for [ए]व). — $^{d}$) K1. 2 सूर्यः कर्णं (by transp.); D5 कर्णः सूर्यं.

**20** $^{a}$) K1 तथा (for ततस्). T G1. 2. 4 सत्यम् (for तत्त्वम्).

Colophon. — *Major parvan:* K1. 2 Dn2 G2. 4 आरण्य. — *Sub-parvan:* K3. 4 B Dc Dn1. n3 D1–6 G3 M कुंडला(K3 D5 °लाभि)हरण. — *Adhy. no.* (figures, words or both): Dn1 (*sup. lin.*). n2 300; Dn3 301; D1 304; T1 286 (as in text!); T3 G4 M1. 2 (*inf. lin.*) 290; G1 287; G2 289; M2 (orig.) 292. — *Śloka no.:* Dn 21.

## 287

**1** $^{a}$) S (except G3) तु (for तद्). — $^{b}$) K3 [अ]-तीक्ष्ण°; K4 D1 [ए]वोष्ण°; B1. 2 D3 [इ]वोष्ण° (for [इ]होष्ण°). — For 1$^{cd}$, cf. 3$^{cd}$. — $^{c}$) K4 Dc D1. 2 T G1. 2. 4 चैव (for ते च).

**2** $^{c}$) K Dc D1–3. 5 विज्ञातुं (for [अ]हं श्रोतुं). — After 2, M ins.:

1336* यत्तद्विवस्वतो गुह्यं यादृशे कुण्डले च ते ।
उभयं तद्यथा ब्रह्मंस्तन्ममाचक्ष्व सत्तम ।

**3** $^{a}$) B3 T G1. 2. 4 अहं (for अयं). — $^{b}$) K Dc D1–3. 5 गुह्यं तेहं; B Dn D4. 6 G3 तस्य गुह्यं (for यत्तद्गुह्यं). — For 3$^{cd}$, cf. 1$^{cd}$. — $^{c}$) B Dn D4. 6 G3 ते च (for चैव). — $^{d}$) B4 चैव तादृशं; M2 च तथाविधं.

☞ Cf. versions of this story in Ādi 104.

**4** $^{a}$) K1. 2. 4 D1. 3 महाराजं (K4 °ज); Dn1. n2 D4 G3 तदा राजन्; M2 यथा रा°. — $^{b}$) B Dn D4. 6 G3 पर्युपस्थितः; T2 शंसितव्रतः. — $^{c}$) K1–3 T G1. 2. 4 महान्प्रांशुः. — $^{d}$) K Dc D1–3. 5 चीर°.

**5** $^{c}$) M (hypermetric) °पिंगलो (for °पिङ्गो). — $^{d}$) Dc D2 शुचि° (for तपः°).

**6** $^{b}$) Dc D2 स; D4 च (for सु-). — Before 6$^{cd}$, B3. 4 ins. ब्राह्मण उ°. — $^{c}$) B Dn D4. 6 G3 वै (for [अ]हं). K1. 2 स्थातुं (for भोक्तुं). — $^{d}$) D5 भवद्- (for तव). K Dc D1–3. 5 विमत्सरः; T G1. 2. 4 [ऽ]नुवत्सरं; M1 च वत्सरं; M2 विमत्सरं.

**7** $^{b}$) K3 D3 त्वया वै; K4 तवापि (for त्वया वा). B2 T2 G1. 2 वा° (for चा°). K1. 2 D1. 5 त्वया चैव (K2 वै च) तवानुगैः. — $^{d}$) K4 रोचते यदि तेनघ.

**8** $^{a}$) D3 तु (for च). — $^{b}$) D5 तिष्ठेयं च यथेच्छया.

C. 3. 17005
B. 3. 303. 8
K. 3. 304. 8

यथाकामं च गच्छेयमागच्छेयं तथैव च ।
शय्यासने च मे राजन्नापराध्येत कश्चन ॥ ८
तमब्रवीत्कुन्तिभोजः प्रीतियुक्तमिदं वचः ।
एवमस्तु परं चेति पुनश्चैनमथाब्रवीत् ॥ ९
मम कन्या महाब्रह्मन्पृथा नाम यशस्विनी ।
शीलवृत्तान्विता साध्वी नियता न च मानिनी ॥ १०
उपस्थास्यति सा त्वां वै पूजयानवमन्य च ।
तस्याश्च शीलवृत्तेन तुष्टिं समुपयास्यसि ॥ ११
एवमुक्त्वा तु तं विप्रमभिपूज्य यथाविधि ।
उवाच कन्यामभ्येत्य पृथां पृथुललोचनाम् ॥ १२
अयं वत्से महाभागो ब्राह्मणो वस्तुमिच्छति ।
मम गेहे मया चास्य तथेत्येवं प्रतिश्रुतम् ॥ १३
त्वयि वत्से पराश्वस्य ब्राह्मणस्याभिराधनम् ।
तन्मे वाक्यं न मिथ्या त्वं कर्तुमर्हसि कर्हिचित् ॥ १४
अयं तपस्वी भगवान्स्वाध्यायनियतो द्विजः ।
यद्यद्ब्रूयान्महातेजास्तत्तद्देयममत्सरात् ॥ १५
ब्राह्मणा हि परं तेजो ब्राह्मणा हि परं तपः ।
ब्राह्मणानां नमस्कारैः सूर्यो दिवि विराजते ॥ १६
अमानयन्हि मानार्हान्वातापिश्च महासुरः ।
निहतो ब्रह्मदण्डेन तालजङ्घस्तथैव च ॥ १७
सोऽयं वत्से महाभार आहितस्त्वयि सांप्रतम् ।
त्वं सदा नियता कुर्या ब्राह्मणस्याभिराधनम् ॥ १८
जानामि प्रणिधानं ते बाल्यात्प्रभृति नन्दिनि ।
ब्राह्मणेष्विह सर्वेषु गुरुबन्धुषु चैव ह ॥ १९
तथा प्रेष्येषु सर्वेषु मित्रसंबन्धिमातृषु ।
मयि चैव यथावत्त्वं सर्वमादृत्य वर्तसे ॥ २०

— [d]) $K_{1.2}$ नापराध्यति; T $G_{1.2.4}$ नावरुध्येत.

**9** [b]) $T_2$ प्रीतियुक्तः प्रियं वचः. — [c]) T वरं (for परं). — [d]) $K_4$ $B_4$ $Dc_2$ चैवम् (for चैनम्).

**10** [a]) B D (except $D_{1.3.5}$) $G_3$ °प्राज्ञ (for ब्रह्मन्). — In $D_3$, the portion of the text from 10[c] up to 3. 299. 26[d] is lost on a missing fol. — [d]) K Dc $D_{1.2.5}$ नाति($K_{1.2}$ $D_5$ °भि)मानिनी; B Dn $D_{4.6}$ $G_3$ चैव भाविनी; $G_4$ न मनस्विनी (for न च मा°).

**11** $D_3$ missing (cf. v.l. 10). — [a]) $K_{1.2}$ $D_2$ त्वा (for त्वां). — [b]) $D_{4.6}$ नाव° (for [अ]नव°). $K_{3.4}$ Dc $D_{1.2.5}$ ह; $B_3$ वै (for च). $K_1$ पूजया नावमन्यत; $K_2$ °यामास मन्यत; $T_1$ °या मनसापि भो; $T_2$ $G_{2.4}$ °याना महा-विभो; $G_1$ °या न मया विभो; M °यानवमत्य ह. — [c]) $T_1$ $G_1$ तु (for च). — [d]) Dc $D_2$ प्रीतिं (for तुष्टिं). $K_4$ $B_{1.2}$ Dc $D_2$ °यास्यति.

**12** $D_3$ missing (cf. v.l. 10). — [a]) $K_{1-3}$ $D_5$ च (for तु). — [b]) S (except $G_3$ $M_1$) प्रति° (for अभि°).

**13** $D_3$ missing (cf. v.l. 10). — [a]) $T_1$ $G_1$ वै सुमहा° (for वत्से महा°). — [d]) $K_{1.2}$ $D_{4.6}$ $T_2$ [ए]व; $D_1$ [अ]ति- (for [ए]वं).

**14** $D_3$ missing (cf. v.l. 10). — [a]) $K_{1.2}$ तव (for त्वयि). $T_2$ $G_{2.4}$ °यत्तं; $M_2$ °श्वास्य (for °श्वस्य). — [c]) B Dn $D_{4.6}$ $G_3$ अमिथ्या (for न मिथ्या). — [d]) $K_{1.2}$ वै क्वचित्; $B_2$ $G_2$ कस्यचित् (for कर्हि°).

**15** $D_3$ missing (cf. v.l. 10). — [b]) $B_{3.4}$ S (except $G_3$) °निरतः (for °नियतः). $T_1$ $G_1$ शुचिः (for द्विजः). K Dc $D_{1.2.5}$ सदा ($K_{1.2}$ मुनिः) सुनियतें-द्रियः ($K_3$ $D_2$ °तो द्विजः). — [d]) $K_{1.2}$ M अमत्सरं (for °त्सरात्).

**16** $D_3$ missing (cf. v.l. 10). — [a]) $K_4$ B Dn $D_{4.6}$ $G_3$ M ब्राह्मणो हि. $K_4$ $B_4$ महातेजो; $B_3$ परं तेजा. — [b]) B Dn $D_{4.6}$ $G_3$ M ब्राह्मणो. $K_{3.4}$ $B_4$ Dc $D_{2.5}$ परमं (for हि परं). — [c]) $K_{1.2}$ नमस्कारात्.

**17** $D_3$ missing (cf. v.l. 10). — [a]) $K_{1.2}$ हि मां-($K_1$ मं)डव्यो; $K_{3.4}$ $D_1$ हि दांडि($K_3$ °ड)क्यो; $D_5$ वि-दर्भायां; T $G_{1.2.4}$ M तान् दांड($T_1$ वार्त-; $G_1$ बास्त-; $G_{2.4}$ दंडि)क्यो (for हि मानार्हान्). — [b]) $K_{1.2}$ °बलः (for °सुरः). — [d]) $K_{1.2}$ ज्वलज्जंघा° (for तालजङ्घ°).

**18** $D_3$ missing (cf. v.l. 10). — [a]) $K_{3.4}$ M मया (for महा-). $B_1$ $T_2$ $G_2$ -भाग; $B_2$ -भारम्; $G_4$ -भागे (for -भार). — [b]) $K_{2.3}$ आहृत° (for आहित°). — [c]) Dc $D_2$ नियतः; T $G_{1.2.4}$ M निभृ($T_2$ °र)ता (for नियता). Dc $G_1$ कुर्याद् (for कुर्या).

**19** $D_3$ missing (cf. v.l 10). — [b]) T $G_{1.2.4}$ भा-मिनि (for नन्दिनि). — [c]) S (except $G_3$) [अ]पि (for [इ]ह). — [d]) $T_1$ $G_{1.2}$ हि (for ह).

**20** $D_3$ missing (cf. v.l. 10). — [a]) $D_5$ तव (for तथा). — [b]) $T_2$ $G_{2.4}$ वीर- (for मित्र-). $D_5$ -भ्रातृषु; $T_2$ $G_{2.4}$ -बंधुषु (for -मातृषु). — [c]) $K_{1.4}$ $B_4$ $Dc_2$ $D_{1.2}$ M °तत्त्वं; $K_3$ °वत्तं; $B_3$ °वृत्तं (for °वत्त्वं). — [d]) $K_1$ B Dn

न ह्यतुष्टो जनोऽस्तीह पुरे चान्तःपुरे च ते ।
सम्यग्वृत्त्यानवद्याङ्गि तव भृत्यजनेष्वपि ॥ २१
संदेष्टव्यां तु मन्ये त्वां द्विजातिं कोपनं प्रति ।
पृथे बालेति कृत्वा वै सुता चासि ममेति च ॥ २२
वृष्णीनां त्वं कुले जाता शूरस्य दयिता सुता ।
दत्ता प्रीतिमता मह्यं पित्रा बाला पुरा स्वयम् ॥ २३
वसुदेवस्य भगिनी सुतानां प्रवरा मम ।
अग्र्यमग्रे प्रतिज्ञाय तेनासि दुहिता मम ॥ २४
तादृशे हि कुले जाता कुले चैव विवर्धिता ।
सुखात्सुखमनुप्राप्ता ह्रदाद्ध्रदमिवागता ॥ २५
दौष्कुलेया विशेषेण कथंचित्प्रग्रहं गताः ।
बालभावाद्विकुर्वन्ति प्रायशः प्रमदाः शुभे ॥ २६
पृथे राजकुले जन्म रूपं चाद्भुतदर्शनम् ।
तेन तेनासि संपन्ना समुपेता च भामिनी ॥ २७
सा त्वं दर्पं परित्यज्य दम्भं मानं च भामिनि ।
आराध्य वरदं विप्रं श्रेयसा योक्ष्यसे पृथे ॥ २८
एवं प्राप्स्यसि कल्याणि कल्याणमनघे ध्रुवम् ।
कोपिते तु द्विजश्रेष्ठे कृत्स्नं दह्येत मे कुलम् ॥ २९

C. 3. 17026
B. 3. 303. 29
K. 3. 304. 29

इति श्रीमहाभारते आरण्यकपर्वणि सप्ताशीत्यधिकद्विशततमोऽध्यायः ॥ २८७ ॥

---

D1. 6 T G आवृत्य (for आदृत्य).

**21** D3 missing (cf. v.l. 10). — a) T G1 दुष्टो (for [अ]तुष्टो). Dc जलो; D5 नरो (for जनो). — b) Dc D2. 4 वा (for the first च). Dc D2 °पुरेषु च (for °पुरे च ते). — c) Dc D2 T1 G1. 2 °ग्वृत्ता; D5 °ग्दृष्ट्वा; T2 °ग्धृत्या (for °ग्वृत्त्या). — d) K4 न च (for तव).

**22** D3 missing (cf. v.l. 10). — a) B2 Dc D2 T1 संदेष्टव्या; G1 °ष्टस्यां. D5 च (for तु). B4 संदिष्टव्यां तु मंतव्यां; T2 सजेष्वप्यानुमन्ये त्वां. — b) B4 Dc द्विजाति- (for °तिं). K3 भोजनं (for कोपनं). — c) K3 पृथु- (for पृथे). — d) K1 सुते चासि; K4 श्रुता चासि; T2 G2. 4 M सुते(M1 °तै-; M2 ता)वासि. B4 ममापि च; T G1. 2. 4 M ममैव हि (T2 G1 ह; M च, (for ममेति च).

**23** D3 missing (cf. v.l. 10). — a) K B3. 4 Dc D2. 5 T2 G3. 4 M त्वं (for च). D5 कुलपतेः (for कुले जाता). — T2 G2. 4 om. (hapl.) 23b–25a. — b) K4 °स्य दुहिता शुभा. — d) G1 [अ]पि सा (for पुरा).

**24** D3 missing (cf. v.l. 10). T2 G2. 4 om. 24 (cf. v.l. 23). D1 transp. 24ab and 24cd. — b) T1 G1 सुता त्वं (for सुतानां). — c) =1. 104. 2c. Dc2 D2 T1 G1 M अग्रम्; D4 अग्राम्; D5 अग्र्याम् (for अग्र्यम्). — d) K1. 2 तेनास्य (for °सि).

**25** D3 missing (cf. v.l. 10). T2 G2. 4 om. 25a (cf. v.l. 23). — a) K4 यादृशे. D1. 5 च; T1 M [ऽ]सि (for हि). — b) K3. 4 D1. 5 चेह; T G1. 2. 4 मम (for चैव). Dc D2 महति (for चैव वि-). — d) T G1 M [आ]पगा (for [आ]गता).

**26** D3 missing (cf. v.l. 10). — b) K Dc D1. 2. 5 कदा° (for कथं°). D1 परिगृह्य तां (for प्रग्रहं गताः). — c) K1 हि; D5 प्र- (for वि-). — d) K1–3 D1. 5 तु वै (for शुभे).

**27** D3 missing (cf. v.l. 10). — b) B Dn D4–6 रूपं चापि तवाद्भुतं. — c) K1. 2 T G1. 2 [अ]पि; K4 [अ]भि- (for [अ]सि). — d) Dc D2 सममेता (sic) (for समुपेता). Dc D1. 2 [अ]सि; T G1 हि; G2. 4 [अ]पि (for च). B D (except D1; D3 missing) भाविनी; T G1. 2. 4 [अ]निंदिते (T1 G1 °ता); M नंदिनी.

**28** D3 missing (cf. v.l. 10). — K2 om. (hapl.) 28ab. — a) S (except G3) मानं (for दर्पं). — b) T2 G1. 2 M डंभं; G4 संगं (for दम्भं). D1 मोहं; S (except G3) दर्पं (for मानं). B D (except D1) भाविनि (Dc Dn2 D2 °नी). — c) K1. 2 देवं (for विप्रं). — d) K1. 2. 4 T1 G1 शुभे (for पृथे). D5 corrupt.

**29** D3 missing (cf. v.l. 10). — a) K1. 2 कल्याणं; K3 Dc2 D2 G2 °णी (for °णि). — b) K1. 2 पृथे त्वम् (for कल्याणम्). D1 मनसि स्थितं (for अनघे ध्रुवम्). K4 शुभे (for ध्रुवम्). — c) B Dn D4. 6 G3 च (for तु). G1 M2 द्विजश्रेष्ठः. — d) T G1. 2. 4 सर्वं; M1 क्षिप्रं (for कृत्स्नं).

Colophon. D3 missing. — *Major parvan:* K1. 2 T1 G2. 4 आरण्य. — *Sub-parvan:* K B Dc Dn1. n3 D1. 2. 4–6 G3 कुंडला(D1. 5 °लाभि)हरण. — *Adhy. name:* B4 कुंतिभोजवाक्यं; M पृथानियोगः. — *Adhy. no.* (figures, words or both): Dn1 (marg.). n3 301; Dn3 302; D1 305; T1 287 (as in text!); T2 G4 M1. 2 (*inf. lin.*) 291; G1 288; G2 290; M2 (orig.) 293. — *Śloka no.:* Dn D1 29.

# २८८

C. 3. 17027
B. 3. 304. 1
K. 3. 305. 1

कुन्त्युवाच ।

ब्राह्मणं यन्त्रिता राजन्नुपस्थास्यामि पूजया ।
यथाप्रतिज्ञं राजेन्द्र न च मिथ्या ब्रवीम्यहम् ॥ १
एष चैव स्वभावो मे पूजयेयं द्विजानिति ।
तव चैव प्रियं कार्यं श्रेयश्चैतत्परं मम ॥ २
यद्येवैष्यति सायाह्ने यदि प्रातरथो निशि ।
यद्यर्धरात्रे भगवान्न मे कोपं करिष्यति ॥ ३
लाभो ममैष राजेन्द्र यद्वै पूजयती द्विजान् ।
आदेशे तव तिष्ठन्ती हितं कुर्यां नरोत्तम ॥ ४
विस्रब्धो भव राजेन्द्र न व्यलीकं द्विजोत्तमः ।
वसन्प्राप्स्यति ते गेहे सत्यमेतद्ब्रवीमि ते ॥ ५
यत्प्रियं च द्विजस्यास्य हितं चैव तवानघ ।
यतिष्यामि तथा राजन्व्येतु ते मानसो ज्वरः ॥ ६
ब्राह्मणा हि महाभागाः पूजिताः पृथिवीपते ।
तारणाय समर्थाः स्युर्विपरीते वधाय च ॥ ७
साहमेतद्विजानन्ती तोषयिष्ये द्विजोत्तमम् ।
न मत्कृते व्यथां राजन्प्राप्स्यसि द्विजसत्तमात् ॥ ८
अपराधे हि राजेन्द्र राज्ञामश्रेयसे द्विजाः ।
भवन्ति च्यवनो यद्वत्सुकन्यायाः कृते पुरा ॥ ९
नियमेन परेणाहमुपस्थास्ये द्विजोत्तमम् ।
यथा त्वया नरेन्द्रेदं भाषितं ब्राह्मणं प्रति ॥ १०

राजोवाच ।

एवमेतत्त्वया भद्रे कर्तव्यमविशङ्कया ।
मद्धितार्थं कुलार्थं च तथात्मार्थं च नन्दिनि ॥ ११

---

## 288

☞ In $D_3$ this adhy. is lost on a missing fol.; the MS. is mostly ignored here.

**1** $^a$) Dc $D_2$ T $G_{1.2.4}$ यंत्रितं (for °ता). — $^c$) $K_{1.4}$ °प्रतिज्ञां; $K_3$ $T_1$ $G_1$ °प्रतिज्ञा; $B_4$ $Dc_2$ °प्रतिज्ञ. — $^d$) S (except $G_3$) ते (for च). K Dc $D_{1.2.5}$ न मिथ्या प्रब्रवीम्यहं.

**2** $^c$) $K_{1.2}$ चैतत् (for चैव). $B_2$ कीर्तिं (for कार्यं). — $^d$) B Dn $D_{4.6}$ $G_3$ परमं (for [ए]तत्परं). T $G_{1.2.4}$ प्रियं (for परं).

**3** $^a$) $K_4$ यदा; T $G_{1.2.4}$ अद्य (for यदि). $K_1$ राजेंद्र (for सायाह्ने). $B_2$ यद्यद्रक्ष्यति सायाह्ने. — $^c$) $K_1$ °रात्रौ (for °रात्रे). — $^d$) $D_1$ हि (for मे).

**4** $^a$) $G_{2.4}$ [ऽ]यं मम (for ममैष). — $K_3$ $D_1$ om. (hapl.) $4^b$–$5^a$. — $^b$) $B_4$ संपूजयेद्; $T_1$ $M_1$ पूजयति; $T_2$ °यसि; $G_{2.4}$ °यितुं (for °यती). Dc $D_{2.5}$ द्विजं (for द्विजान्). — $^d$) K ($K_3$ om.) पूज($K_4$ तोष)यिष्ये द्विजोत्तमं.

**5** $K_3$ $D_1$ om. $5^a$ (cf. v.l. 4). — $^a$) Some N MSS. विश्रब्धो. — $^b$) MSS. द्विजोतम, °माः, °मे also. — $^c$) $B_3$ वसन्प्राप्यति; $T_1$ $G_{2.4}$ स संप्राप्स्य($G_2$ °प्य)ति; $T_2$ $G_1$ न संप्राप्य($G_1$ °प्स्य)ति. $K_4$ गेहे ते (by transp.); $B_3$ $T_2$ मे गेहे.

**6** $^b$) $K_3$ $D_{4.5}$ तथा° (for तवा°). — $^c$) S (except $G_3$) यतिष्ये तदहं कर्तुं. — $6^d$=1. 48. $17^d$: 4. 3. $7^d$: etc.

**8** $^a$) $T_1$ $G_{2.4}$ विजानाना; $T_2$ $M_1$ विजानामि; $G_1$ द्विजन्मानं (for विजानन्ती). — $T_1$ om. (hapl.) $8^c$–$10^b$. — $^c$) $G_{1.2.4}$ M मत्कृते न (by transp.). $M_1$ कांचित् (for राजन्). — $^d$) $K_{3.4}$ $B_4$ Dc $D_{2.5}$ प्राप्स्यसे.

**9** $T_1$ om. 9 (cf. v.l. 8). — $^a$) S (except $G_3$; $T_1$ om.) अपराधो. $B_{1.2}$ Dn $D_{4.6}$ $G_3$ [ऽ]पि (for हि). S (except $G_3$; $T_1$ om.) परं (for द्विजाः). — $^c$) $T_2$ $G_{1.2.4}$ भवति. $G_{1.2.4}$ M च्यवनाद् (for °नो).

**10** $T_1$ om. $10^{ab}$ (cf. v.l. 8). — $^b$) $K_1$ समुत्थास्ये (for उपस्थास्ये). — After 10, N ($D_3$ missing) $G_3$ ins.:

1337* एवं ब्रुवन्तीं बहुशः परिष्वज्य समर्थ्य च ।
इति चेति च कर्तव्यं राजा सर्वमथादिशत् ।

[(L. 1) $B_3$ प्रशंस्य (for समर्थ्य). — (L. 2) $B_3$ वक्तव्यं (for कर्तव्यं). $K_{1.2}$ चेदम् (for सर्वम्). $B_2$ यथातथ्यमिदं वचः (for the posterior half).]

**11** $B_4$ om. 11–12. — $^a$) $B_2$ श्रिया (for त्वया). — $^{cd}$) $D_1$ transp. मद्धितार्थं and कुलार्थं. B ($B_4$ om.) $D_5$ अ($D_5$ त्व)निंदते; Dc $D_2$ च भाविनि (for च नन्दिनि). Dn $D_{4.6}$ $G_3$ मद्धितार्थं तथात्मार्थं कुलार्थं चाप्यनिंदिते; T

वैशंपायन उवाच ।

एवमुक्त्वा तु तां कन्यां कुन्तिभोजो महायशाः ।
पृथां परिददौ तस्मै द्विजाय सुतवत्सलः ॥ १२
इयं ब्रह्मन्मम सुता बाला सुखविवर्धिता ।
अपराध्येत यत्किंचिन्न तत्कार्यं हृदि त्वया ॥ १३
द्विजातयो महाभागा वृद्धबालतपस्विषु ।
भवन्त्यक्रोधनाः प्रायो विरुद्धेष्वपि नित्यदा ॥ १४
सुमहत्यपराधेऽपि क्षान्तिः कार्या द्विजातिभिः ।
यथाशक्ति यथोत्साहं पूजा ग्राह्या द्विजोत्तम ॥ १५
तथेति ब्राह्मणेनोक्ते स राजा प्रीतमानसः ।
हंसचन्द्रांशुसंकाशं गृहमस्य न्यवेदयत् ॥ १६
तत्राग्निशरणे क्लृप्तमासनं तस्य भानुमत् ।
आहारादि च सर्वं तत्तथैव प्रत्यवेदयत् ॥ १७
निक्षिप्य राजपुत्री तु तन्द्रीं मानं तथैव च ।
आतस्थे परमं यत्नं ब्राह्मणस्याभिराधने ॥ १८
तत्र सा ब्राह्मणं गत्वा पृथा शौचपरा सती ।
विधिवत्परिचाराहं देववत्पर्यतोषयत् ॥ १९

C. 3. 17046
B. 3. 304. 20
K. 3. 305. 20

इति श्रीमहाभारते आरण्यकपर्वणि अष्टाशीत्यधिकद्विशततमोऽध्यायः ॥ २८८ ॥

---

$G_{1.2.4}$ M मद्धितार्थे कुलार्थे च त्वमा( M तथा )त्मार्थे च नंदिनि ($T_2$ $G_4$ त्वदर्थे यदुनंदिनि ).

**12** B Dn $D_{1.4.6}$ S (except $M_1$) om. the ref. $B_4$ om. 12 (cf. v.l. 11). — [b]) A few MSS. कुंतीभोजो. K $D_{1.5}$ °मनाः (for °यशाः). — [d]) B D (except $D_{1.5}$) $T_1$ $G_3$ द्विज° (for सुत°).

**13** [a]) $K_1$ मम सुता ब्रह्मन् (by transp.). — [c]) $T_1$ $G_1$ °राध्यति (for °राध्येत). — [d]) $K_3$ Dc $D_{1.2.5}$ तन्न (for न तत्). $K_{1.2}$ हृदि कार्यं न तत्त्वया; B Dn $D_{4.6}$ $G_3$ न कार्यं हृदि तत्त्वया.

**14** [b]) $D_1$ बालवृद्ध- (by transp.); $G_2$ वृद्धा बालास्. Dc $D_2$ ° तपस्विनः. — [d]) $B_{1-3}$ Dn $D_{4.6}$ $G_3$ ह्यप( $Dn_2$. $n_3$ $D_4$ अप )राद्धेषु (for विरुद्धेष्वपि). $T_2$ च (for [अ]पि).

**15** $D_4$ om. 15. — [b]) S (except $G_3$) क्षमा कार्या. K $D_{1.5}$ विजानता; S (except $G_3$) द्विजोत्तम. — $K_{1.2.4}$ om. $15^{cd}$. — [d]) $K_3$ Dc $D_{1.2.5}$ विजानता; S (except $G_3$) द्विजातिना (for द्विजो°).

**16** [a]) K Dc $D_{1.2}$ [उ]क्तः ($K_3$ °क्तं) (for [उ]क्ते). — [b]) $K_{1-3}$ Dc $D_{1.2.4}$ $T_1$ $G_{1.2}$ $M_2$ प्रीति° (for प्रीत°). — [c]) K Dc $D_{1.2.5}$ हंसचंद्रप्रतीकाशं. — [d]) $K_{1.2}$ B Dn $D_{4.6}$ $G_3$ अस्मै; $T_1$ $M_2$ अन्यन् (for अस्य). $D_5$ गृहे तस्मै न्यवेशयत्.

**17** $K_{1.2}$ om. (hapl.) 17. — [a]) Dc $D_2$ $T_1$ $G_1$ तस्य; $G_4$ ततो (for तत्र). $K_3$ Dc $D_{1.2}$ $G_4$ °शरणं. $T_2$ कामम् (for क्लृप्तम्). — [c]) $B_4$ तु (for च). $K_{3.4}$ $D_{1.5}$ तत्सर्वं (by transp.). Dc $D_2$ तु; $D_4$ तं; $T_1$ वै; $G_1$ च (for तत्).

**18** [a]) $B_3$ T $G_{1.2.4}$ च; $D_1$ M सा (for तु). — [b]) $K_{1.2}$ $Dn_3$ $D_4$ तंद्री-; $B_3$ तंद्रां; $D_6$ तद्धि; $T_2$ कुंती (for तन्द्रीं). — [c]) $M_2$ आतस्थौ. S (except $G_3$) परया प्रीत्या (for परमं यत्नं). — [d]) S (except $G_3$) °राधनं.

**19** [a]) S (except $G_3$) तं तु (for तत्र). K Dc $D_{1.2.5}$ ब्राह्मणं राजन्; $B_4$ °णं ज्ञात्वा; S (except $G_3$) °णश्रेष्ठं. — [b]) $K_1$ ब्राह्मणे संशितव्रते; S (except $G_3$) उपचारेण कन्यका. — $K_1$ ins. after $19^{ab}$: $K_2$, after 3. 289. $1^{ab}$:

1338* परिचर्यापरा राजन् कुं[? read नक्तं]दिनमतन्द्रिता ।,
followed in $K_1$ by 3. 289. $2^{ab}$, which is omitted there. — [d]) $G_2$ $M_2$ परि° (for पर्य°).

Colophon om. in $K_{1.2}$. $D_3$ missing. — *Major parvan:* $Dn_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* $K_{3.4}$ B Dc $Dn_1$. $n_3$ $D_{1.2.4-6}$ $G_3$ $M_2$ कुंडला( $D_{1.5}$ °लाभि )हरण. — *Adhy. no.* (figures, words or both): $Dn_1$ (marg.). $n_2$ 302; $Dn_3$ 303; $D_1$ 306; $T_1$ 288 (as is text!); $T_2$ $G_4$ $M_{1.2}$ (*inf. lin.*) 292 ($M_2$ orig. 294); $G_1$ 289; $G_2$ 291. — *Śloka no.:* $Dn_1$. $n_3$ 20; $Dn_2$ $D_1$ 19.

## 289

☞ In $D_3$ this adhy. is lost on a missing fol.; the MS. is mostly ignored here.

**1** [a]) T $G_{1.2}$ °भागं; $G_4$ °भागा (for °राज). — [b]) $K_4$ $Dn_1$. $n_3$ शंसित° (for संशित°). — $K_{1.2}$ read $1^{cd}$ after 9. — [cd]) $K_4$ युक्तेन (for शुद्धेन). $K_{3.4}$ शंसितव्रतं ($K_3$ °ता); $D_{4.6}$ $G_3$ संशितव्रतं. — After $1^{ab}$, $K_2$ ins.

## २८९

C. 3. 17047
B. 3. 305. 1
K. 3. 306. 1

वैशंपायन उवाच ।

सा तु कन्या महाराज ब्राह्मणं संशितव्रतम् ।
तोषयामास शुद्धेन मनसा संशितव्रता ॥ १
प्रातरायास्य इत्युक्त्वा कदाचिद्द्विजसत्तमः ।
तत आयाति राजेन्द्र साये रात्रावथो पुनः ॥ २
तं च सर्वासु वेलासु भक्ष्यभोज्यप्रतिश्रयैः ।
पूजयामास सा कन्या वर्धमानैस्तु सर्वदा ॥ ३
अन्नादिसमुदाचारः शय्यासनकृतस्तथा ।
दिवसे दिवसे तस्य वर्धते न तु हीयते ॥ ४
निर्भर्त्सनापवादैश्च तथैवाप्रियया गिरा ।
ब्राह्मणस्य पृथा राजन्न चकाराप्रियं तदा ॥ ५
व्यस्ते काले पुनश्चैति न चैति बहुशो द्विजः ।
दुर्लभ्यमपि चैवान्नं दीयतामिति सोऽब्रवीत् ॥ ६
कृतमेव च तत्सर्वं पृथा तस्मै न्यवेदयत् ।
शिष्यवत्पुत्रवच्चैव स्वसृवच्च सुसंयता ॥ ७
यथोपजोषं राजेन्द्र द्विजातिप्रवरस्य सा ।
प्रीतिमुत्पादयामास कन्या यत्नैरनिन्दिता ॥ ८
तस्यास्तु शीलवृत्तेन तुतोष द्विजसत्तमः ।
अवधानेन भूयोऽस्य परं यत्नमथाकरोत् ॥ ९
तां प्रभाते च साये च पिता पप्रच्छ भारत ।
अपि तुष्यति ते पुत्रि ब्राह्मणः परिचर्यया ॥ १०
तं सा परममित्येव प्रत्युवाच यशस्विनी ।
ततः प्रीतिमवापाग्र्यां कुन्तिभोजो महामनाः ॥ ११
ततः संवत्सरे पूर्णे यदासौ जपतां वरः ।

1338*.

**2** $K_1$ reads $2^{ab}$ after 1338*. — $^{a}$) K $B_{3.4}$ Dc $D_{1.2.5}$ प्रातरेष्य इति ह्यु( $B_{3.4}$ $D_2$ इतीत्यु )क्त्वा; $B_{1.2}$ Dn $D_{4.6}$ $G_3$ प्रातरेष्याम्यथेत्युक्त्वा. — $^{b}$) A few MSS. द्विजसत्तम. — $^{c}$) $D_{4.5}$ तत्र (for तत). — $^{d}$) N ( $D_3$ missing ) $T_2$ $G_3$ सायं; $G_{2.4}$ सोर्ध- (for साये). $B_4$ पुरः; S (except $T_2$ $G_3$) मुनिः (for पुनः).

**3** $^{a}$) $G_{2.4}$ वेलासु सर्वासु (by transp.). — $^{b}$) $K_{1.2}$ भक्ष्यभोज्यैः; $D_5$ भोज्यचोष्य- (for भक्ष्यभोज्य-). K $D_{1.5}$ M -प्रति( $K_1$ $D_1$ -परि )ग्रहैः. — $^{c}$) $M_1$ वै (for सा). — $^{d}$) K $B_1$ Dc $D_{2.5}$ वर्धमानेन ( $K_2$ °ने च ); $B_3$ वर्तमानेन; $D_1$ वर्धमानेव; $T_1$ damaged; $T_2$ वर्धमाने हि; $G_1$ $M_1$ वर्धमानैर्हि; $G_{2.4}$ $M_2$ वर्तमानैर्हि. K $D_5$ वर्चसा; $B_1$ Dc $D_2$ नित्यदा; $B_2$ सा तदा (for सर्वदा).

**4** $^{a}$) $D_5$ अन्नानि (for अन्नादि-). $K_{1.2}$ -समुदाचार-. — $^{b}$) K Dc $D_{1.2}$ °विधि°; $D_5$ °विधे° (for °कृत°). $D_{1.5}$ तदा (for तथा). — $^{c}$) $K_1$ चैव (for तस्य). — $^{d}$) $K_{1.2}$ $D_1$ च; $K_4$ [ए]व; S (except $G_3$) प्र- (for तु). $K_3$ Dc $D_{2.5}$ वर्धत्येव न हीयते.

**5** $^{a}$) $B_{1.4}$ निर्भर्त्सैन (for निर्भर्त्सन-). K $D_{1.2.5}$ -[अ]पदेशैः (for -[अ]पवादैः). Cnp अपदेशः ( = व्याजः). — $^{b}$) $D_5$ च (for [ए]व). — $K_1$ om. $5^{cd}$.

**6** $^{a}$) $K_1$ प्राप्ते (*sup. lin.* as in text); $T_1$ $G_{1.2.4}$ M स्वप्न-; $T_2$ सप्त-; $G_3$ व्यस्त- (for व्यस्ते). $K_4$ $B_{1.4}$ $Dn_{1.n3}$ $D_4$ $T_2$ $G_3$ चेति; $D_2$ चैव (for चैति). — $^{b}$) $B_{1.4}$ Dn चेति (for चैति). Dc $D_2$ नृप (for द्विजः). — $^{c}$) $K_{1.2.4}$ $D_1$ दुष्प्राप( $D_1$ °प्य )म् (for दुर्लभ्यम्). $M_2$ इति (for अपि). B Dc Dn $D_{2.4.6}$ $G_3$ सुदुर्लभमपि ( $B_2$ °मिदं ) ह्यन्नं ( $D_{4.6}$ $G_3$ ह्यर्थं ). — $^{d}$) $B_3$ अपि (for इति).

**7** $^{a}$) T $G_{1.2.4}$ इत्येव; $M_1$ एवेति (for एव च). — $^{b}$) $B_1$ $Dn_3$ $G_3$ यथा; $Dn_{1.n2}$ $D_4$ तथा (for पृथा). — $^{d}$) $T_1$ $G_1$ सुहृच्चैव (for स्वसृवच्च). K Dc $D_{2.5}$ चैव संमता ( $K_4$ च वशं गता ); $D_1$ चैव संमतं; $T_2$ च स्मृतं यथा (for च सुसंयता).

**8** $^{d}$) $T_1$ $G_1$ अतंद्रिता (for अनिन्दिता). $K_{1.2}$ कन्या यत्नेन निर्मितां; B Dc Dn $D_{2.4-6}$ $G_3$ कन्यारत्नमनिंदिता.

**9** $^{a}$) $K_{1.2}$ स; $K_3$ स्व-; $K_4$ Dc $D_{1.5}$ च (for तु). — $^{c}$) $B_{2.3}$ ( m as in text ) $D_6$ $G_3$ अवधाने च; M आराधने च. $B_{2.3}$ Dn $D_{4.6}$ T $G_{1.3.4}$ [ऽ]स्याः (for ऽस्य). — After 9, $K_{1.2}$ read $1^{cd}$ (v.l. $K_2$ यत्नेन for शुद्धेन).

**10** $^{a}$) $G_{2.4}$ प्रभातेपि (for °ते च). N (except $K_3$; $D_3$ missing) $G_3$ सायं च; $T_2$ $G_2$ सायेपि; $G_4$ सायाह्ने for साये च).

**11** $^{a}$) $B_4$ [ए]वं (for [ए]व). Dc $D_2$ तं च सा परमित्येवं. — $^{b}$) $K_{1.2}$ $Dn_{2.n3}$ तप° (for यश°). — $^{d}$) K

नापश्यद्दुष्कृतं किंचित्पृथायाः सौहृदे रतः ॥ १२
ततः प्रीतमना भूत्वा स एनां ब्राह्मणोऽब्रवीत् ।
प्रीतोऽस्मि परमं भद्रे परिचारेण ते शुभे ॥ १३
वरान्वृणीष्व कल्याणि दुरापान्मानुषैरिह ।
यैस्त्वं सीमन्तिनीः सर्वा यशसाभिभविष्यसि ॥ १४

कुन्त्युवाच ।

कृतानि मम सर्वाणि यस्या मे वेदवित्तम ।
त्वं प्रसन्नः पिता चैव कृतं विप्र वरैर्मम ॥ १५

ब्राह्मण उवाच ।

यदि नेच्छसि भद्रे त्वं वरं मत्तः शुचिस्मिते ।
इमं मन्त्रं गृहाण त्वमाह्वानाय दिवौकसाम् ॥ १६
यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि ।
तेन तेन वशे भद्रे स्थातव्यं ते भविष्यति ॥ १७
अकामो वा सकामो वा न स नैष्यति ते वशम् ।
विबुधो मन्त्रसंशान्तो वाक्ये भृत्य इवानतः ॥ १८

वैशंपायन उवाच ।

न शशाक द्वितीयं सा प्रत्याख्यातुमनिन्दिता ।
तं वै द्विजातिप्रवरं तदा शापभयान्नृप ॥ १९
ततस्तामनवद्याङ्गीं ग्राहयामास वै द्विजः ।
मन्त्रग्रामं तदा राजन्नथर्वशिरसि श्रुतम् ॥ २०
तं प्रदाय तु राजेन्द्र कुन्तिभोजमुवाच ह ।
उषितोऽस्मि सुखं राजन्कन्यया परितोषितः ॥ २१
तव गेहे सुविहितः सदा सुप्रतिपूजितः ।
साधयिष्यामहे तावदित्युक्त्वान्तरधीयत ॥ २२
स तु राजा द्विजं दृष्ट्वा तत्रैवान्तर्हितं तदा ।
बभूव विस्मयाविष्टः पृथां च समपूजयत् ॥ २३

C. 3. 17069
B. 3. 305. 23
K. 3. 306. 23

इति श्रीमहाभारते आरण्यकपर्वणि एकोननवत्यधिकद्विशततमोऽध्यायः ॥ २८९ ॥

---

Dc D1. 2. 5 °यशाः (for °मनाः).

**12** $^{b}$) Dc D2 यत्र; D5 T1 यदि; T2 यथा (for यदा). D1. 4. 6 जयतां (for जपतां). — $^{d}$) K4 °देन सः; Dc D2 °देन च (for °दे रतः).

**13** G1 om. 13–14. — $^{b}$) B1 स च मां; B4 कन्यां स; D5 स च तां (for स एनां). — Before $13^{cd}$, M1 ins. ब्राह्मणः. — T2 om. (hapl.) $13^{d}$–$17^{c}$. — $^{d}$) G2. 4 मे (for ते).

**14** T2 G1 om. 14 (cf. v.l. 13). — $^{a}$) D5 वरं (for वरान्). — $^{b}$) D5 दुरापं मानुषैरपि. — $^{c}$) K1. 2 अन्या (for सर्वा). — $^{d}$) G4 च (for [अ]भि-) K4 Dc D2 G4 °ष्यति (for °ष्यसि).

**15** T2 om. 15 (cf. v.l. 14). — $^{b}$) G2. 4 यस्मान् (for यस्या). K D1. 2. 4. 5 G3 M1 वेदवित्तमः (K4 द्विजसत्तम). — $^{d}$) B4 कृतार्थं प्रवरैर्मम; M ह्येष एव वरो मम.

**16** T2 om. 16 (cf. v.l. 14). K D1 ऋषिः; B4 दुर्वासाः; D5 मुनिः (for ब्राह्मणः). — $^{a}$) B1. 2 Dn D4. 6 G3 मत्तस्त्वं; D1 G2. 4 भद्रं ते (for भद्रे त्वं). — $^{b}$) B1. 2 Dn D4. 6 G3 भद्रे (for मत्तः). — $^{c}$) T1 G1. 2. 4 इदं (for इमं).

**17** T2 om. $17^{abc}$ (cf. v.l. 14). $17^{ab}$ =1. 104. $7^{ab}$; 113. $35^{ab}$. — $^{cd}$) T2 स्वातंत्र्यं (for स्थातव्यं). K B3m Dc D1. 2. 5 तस्य तस्य प्रसादात्ते (B3m °देन) राज्ञि पुत्रो भविष्यति (K1. 2 भवेदिति).

**18** $18^{ab}$=(var.) 1. 113. $35^{cd}$. — $^{a}$) K4 अकामश्च. — $^{b}$) K न स नेष्यति (K4 समेष्यति हि); B Dn D4. 6 G3 स समेष्यति; Dc D2 वशमेष्यति. K1. 2 वरं; Dc D2 शुभे; Dn D4. 6 G3 वशे (for वशम्). — $^{c}$) Dn3 °संयत्तो; D1 T G1. 2. 4 °संभ्रांतो (for °संशान्तो). — $^{d}$) B Dc Dn D2. 4. 6 G3 भवेद्; T G1. 2. 4 वाक्यैर् (for वाक्ये). T2 हृद्य (for भृत्य). T G1. 2. 4 [अ]नुगः (for [आ]नतः).

**19** K1. 3. 4 D1 S (except G3) om. the ref. — $^{a}$) K4 द्वितीया सा; D1 द्वितीयस्य; T2 G4 द्विजातिं च (for द्वितीयं सा). — $^{c}$) B4 तद्वै; D1 न वै (for तं वै).

**20** $^{b}$) B Dn D4. 6 G3 स (for वै). — $^{c}$) K1. 2 T2 तथा; M2 ततो (for तदा). — $^{d}$) D1 अथर्वांगिरसि. Dc D2 T G1. 2. 4 स्थितं (for श्रुतम्).

**21** $^{a}$) G2. 4 सं- (for तं). — $^{b}$) K4 सः (for ह).

**22** $^{a}$) B Dn D4. 6 G3 गेहेषु (for गेहे सु-). K4 -विहिते (for -विहितः). — $^{b}$) K1. 2 तथा; Dc2 D2 G4 तदा (for सदा). T2 सुप्रीति°; G1 संप्रीति° (for सुप्रति°). — $^{c}$) K1. 2. 4 B3 Dc D1. 2 °स्यहं (for °महे). Dc D2 राजन् (for तावद्).

**23** $^{a}$) S (except G3) च (for तु). — $^{b}$) T1 G1. 2. 4 तथै° (for तत्रै°). — $^{d}$) K1. 2 प्रति°; T G1. 2. 5 [इ]माम° (for सम°).

# २९०

C. 3. 17070
B. 3. 306. 1
K. 3. 307. 1

वैशंपायन उवाच ।
गते तस्मिन्द्विजश्रेष्ठे कस्मिंश्चित्कालपर्यये ।
चिन्तयामास सा कन्या मन्त्रग्रामबलाबलम् ॥ १
अयं वै कीदृशस्तेन मम दत्तो महात्मना ।
मन्त्रग्रामो बलं तस्य ज्ञास्ये नातिचिरादिव ॥ २
एवं संचिन्तयन्ती सा ददर्शर्तुं यदृच्छया ।
व्रीडिता साभवद्बाला कन्याभावे रजस्वला ॥ ३
अथोद्यन्तं सहस्रांशुं पृथा दीप्तं ददर्श ह ।
न ततर्प च रूपेण भानोः संध्यागतस्य सा ॥ ४
तस्या दृष्टिरभूद्दिव्या सापश्यद्दिव्यदर्शनम् ।
आमुक्तकवचं देवं कुण्डलाभ्यां विभूषितम् ॥ ५
तस्याः कौतूहलं त्वासीन्मन्त्रं प्रति नराधिप ।
आह्वानमकरोत्साथ तस्य देवस्य भामिनी ॥ ६
प्राणानुपस्पृश्य तदा आजुहाव दिवाकरम् ।
आजगाम ततो राजंस्त्वरमाणो दिवाकरः ॥ ७
मधुपिङ्गो महाबाहुः कम्बुग्रीवो हसन्निव ।
अङ्गदी बद्धमुकुटो दिशः प्रज्वालयन्निव ॥ ८
योगात्कृत्वा द्विधात्मानमाजगाम तताप च ।
आबभाषे ततः कुन्तीं साम्ना परमवल्गुना ॥ ९
आगतोऽस्मि वशं भद्रे तव मन्त्रबलात्कृतः ।

---

Colophon. $D_3$ missing. — *Major parvan:* $K_{1.2}$ $Dn_2$ $T_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* $K_{3.4}$ B Dc $Dn_1$. $n_2$ $D_{1.2.4-6}$ $G_3$ $M_2$ कुंडला( $D_{1.5}$ °लाभि )हरण. — *Adhy. name:* $B_4$ कुंतीमंत्रप्राप्तिः; $M_1$ पृथामंत्रग्रहणं. — *Adhy. no.* (figures, words or both): $Dn_1$ (marg.). $n_2$ 303; $Dn_3$ 304; $D_1$ 307; $T_1$ 289 (as in text!); $T_2$ $G_{2.4}$ $M_{1.2}$ (*inf. lin.*) 293 ($M_2$ orig. 295); $G_1$ 290. — *Śloka no.:* Dn $D_1$ 23.

## 290

☞ In $D_3$ this adhy. is lost on a missing fol.; the MS. is mostly ignored here.

**1** $^{b}$) B Dc Dn $D_{2.4.6}$ $G_3$ कारणांतरे (for काल°).

**2** $^{c}$) $G_{2.4}$ °ग्राम- (for °ग्रामो). K $D_{1.5}$ त्व( $K_4$ ह्य )-स्य (for तस्य). — $^{d}$) Dn $D_{4.6}$ $G_3$ इति (for इव). K $D_{1.5}$ ज्ञास्यामि नचिरादिव.

**3** $^{a}$) S (except $T_2$ $G_3$) सा (for सं-). K Dc $D_{1.2}$ M तु; T $G_{2.4}$ [ए]व; $G_1$ [इ]व (for सा). — $^{b}$) $K_{1.2}$ [अं]कं; $D_1$ तु (for [ऋ]तुं). Dc $D_2$ यथेच्छया. — $^{c}$) B Dc $D_{2.5}$ $T_2$ $G_{2.4}$ M चा° (for सा°). Dc $D_2$ T $G_{1.2.4}$ कन्या (for बाला). — $^{d}$) T $G_{1.2.4}$ बाल° (for कन्या°). — After 3, N ($D_3$ missing) $G_3$ ins.:

1339* ततो हर्म्यतलस्था सा महार्हशयनोचिता ।

**4** $^{ab}$) N ($D_3$ missing) $G_3$ प्राच्यां दिशि समुद्यंतं ददर्शादित्यमंडलं. — After $4^{ab}$, N (except $K_{1.2}$; $D_3$ missing) $G_{1.3}$ ins.:

1340* तत्र बद्धमनोदृष्टिरभवत्सा समुध्यमा ।

— $K_{1.2}$ om. $4^{c}$–$5^{b}$. — $^{c}$) $B_{1.2}$ $G_3$ चातप्यत (as in some printed ed.!); $B_{3.4}$ Dn (!) $D_{4.6}$ ततर्प हि ($Dn_1$ चाप्येतर्हि); Dc $D_2$ च तर्प्य च; $M_2$ तताप च (for ततर्प च). — $^{d}$) $D_5$ च (for सा).

**5** $K_{1.2}$ om. $5^{ab}$ (cf. v.l. 4). — $^{a}$) B Dn $D_4$ अस्या ($B_3$ अन्या) (for तस्या). — $^{b}$) Dc $D_2$ सूर्यमंडलं (for दिव्यदर्शनम्). — $^{d}$) $T_2$ सुशोभितं; $G_2$ च भूषितं (for विभू°).

**6** $^{a}$) $G_1$ कुतूहलं. $D_5$ T $G_{1.2.4}$ चा° (for त्वा°). — $^{b}$) S (except $G_3$) मंत्रान् (for मन्त्रं). — $^{c}$) S (except $G_3$) च (for [अ]थ). — $^{d}$) $G_1$ तत्र तस्यैव (for तस्य देवस्य). B Dc Dn $D_{2.4.6}$ $G_3$ भाविनी.

**7** $^{a}$) Dc $D_{2.5}$ अ( $D_5$ आ )पो ह्युपस्पृश्य तदा; T $G_{1.2.4}$ उपस्पृश्य तदा कुंती. — $^{b}$) To avoid hiatus, $K_4$ B Dc Dn $D_{2.4.6}$ ह्याजु°; S (except $G_3$) साजु° (for आजु°). — $^{c}$) $M_1$ दिवो (for ततो).

**8** $^{c}$) S (except $G_3$) °मकुटो (for °मुकुटो). — $^{d}$) $K_{1.2}$ $D_1$ $G_{1.2.4}$ $M_2$ प्रज्वल° (for प्रज्वाल°).

**9** $^{ab}$) $G_4$ स्वमा° (for द्विधा°). $M_2$ ततो वचः (for तताप च). $K_2$ repeats $7^{cd}$ for $9^{ab}$. — $9^{d}$=1. 73. $16^{d}$.

**10** Before 10, $M_1$ ins. दिवाकरः. — $^{a}$) $D_1$ वशे (for वशं). — $^{b}$) Dc $D_{2.5}$ मंत्रग्राम° (for तव मंत्र°). — $^{c}$) $K_1$ [अ]वशं; B Dc $Dn_3$ $D_{2.4.6}$ $G_3$ वशो; $D_2$ वशे

किं करोम्यवशो राज्ञि ब्रूहि कर्ता तदस्मि ते ॥ १०

कुन्त्युवाच ।

गम्यतां भगवंस्तत्र यतोऽसि समुपागतः ।
कौतूहलात्समाहूतः प्रसीद भगवन्निति ॥ ११

सूर्य उवाच ।

गमिष्येऽहं यथा मां त्वं ब्रवीषि तनुमध्यमे ।
न तु देवं समाहूय न्याय्यं प्रेषयितुं वृथा ॥ १२
तवाभिसंधिः सुभगे सूर्यात्पुत्रो भवेदिति ।
वीर्येणाप्रतिमो लोके कवची कुण्डलीति च ॥ १३
सा त्वमात्मप्रदानं वै कुरुष्व गजगामिनि ।
उत्पत्स्यति हि पुत्रस्ते यथासंकल्पमङ्गने ॥ १४
अथ गच्छाम्यहं भद्रे त्वयासंगम्य सुस्मिते ।
शप्स्यामि त्वामहं क्रुद्धो ब्राह्मणं पितरं च ते ॥ १५
त्वत्कृते तान्प्रधक्ष्यामि सर्वानपि न संशयः ।
पितरं चैव ते मूढं यो न वेत्ति तवानयम् ॥ १६
तस्य च ब्राह्मणस्याद्य योऽसौ मन्त्रमदात्तव ।
शीलवृत्तमविज्ञाय धास्यामि विनयं परम् ॥ १७
एते हि विबुधाः सर्वे पुरंदरमुखा दिवि ।
त्वया प्रलब्धं पश्यन्ति स्मयन्त इव भामिनि ॥ १८
पश्य चैनान्सुरगणान्दिव्यं चक्षुरिदं हि ते ।
पूर्वमेव मया दत्तं दृष्टवत्यसि येन माम् ॥ १९

वैशंपायन उवाच ।

ततोऽपश्यत् त्रिदशान्राजपुत्री
सर्वानेव स्वेषु धिष्ण्येषु खस्थान् ।
प्रभासन्तं भानुमन्तं महान्तं
यथादित्यं रोचमानं तथैव ॥ २०
सा तान्दृष्ट्वा व्रीडमानेव बाला
सूर्यं देवी वचनं प्राह भीता ।
गच्छ त्वं वै गोपते स्वं विमानं
कन्याभावाद्दुःख एषोपचारः ॥ २१

C. 3. 17091
B. 3. 306. 22
K. 3. 307. 22

---

(for [अ]वशो). — $^{d}$) T $G_{1.2.4}$ ब्रूहि किं ते चिकीर्षितं.

**11** S (except $G_3$) कन्या (for कुन्ती). — $^{a}$) Dc $D_2$ यत्र (for तत्र). — $^{b}$) $K_{1.2}$ त्वं (for [अ]सि). K Dc $D_{1.2.5}$ पुनरा° (for समुपा°). B Dn $D_{4.6}$ $G_3$ यत एवागतो ह्यसि. — $^{c}$) K $D_{1.5}$ बालभावात् (for कौतूहलात्). Dc $D_{2.6}$ °नीतः (for °हूतः).

**12** $^{a}$) $Dn_1$ $D_{2.4.6}$ $T_2$ $G_3$ $M_2$ मा (for मां). $K_{1.2}$ तु (for त्वं). — $^{b}$) $K_{1.2}$ राजनंदिनि (for तनु°). — After $12^{ab}$, $K_2$ reads $13^{cd}$. — $^{c}$) $D_1$ च (for तु). — $^{d}$) $K_1$ यथा; $K_4$ पृथे (for वृथा).

**13** $^{a}$) $D_1$ तथा (for तव). T $G_{1.2.4}$ [अ]भि($G_2$ °पि)संधि. — $^{b}$) T $G_{1.2.4}$ कुर्यां (for सूर्यात्). — $K_2$ reads $13^{cd}$ after $12^{ab}$. — $^{d}$) $K_4$ कुंडली कवची (by transp.).

**14** $^{a}$) $K_{1.3.4}$ Dc $D_{1.2.5}$ मे; $G_{2.4}$ हि (for वै). — $^{c}$) $K_{1.4}$ Dc $D_{1.2}$ उत्पत्स्यते. $G_2$ ते पुत्रो (by transp.).

**15** $^{a}$) $B_{1.2}$ Dc $D_{2.5}$ अव- (for अथ). — $^{b}$) K $D_1$ भाविनि; Dc $D_{2.5}$ भामिनि (for सुस्मिते). — After $15^{ab}$, B Dc Dn $D_{2.4-6}$ $G_3$ ins.:

1341* यदि त्वं वचनं नाद्य करिष्यसि मम प्रियम् ।

— $^{c}$) $K_2$ B Dn $D_{4-6}$ $G_3$ $M_2$ शपिष्ये (for शप्स्यामि). T $G_1$ $M_1$ त्व($M_1$ त्वा)न्यथा (for त्वामहं). $G_{2.4}$ शप्स्ये कन्येन्यथा क्रुद्धो.

**16** $^{a}$) $K_4$ संप्रध°; $B_3$ $T_2$ तान्प्रव° (for तान्प्रध°). — $^{b}$) $D_5$ M एव (for अपि). — $^{c}$) $K_2$ मूढो यो; S (except $G_3$) ते मूढे (for ते मूढं).

**17** $^{a}$) $K_4$ तथास्य (for तस्य च). — $^{d}$) $K_4$ $D_1$ [अ]विनयं (for विनयं). Dc $D_2$ वरं (for परम्). $K_{1.2}$ T $G_{1.2.4}$ धक्ष्याम्यविनयं परं.

**18** $^{a}$) $T_2$ कन्ये (for सर्वे). — $D_5$ om. $18^{cd}$. — $^{d}$) B Dc Dn $D_{2.4.6}$ $G_3$ भाविनि; T $G_{1.2.4}$ M मां शुभे (for भामिनि).

**19** $^{a}$) $K_3$ वै तान्; $B_2$ Dc $Dn_2$ $D_{1.2}$ M चैतान् (for चैनान्). S (except $G_3$) वरारोहे (for सुरगणान्). — $^{b}$) $K_2$ $B_2$ दिव्यचक्षुर्. $K_4$ च (for हि). $T_2$ मे (for ते).

**20** $K_{1.2}$ Dc $D_2$ om. the ref. — $^{c}$) $B_{1-3}$ Dn $D_{4.6}$ $T_1$ $G_3$ प्रभावंतं. T $G_{1.2.4}$ पुरस्ताद् (for महान्तं). — $^{d}$) $B_{1.2.4}$ Dc Dn $D_{4.6}$ $M_1$ रोचमानान् (for °मानं).

**21** $^{a}$) K $B_{1.3}$ $D_{1.5}$ $M_2$ सा तं; $G_4$ तान्सा (by transp.). $K_{3.4}$ $Dc_2$ $D_{1.2}$ वेपमाना; T $G_{1.2.4}$ त्रिदशान् (for व्रीडमाना). $Dc_2$ T $G_{1.2.4}$ एव (for [इ]व). — $^{b}$) K $D_{1.2.5}$ सूर्यं देवं; $M_2$ देवश्रेष्ठं (for सूर्यं देवी). — $^{c}$) $K_4$ स्वे विमाने; $B_3$ स्वं विशालं (m as in text). — $^{d}$) S (except $G_3$) °भावे (for भावाद्). K $D_1$ दुष्ट; $B_1$ दुःखम्

C. 3. 17092
B. 3. 306. 23
K. 3. 307. 23

पिता माता गुरवश्चैव येऽन्ये
देहस्यास्य प्रभवन्ति प्रदाने ।
नाहं धर्मं लोपयिष्यामि लोके
स्त्रीणां वृत्तं पूज्यते देहरक्षा ॥ २२
मया मन्त्रबलं ज्ञातुमाहूतस्त्वं विभावसो ।
बाल्याद्बालेति कृत्वा तत्क्षन्तुमर्हसि मे विभो ॥ २३
सूर्य उवाच ।
बालेति कृत्वानुनयं तवाहं
ददानि नान्यानुनयं लभेत ।
आत्मप्रदानं कुरु कुन्तिकन्ये
शान्तिस्तवैवं हि भवेच्च भीरु ॥ २४
न चापि युक्तं गन्तुं हि मया मिथ्याकृतेन वै ।
गमिष्याम्यनवद्याङ्गि लोके समवहास्यताम् ।
सर्वेषां विबुधानां च वक्तव्यः स्यामहं शुभे ॥ २५
सा त्वं मया समागच्छ पुत्रं लप्स्यसि मादृशम् ।
विशिष्टा सर्वलोकेषु भविष्यसि च भामिनि ॥ २६

इति श्रीमहाभारते आरण्यकपर्वणि नवत्यधिकद्विशततमोऽध्यायः ॥ २९० ॥

## २९१

वैशंपायन उवाच ।
सा तु कन्या बहुविधं ब्रुवन्ती मधुरं वचः ।
अनुनेतुं सहस्रांशुं न शशाक मनस्विनी ॥ १
न शशाक यदा बाला प्रत्याख्यातुं तमोनुदम् ।

---

(for दुःख). B1–3 Dc2 Dn2 D1. 2. 5 एवो°; Dn1. n3 D4. 6 G3 एवा° (for एषो°).

**22** a) K1–3 Dc D2. 5 चापि (for चैव). K4 ये ते; B2 S (except G3) मन्ये (for येऽन्ये). — b) G2 प्रवदंति (for प्रभवन्ति). T G1. 2. 4 स्म दाने (for प्र°). — c) T G1. 2. 4 साहं (for नाहं), and पाल° (for लोप°). M चाल° (for लोप°). — d) K4 D1 धर्मः; G2 धर्मं (for वृत्तं).

**23** c) K1 D5 बाल्येति (for बालेति). K1 मत्वा तु; K2. 4 D1. 5 कृत्वा तु; B Dn D4. 6 G3 तत्कृत्वा (by transp.); G2. 4 कृत्वा त्वं. — d) K4 वै (for मे). Dc D2 G4 प्रभो (for विभो).

**24** a) K1 D5 बाल्येति; D4 बाले तु (for बालेति). K1. 2. 4 Dn2 तनयं (for [अ]नुनयं). — b) K4 ददामि; T1 G1 दद्यानि (for ददानि). K D1. 5 नु (K3 D1. 5 तु) लभेत काचित् (K3 कामा); Dn2. n3 D4 त(D4 त्व)नयं लभेत; G3 त्वभयं लभेत (for [अ]नुनयं लभेत). — c) K तव (K4 न तु) (for कुरु). D5 तु कुरुष्व (for कुरु कुन्ति-). K1. 2 मध्ये; K3 T2 मन्ये; G2 मह्यं (for -कन्ये). — d) K1–3 तथैवं च (K3 हि); T G1. 2. 4 तवानेन (for तवैवं हि). K3 B1. 2 M हि भवेत; K4 भवितेति; Dc D2 हि भवेत्सु- (for हि भवेच्च).

**25** a) K1. 2 B1. 2 Dn D4. 6 G3 गंतुं युक्तं (by transp.). Dc D2 च (for हि). — b) D5 S (except G3) °गतेन (for °कृतेन). — After 25ab, B Dc Dn D2. 4–6 G3 ins.:

1342* असमेत्य त्वया भीरु मन्त्राहूतेन भाविनि ।

— cd) T G1. 2. 4 M इतस्त्वया(M2 °स्तत्रा)नवद्यांगि लोके सम(T2 G4 °मु)पहास्यतां. — After 25cd, S (except G3) ins.:

1343* गच्छेयमेवं सुश्रोणि गतोऽहं वै निराकृतः ।

— f) B Dc Dn D2. 4. 6 G3 तथा शुभे; T1 G1 (*inf. lin.* as in text) अनिंदिते (for अहं शुभे).

**26** a) B1 T1 सहागच्छ; T2 G2 स्म संगच्छ (for समा°). — b) S (except G3) लप्स्यसे मादृशं सुतं. — cd) K4 B2. 3 T G1 M1 विशिष्टः, and भविष्यति. B Dc Dn D2. 4. 6 G3 न संशयः; D5 च भाविनि.

Colophon. D3 missing. — *Major parvan:* K1. 2 Dn2 G2. 4 आरण्य. — *Sub-parvan:* K3. 4 B2–4 Dc Dn D1. 2. 4–6 G3 कुंडला(D1. 5 °लाभि)हरण. — *Adhy. no.* (figures, words or both): Dn1 (marg.). n2 304; Dn3 305; D1 308; T1 290 (as in text !); T2 G4 M1. 2 (*inf. lin.*) 294 (M2 orig. 296); G1 291; G2 293. — *Śloka no.:* Dn1. n2 28; Dn3 29; D1 30.

भीता शापात्ततो राजन्दध्यौ दीर्घमथान्तरम् ॥ २
अनागसः पितुः शापो ब्राह्मणस्य तथैव च ।
मन्निमित्तः कथं न स्यात्क्रुद्धादस्माद्विभावसोः ॥ ३
बालेनापि सता मोहाद्भृशं सापह्नवान्यपि ।
नात्यासादयितव्यानि तेजांसि च तपांसि च ॥ ४
साहमद्य भृशं भीता गृहीता च करे भृशम् ।
कथं त्वकार्यं कुर्यां वै प्रदानं ह्यात्मनः स्वयम् ॥ ५
सैवं शापपरित्रस्ता बहु चिन्तयती तदा ।
मोहेनाभिपरीताङ्गी स्मयमाना पुनः पुनः ॥ ६
तं देवमब्रवीद्भीता बन्धूनां राजसत्तम ।
व्रीडाविह्वलया वाचा शापत्रस्ता विशां पते ॥ ७

कुन्त्युवाच ।

पिता मे ध्रियते देव माता चान्ये च बान्धवाः ।
न तेषु ध्रियमाणेषु विधिलोपो भवेदयम् ॥ ८
त्वया मे संगमो देव यदि स्याद्विधिवर्जितः ।
मन्निमित्तं कुलस्यास्य लोके कीर्तिर्नशेत्ततः ॥ ९
अथ वा धर्ममेतं त्वं मन्यसे तपतां वर ।
ऋते प्रदानाद्बन्धुभ्यस्तव कामं करोम्यहम् ॥ १०
आत्मप्रदानं दुर्धर्ष तव कृत्वा सती त्वहम् ।
त्वयि धर्मो यशश्चैव कीर्तिरायुश्च देहिनाम् ॥ ११

C. 3. 17108
B. 3. 307. 11
K. 3. 308. 11

## 291

☞ In D3 this adhy. is lost on a missing fol. (cf. v.l. 3. 287. 10); the MS. is mostly ignored here.

**1** [b]) K4 B3 ब्रुवती (for ब्रुवन्ती).

**2** [a]) G2. 4 च सा (for यदा). — [c]) K2 भीताशया; K4 भीता शापं. Dc D2 M तदा (for ततो). — [d]) K D1. 5 इव (for अथ). D1 [अं]तरे; Dc D2 [उ]त्तरं (for [अ]न्तरम्).

**3** The portion of the text from 3[c] up to 3. 294. 25[d] is lost in D1 on missing fol. (219–220). — [c]) K2 Dc D2. 5 S (except G2. 3) मन्निमित्तं. K4 G2. 4 नु (for न).

**4** D1 missing (cf. v.l. 3). — [a]) K1 G1. 2 बाल्येनापि. K1 भृशं; K2 G2 सतां; B1 Dc D2 यदा; B4 Dn1 सदा (for सता). — [b]) K1 सतां (for भृशं). K1 नापह्नवान्यपि; K2 सोपद्रवा°; B1. 2 Dn D1. 4. 6 G3 पापकृता°; B4 D5 सापकृता°; T G1. 2. 4 शापभयादपि. — [c]) K1 B Dn D4. 6 G3 नाभ्या°; K2. 3 नान्या°; K4 तान्यासाध°; D5 न ह्यहं छादयिष्यामि.

**5** D1 missing (cf. v.l. 3). — [a]) Dc D2 भृता (for भीता). — [b]) B3 Dc Dn D2. 6 T2 G2–4 गृहीत्वा (for °ता). B4 कवचं; G1 [अ]पि करे; T2 G2. 4 च करौ (for च करे). K1. 2 स्वयं (for भृशम्). — [c]) K2 T G1. 2. 4 च कार्यं; Dc D2 नु कार्यं; D5 तवेह (for त्वकार्यं). K2 कन्या; B2 कुर्याद् (for कुर्यां). — [d]) K4 Dc D2 प्रदाने (for °नं). G1 त्वहं (for स्वयम्). G2. 4 स्वयमात्मनिवेदनं.

**6** D1 missing (cf. v.l. 3). Before 6, N (except K4; D1. 3 missing) G1. 3 ins. वैशं° उ° (resp. वैशं°). — [a]) B2 Dn D4. 6 G3 सा वै (for सैवं). T G1. 2. 4 M °भयात् त्रस्ता (T1 G1 भीता) (for °परित्रस्ता). — [b]) B1. 2. 4 Dc Dn D2. 4. 6 G3 हृदा (for तदा). M चिंतयंती हृदा बहु. — [c]) Dn2 G3 [अ]पि; D5 च (for [अ]भि-). K1. 2 -परीता च; D5 समायुक्ता (for -परीताङ्गी). — [d]) MSS. स्मयमानः, °मानं also.

**7** D1 missing (cf. v.l. 3). — [a]) K3 Dc2 Dn2 D5 T G1. 2 तदे(K3 T1 G1. 2 °दै)वम्; K4 देवं तम् (by transp.); G4 तस्यैवम्. K4 प्रीता (for भीता). — [d]) S (except G3) शापाच्चैव (for शापत्रस्ता).

**8** D1 missing (cf. v.l. 3). K1. 3. 4 T1 M2 om. the ref. — [a]) T2 च (for मे). — [c]) K1. 2 विद्यमानेषु; K3 विप्रियं कार्यं. — [d]) K3 धर्मलोपो; G4 M2 विधिलोभो.

**9** D1 missing (cf. v.l. 3). — [a]) B Dn D4. 6 G3 तु (B3 च) (for मे). — [c]) K1 सन्नि°; K4 त्वन्नि° (for मन्नि°). — [d]) K1.2.4 Dc D2. 5 कीर्तिक्षयस्ततः (K4 °स्तव); T G [ऽ]कीर्तिर्नं (G2 °र-) संशयः.

**10** [a]) K1. 2 G1 एव; K2 एवं; T2 G1. 2 एतत् (for एतं). — [b]) K2 सत्यं ते (for मन्यसे). — [c]) T G1 मते (for ऋते). K3 D5 प्रसादाद् (for प्रदानाद्). — [d]) D4 G3 तत्र; D5 त्वया (for तव). K D5 कार्यं (for कामं).

**11** D1 missing (cf. v.l. 3). — [a]) Dn2 °दानं च (for °प्रदानं). K1. 2 D6 T G3 दुर्धर्ष. — [b]) K1. 2 महीतले; K3. 4 Dc D2. 5 M सती ह्यहं. — [c]) D5 ते च (for चैव). — [d]) S (except G3) त्वयि कीर्तिश्च.

**12** D1 missing (cf. v.l. 3). — [b]) K4 ते (for वा).

सूर्य उवाच ।

न ते पिता न ते माता गुरवो वा शुचिस्मिते ।
प्रभवन्ति वरारोहे भद्रं ते शृणु मे वचः ॥ १२
सर्वान्कामयते यस्मात्कनेर्धातोश्च भामिनि ।
तस्मात्कन्येह सुश्रोणि स्वतन्त्रा वरवर्णिनि ॥ १३
नाधर्मश्चरितः कश्चित्त्वया भवति भामिनि ।
अधर्मं कुत एवाहं चरेयं लोककाम्यया ॥ १४
अनावृताः स्त्रियः सर्वा नराश्च वरवर्णिनि ।
स्वभाव एष लोकानां विकारोऽन्य इति स्मृतः ॥ १५
सा मया सह संगम्य पुनः कन्या भविष्यसि ।
पुत्रश्च ते महाबाहुर्भविष्यति महायशाः ॥ १६

कुन्त्युवाच ।

यदि पुत्रो मम भवेत्त्वत्तः सर्वतमोपह ।
कुण्डली कवची शूरो महाबाहुर्महाबलः ॥ १७

सूर्य उवाच ।

भविष्यति महाबाहुः कुण्डली दिव्यवर्मभृत् ।
उभयं चामृतमयं तस्य भद्रे भविष्यति ॥ १८

कुन्त्युवाच ।

यद्येतदमृतादस्ति कुण्डले वर्म चोत्तमम् ।
मम पुत्रस्य यं वै त्वं मत्त उत्पादयिष्यसि ॥ १९
अस्तु मे संगमो देव यथोक्तं भगवंस्त्वया ।
त्वद्वीर्यरूपसत्त्वौजा धर्मयुक्तो भवेत्स च ॥ २०

सूर्य उवाच ।

अदित्या कुण्डले राज्ञि दत्ते मे मत्तकाशिनि ।
तेऽस्य दास्यामि वै भीरु वर्म चैवेदमुत्तमम् ॥ २१

पृथोवाच ।

परमं भगवन्देव संगमिष्ये त्वया सह ।
यदि पुत्रो भवेदेवं यथा वदसि गोपते ॥ २२

---

D5 °व्रते (for °स्मिते). — c) S (except G3) प्रदा(G4 °धा)ने ते (M वै) (for वरारोहे). — d) K3 सर्वं तत् (for भद्रं ते). Dc D2 मद्- (for मे).

**13** D1 missing (cf. v.l. 3). — a) K2 M2 सर्वं (for सर्वान्). T2 G2 कामयसे. T2 G3 तस्मात्. — b) K1. 2 कामं वरय; K3 B2. 3 Dn D2. 4. 6 T1 क(T1 क्ष)मेर्धातोश्च; B1 कालधा°; B4 कामधा°; D5 कामहीनांश्च. B D(D1. 3 missing) भाविनि; a few MSS. भामिनी. — c) K2 स्वतंत्रा (for सुश्रोणि). — d) K2 वरं वरय भामिनी.

**14** D1 missing (cf. v.l. 3). — b) B D (D1. 3 missing) भाविनि; a few MSS. भामिनी. — d) K4 चरेहं; B1. 4 Dn8 D6 वरेयं; B2 भवेयं (for चरेयं).

**15** D1 missing (cf. v.l. 3). — a) T1 अनाश्रिताः; G2 अन्यावृताः. — d) K2 श्रुतिः; B3 स्मृतिः; T1 G1 स्थितिः (for स्मृतः).

**16** D1 missing (cf. v.l. 3). — a) M त्वं (for सा). — d) T G1. 2. 4 न संशयः (for महा°).

**17** D1 missing (cf. v.l. 3). — a) M अपि (for यदि). T G1. 2. 4 ममाप्येवं; M मम ह्येष (for मम भवेत्). — b) B Dc Dn D4. 6 T2 G3 °नुद; D2 °नुदः; K2 M °पहन्; K3 °पहं (for °पह). — d) S (except G3) भविष्यति (for महा°). — After 17, B4 ins.:

1344* तिग्मरश्मे महाबाहो संगमिष्ये दुहा[read रा]सद ।;

while T2 G1 ins.:

1345* अस्तु मे संगमो देव अनेन समयेन ते ।
[Cf. 20ab.]

**18** D1 missing (cf. v.l. 3). M2 om. 18-19. — a) K1. 2 °शूरः (for °बाहुः). — T2 G2. 4 om. from -बाहुः (in 18a) up to कुण्डले (in 21a). — b) T1 G1 °धृक् (for °भृत्). — c) D4. 6 G3 अभेद्यं (for उभयं). K3 D6 वा; M1 तु (for च).

**19** D1 missing (cf. v.l. 3). T2 G2. 4 M2 om. 19 (cf. v.l. 18). K D5 T1 G1 M1 पृथा (for कुन्ती). — a) K1. 2 यदन्यद् (for यद्येतद्). K3 M1 यद्यप्यन्ये- मृतादस्ति (M1 °मृतोदात्ते); T1 G1 यद्येवं ह्यमृतोद्भूते. — c) K1 यो वै; B2 वीर (for यं वै). — d) K2. 3 मत्त उत्पाद- यिष्यति; K4 तस्य भद्रे भविष्यति (m as in text).

**20** D1 missing (cf. v.l. 3). T2 G2. 4 om. 20 (cf. v.l. 18). — a) B3 नो (m मे as in text). — c) K1. 2 त्वद्रूपवीर्य- (by transp.). K4 Dc D2 -संपन्नो (for -सत्त्वौजा). — d) K1 सदा; K2 तदा; Dc D2 मम (for स च).

**21** D1 missing (cf. v.l. 3). T2 G2. 4 om. अदित्या कुण्डले (cf. v.l. 18). — a) K1. 2 अदित्याः; T1 G1 M आदित्य- (M °त्ये) (for अदित्या). — b) K3. 4 T1 G1. 2 M मत्समे; T2 G4 मत्समो. K1. 2 मत्समीपे तु

वैशंपायन उवाच ।

तथेत्युक्त्वा तु तां कुन्तीमाविवेश विहंगमः ।
स्वर्भानुशत्रुर्योगात्मा नाभ्यां पस्पर्श चैव ताम् ॥ २३
ततः सा विह्वलेवासीत्कन्या सूर्यस्य तेजसा ।
पपाताथ च सा देवी शयने मूढचेतना ॥ २४

सूर्य उवाच ।

साधयिष्यामि सुश्रोणि पुत्रं वै जनयिष्यसि ।
सर्वशस्त्रभृतां श्रेष्ठं कन्या चैव भविष्यसि ॥ २५

वैशंपायन उवाच ।

ततः सा व्रीडिता बाला तदा सूर्यमथाब्रवीत् ।
एवमस्त्विति राजेन्द्र प्रस्थितं भूरिवर्चसम् ॥ २६
इति स्मोक्ता कुन्तिराजात्मजा सा
विवस्वन्तं याचमाना सलज्जा ।
तस्मिन्पुण्ये शयनीये पपात
मोहाविष्टा भज्यमाना लतेव ॥ २७
तां तिग्मांशुस्तेजसा मोहयित्वा
योगेनाविश्यात्मसंस्थां चकार ।
न चैवैनां दूषयामास भानुः
संज्ञां लेभे भूय एवाथ बाला ॥ २८

इति श्रीमहाभारते आरण्यकपर्वणि एकनवत्यधिकद्विशततमोऽध्यायः ॥ २९१ ॥

# २९२

वैशंपायन उवाच ।

ततो गर्भः समभवत्पृथायाः पृथिवीपते ।
शुक्ले दशोत्तरे पक्षे तारापतिरिवाम्बरे ॥ १
सा बान्धवभयाद्बाला तं गर्भं विनिगूहती ।

C. 3. 17127
B. 3. 308. 2
K. 3. 309. 2

कामिनि. — $^{c}$) $K_{1.2}$ अद्य; $K_4$ अस्य; $B_{1.2.4}$ Dc $D_2$ तस्य; S (except $G_3$) तस्मै (for तेऽस्य). $K_{1.2.4}$ T $G_1$ M ते (for वै). $G_{2.4}$ वामोरु (for वै भीरु). — $^{d}$) S (except $G_3$) आत्मनः (for उत्तमम्). $K_{2.3}$ $D_5$ वर्म चैवेह चोत्तमं; $K_4$ वर्म चैवमनुत्तमं; $B_2$ कवचं चेदमुत्तमं; Dc $D_2$ कुंडले वर्म चोत्तमं.

**22** $D_1$ missing (cf. v.l. 3). B D ($D_{1.3}$ missing) $G_3$ कुन्त्युवाच (for पृथो°). — $^{a}$) $B_{1.2}$ Dn $D_{4-6}$ $G_3$ एवं (for देव). Dc $G_4$ भगवन्देवदेवेश. — $^{b}$) $T_1$ $G_1$ संगच्छेयं; $T_2$ $G_2$ °गम्येह; $G_4$ °गमोयं; $M_2$ °गंस्येहं. Dc $D_2$ [अ]नघ (for सह). — $^{c}$) K $D_{5.6}$ भवति (for भवेद्). $K_4$ $B_2$ एव (for एवं).

**23** $D_1$ missing (cf. v.l. 3). $K_3$ om. 23. — $^{a}$) $B_4$ $T_2$ $G_{1.2}$ [उ]त्त्वा च; $G_4$ [उ]वाच (for [उ]क्त्वा तु).

**24** $D_1$ missing (cf. v.l. 3). — $^{a}$) T $G_{1.2.4}$ °ला साध्वी (for °लेवासीत्). — $^{c}$) $B_{1.4}$ Dn $D_{4.6}$ $G_3$ चाथ सा; $B_3$ साथ वै; $G_{2.4}$ विह्वला (for [अ]थ च सा). $B_2$ विवस्वंतं याचमाना. — $^{d}$) $B_4$ मृदु° (for मूढ°).

**25** $D_1$ missing (cf. v.l. 3). — $^{ab}$) K $D_5$ साधयिष्यामि पुत्रं वै ($K_1$ by transp. वै पुत्रं) जनयिष्यसि ($K_1$ °ष्यामि) भामिनि. — $^{d}$) $G_1$ पुनः कन्या (for कन्या चैव).

**26** $D_1$ missing (cf. v.l. 3). — $^{a}$) T $G_{1.2.4}$ M सा तु तं व्रीळिता बाला ($G_{2.4}$ साध्वी). — $^{b}$) T $G_1$ M कुंती; $G_{2.4}$ कन्या (for तदा). — $^{d}$) $B_2$ रविवर्चसं; $B_4$ भूरितेजसं.

**27** $D_1$ missing (cf. v.l. 3). — $^{a}$) S (except $T_1$ $G_3$) °भोजा° (for °राजा°). — $^{b}$) S (except $G_3$) ध्याय° (for याच°). — $^{d}$) $K_{1.2}$ S (except $G_3$) वेप°; $K_{3.4}$ लज्ज° (for भज्य°).

**28** $D_1$ missing (cf. v.l. 3). — $^{a}$) B Dn $D_{4.6}$ $G_3$ तिग्मांशुस्तां (by transp.); T $G_{1.2.4}$ M तां तीक्ष्णांशुस्. — $^{b}$) $T_2$ $G_{2.4}$ °सत्वं (for °संस्थां). — $^{c}$) $D_5$ [ए]तां मोह° (for [ए]नां दूष°). — $^{d}$) $K_{1.2}$ [अ]पि (for [अ]थ).

Colophon. $D_{1.3}$ missing. — *Major parvan:* $K_2$ $Dn_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* $K_{3.4}$ B Dc Dn $D_{2.4-6}$ $G_3$ कुंडला($D_5$ °लाभि)हरण. — *Adhy. name:* M सूर्यकुंतीसमागमः. — *Adhy. no.* (figures, words or both): $Dn_1$ (marg.). $n_2$ 305; $Dn_3$ 306; $T_1$ 291 (as in text!); $T_2$ $G_4$ $M_{1.2}$ (*inf. lin.*) 295 ($M_2$ orig. 297); $G_1$ 292; $G_2$ 294. — *Śloka no.:* Dn 28.

C. 3. 17127
B. 3. 308. 2
K. 3. 309. 2

धारयामास सुश्रोणी न चैनां बुबुधे जनः ॥ २
न हि तां वेद नार्यन्या काचिद्धात्रेयिकामृते ।
कन्यापुरगतां बालां निपुणां परिरक्षणे ॥ ३
ततः कालेन सा गर्भं सुषुवे वरवर्णिनी ।
कन्यैव तस्य देवस्य प्रसादादमरप्रभम् ॥ ४
तथैव बद्धकवचं कनकोज्ज्वलकुण्डलम् ।
हर्यक्षं वृषभस्कन्धं यथास्य पितरं तथा ॥ ५
जातमात्रं च तं गर्भं धात्र्या संमन्त्र्य भामिनी ।
मञ्जूषायामवदधे स्वास्तीर्णायां समन्ततः ॥ ६
मधूच्छिष्टस्थितायां सा सुखायां रुदती तथा ।
श्लक्ष्णायां सुपिधानायामश्वनद्यामवासृजत् ॥ ७
जानती चाप्यकर्तव्यं कन्याया गर्भधारणम् ।
पुत्रस्नेहेन राजेन्द्र करुणं पर्यदेवयत् ॥ ८
समुत्सृजन्ती मञ्जूषामश्वनद्यास्तदा जले ।
उवाच रुदती कुन्ती यानि वाक्यानि तच्छृणु ॥ ९
स्वस्ति तेऽस्त्वान्तरिक्षेभ्यः पार्थिवेभ्यश्च पुत्रक ।
दिव्येभ्यश्चैव भूतेभ्यस्तथा तोयचराश्च ये ॥ १०
शिवास्ते सन्तु पन्थानो मा च ते परिपन्थिनः ।
आगमाश्च तथा पुत्र भवन्त्वद्रोहचेतसः ॥ ११
पातु त्वां वरुणो राजा सलिले सलिलेश्वरः ।
अन्तरिक्षेऽन्तरिक्षस्थः पवनः सर्वगस्तथा ॥ १२
पिता त्वां पातु सर्वत्र तपनस्तपतां वरः ।
येन दत्तोऽसि मे पुत्र दिव्येन विधिना किल ॥ १३
आदित्या वसवो रुद्राः साध्या विश्वे च देवताः ।

## 292

☞ In D1. 3 this adhy. is lost on missing fol. (cf. v.l. 3. 287. 10; 291. 3); the MSS. are mostly ignored here.

**1** K4 T2 om. the ref. — b) T G2. 4 पृथायां (for °याः). — c) Dc2 D2 दशेतरे; T2 देशोत्तरे; G2 दर्शेतरे (for दशोत्तरे).

**2** a) S (except G3) भीता (for बाला). — b) B1. 3. 4 D (D1. 3 missing) G3 गर्भं तं (by transp.); B2 सभीतं. K °गूह्य वै; B3 °गृह्यतां (for °गूहती). — d) K1. 2 चैनं; D5 च तां (for चैनां).

**3** a) K3. 4 चैवान्या (for नार्यन्या). — b) K3 एवं; T1 G1 कांचिद् (for काचिद्). K1 M विना (for ऋते).

**4** a) K D5 तं (for सा). — c) B3 देवदेवस्य (for तस्य दे°). — d) K1. 2 प्रमादाद्; T M1 प्रभावाद् (for प्रसादाद्). K Dc D2. 5 अभवत्तदा (K1. 2 °त्सदा; K3. 4 °त्तथा).

**5** a) B2 अथ वा (for तथैव). B Dc Dn D2. 4 T2 G3 [आ]बद्ध° (for बद्ध°). — c) K1. 2 हर्यक्ष-. S (except G3) ऋषभ° (for वृषभ°).

**6** a) K1–3 तु (for च). K1. 2 गर्भं तं (by transp.). — b) B D (D1. 3 missing) भाविनी. — After $6^{ab}$, S (except G3 M2) ins.:

1346* उत्स्रष्टुकामा तं गर्भं कारयामास भारत ।
मञ्जूषां शिल्पिभिस्तूर्णं सुनद्धां सुप्रतिष्ठिताम् ।
प्लवैर्बहुविधैर्बद्धां प्लवनार्थं जले नृप ।
अजिनैर्मृदुभिश्चैव संस्तीर्णशयनां तथा ।

— T1 G1 om. $6^{cd}$. — c) B Dc Dn D2. 4. 6 G3 समाधाय; M समदधात् (for अवदधे).

**7** a) K1. 2 मंजूषायां स्थि°; K3 D4 G3 मधूच्छिष्टास्थि°. Dc D2 स-; T1 G1 तु; T2 G2–4 M1 तं (for सा). — b) G1 दुःखार्त्सं- (for सुखायां). K1. 2 B1. 3. 4 S (except G3) तदा; D5 सती (for तथा). — c) K1. 2 Dc D2 G2. 4 M स्वपिधा°; B4 सुविधा° (for सुपिधा°). — d) K1. 2 M न्यस्य (for अश्व-). T2 नद्यां सा स्वयमुत्सृजत्; G1 निक्षिप्य शिशुमंजसा.

**8** G1 om. $8^{a}$–$9^{b}$. — a) G4 जानाति (for जानती). — b) M कन्यया. — c) B3 D6 सा राजन् (for राजेन्द्र).

**9** G1 om. $9^{ab}$ (cf. v.l. 8). — b) B1–3 Dn D4. 6 G3 °नद्यां (for °नद्यास्). Dc D2. 5 T1 G2. 4 तथा (for तदा). — c) G1 अश्रुपूर्णमुखी कुंती; M1 उवाच कुंती रुदती.

**10** a) B Dn D4. 6 G3 च (for ऽस्तु). K3. 4 Dc D2. 5 T1 G1 [अं]त° (for [आ]न्त°). — c) K1. 2 दैवेभ्य° (for दिव्येभ्य°). — d) Dn1 व्योमचरा°; T1 G1 जलचरा°; G4 तोयं गता°.

**11** c) K1. 4 B Dc Dn1. n2 D4. 6 G3 आ(K4 अ)-गता(B4 °तां)श्च; K2 आगम्याश्च; D2 आश्वास्य च; D5 आगामिनस् (for आगमाश्च). S (except G3. 4) संतु (for पुत्र). — d) S (except G3) दिव्येन विधिना तव (cf. $13^{d}$).

**12** a) M त्वा (for त्वां). — d) Dc D2 सर्वेश°.

**13** a) T1 G1 ते; G2. 4 M त्वा (for त्वां). — d) S

Colophon.

[ Correction ! In the footnote on p. 677 ( marked by ☞ ) $K_1$ is wrongly included among the MSS. which have this insertion. This mistake has been rectified in the list given above ( p. 1067 f. ). ]

## 22

$K_2$ B Dc Dn $D_{3-6}$ ins. after adhy. 221 (for $G_{2.4}$ see below):

युधिष्ठिर उवाच ।
भगवञ्श्रोतुमिच्छामि नामान्यस्य महात्मनः ।
त्रिषु लोकेषु यान्यस्य विख्यातानि द्विजोत्तम ।
वैशंपायन उवाच ।
इत्युक्तः पाण्डवेयेन महात्मा ऋषिसंनिधौ ।
उवाच भगवांस्तत्र मार्कण्डेयो महातपाः ।
मार्कण्डेय उवाच ।
आग्नेयश्चैव स्कन्दश्च दीप्तकीर्तिरनामयः । [5]
मयूरकेतुर्धर्मात्मा भूतेशो महिषार्दनः ।
कामजित्कामदः कान्तः सत्यवाग्भुवनेश्वरः ।
शिशुः शीघ्रः शुचिश्चण्डो दीप्तवर्णः शुभाननः ।
अमोघस्त्वनघो रौद्रः प्रियश्चन्द्राननस्तथा ।
दीप्तशक्तिः प्रशान्तात्मा भद्रकृत्कूटमोहनः । [10]
षष्ठीप्रियश्च धर्मात्मा पवित्रो मातृवत्सलः ।
कन्याभर्ता विभक्तश्च स्वाहेयो रेवतीसुतः ।
प्रभुर्नेता विशाखश्च नैगमेयः सुदुश्चरः ।
सुव्रतो ललितश्चैव बालक्रीडनकप्रियः ।
खचारी ब्रह्मचारी च शूरः शरवणोद्भवः । [15]
विश्वामित्रप्रियश्चैव देवसेनाप्रियस्तथा ।
वासुदेवप्रियश्चैव प्रियः प्रियकृदेव तु ।
नामान्येतानि दिव्यानि कार्त्तिकेयस्य यः पठेत् ।
स्वर्गं कीर्तिं धनं चैव स लभेन्नात्र संशयः ।
मार्कण्डेय उवाच ।
स्तोष्यामि देवैर्ऋषिभिश्च जुष्टं [20]
शक्त्या गुहं नामभिरप्रमेयम् ।
षडाननं शक्तिधरं सुवीरं
निबोध चैतानि कुरुप्रवीर ।
ब्रह्मण्यो वै ब्रह्मजो ब्रह्मविच्च
ब्रह्मेशयो ब्रह्मवतां वरिष्ठः । [25]
ब्रह्मप्रियो ब्राह्मणसव्रती त्वं
ब्रह्मज्ञो वै ब्राह्मणानां च नेता ।
स्वाहा स्वधा त्वं परमं पवित्रं
मन्त्रस्तुतस्त्वं प्रथितः षडर्चिः ।
संवत्सरस्त्वमृतवश्च षड् वै [30]
मासार्धमासावयनं दिशश्च ।
त्वं पुष्कराक्षस्त्वरविन्दवक्त्रः
सहस्रवक्त्रोऽसि सहस्रबाहुः ।
त्वं लोकपालः परमं हविश्च
त्वं भावनः सर्वसुरासुराणाम् । [35]
त्वमेव सेनाधिपतिः प्रचण्डः
प्रभुर्विभुश्चाप्यथ शत्रुजेता ।
सहस्रभूस्त्वं धरणी त्वमेव
सहस्रतुष्टिश्च सहस्रभुक्च ।
सहस्रशीर्षस्त्वमनन्तरूपः [40]
सहस्रपात्त्वं गुह शक्तिधारी ।
गङ्गासुतस्त्वं स्वमतेन देव
स्वाहामहीकृत्तिकानां तथैव ।

---

Colophon. — *Adhy. no.:* $B_2$ 198; Dn 197 ($Dn_2$ 196); $D_1$ 217.

## 22

(L. 1) $B_{1.3}$ (m as above). $_4$ Dc च (for [अ]स्य). — (L. 4) $D_3$ महामनाः (*sup. lin.* °तपाः as above). — (L. 7) $B_4$ कामः (for कान्तः). Dc सत्यवान् (for °वाग्). — (L. 8) Dc $D_4$ चंद्रो (for चण्डो). — (L. 10) Dc $D_3$ तत्र कुक्कुटमोहनः (for the posterior half). — (L. 11) $B_4$ सर्वात्मा (for धर्मात्मा). — (L. 12) $B_1$ °कर्ता; $B_4$ Dc °हर्ता (for °भर्ता). — (L. 13) $D_5$ नयो (for नेता), and °दुस्तरः (for °दुश्चरः). — $D_5$ om. (hapl.) from the posterior half of line 14 up to the prior half of line 17. — (L. 15) Dc शूरबलो भुवः ($Dc_2$ बभुः) (for शरवणोद्भवः). $D_3$ सुव्रतो ललितश्चैव बालचारी खशोद्भवः. — $B_1$ om. (hapl.) from the posterior half of line 16 up to the prior half of line 17. — (L. 17) $K_2$ B Dc $D_{4-6}$ प्रियः प्रियक एव च ($D_{4-6}$ तु). — (L. 19) $B_4$ $D_5$ लभते (for स लभेन्). — After line 19, $B_3$ ins. आंगिरसे (colophon?). — (L. 20) $B_{3.4}$ Dc $D_{3.5}$ भक्त्या (for शक्त्या). Dc सादरम् (for नामभिर्). — (L. 24) $K_2$ $B_4$ $D_6$ वै ब्रह्मतेजो; $B_1$ ब्रह्मयोनिर् (for वै ब्रह्मजो). $B_2$ $Dc_2$ ब्रह्मवित्तं; $B_{3.4}$ °विश्वं; $Dc_1$ $D_{3.5}$ °वित्त्वं. — (L. 26) $B_1$ °सर्वमंत्री; Dc °सर्वतीर्थं (for °सव्रती त्वं). — (L. 29) Dc मंत्रस्तुतिस्त्वं. — (L. 30) $B_2$ षडेव (for च षड् वै). — (L. 31) $K_2$ $B_{2.4}$ $Dc_2$ $Dn_2$. $n_3$ $D_{3-6}$ °मासावयने; $B_3$ °मासा विदिशो. — (L. 38) $B_1$ Dc °पात्त्वं; $B_{3.4}$ $D_{3.4}$ °सूस्त्वं (for °भूस्त्वं). — (L. 39) $B_4$ °दृष्टिश्च (for °तुष्टिश्च). $K_2$ °संभुक्; Dc °भुक्त्वं (for °भुक्च). — (L. 41) $K_2$ °पादं (for °पात्त्वं). $Dn_1$ गुरु° (for गुह°). — (L. 43)

त्वं क्रीडसे षण्मुख कुक्कुटेन
यथेष्टनानाविधकामरूपी । [45]
दीक्षासि सोमो मरुतः सदैव
धर्मोऽसि वायुरचलेन्द्र इन्द्रः ।
सनातनानामपि शाश्वतस्त्वं
प्रभुः प्रभूणामपि चोग्रधन्वा ।
ऋतस्य कर्ता दितिजान्तकस्त्वं [50]
जेता रिपूणां प्रवरः सुराणाम् ।
सूक्ष्मं तपस्तत्परमं त्वमेव
परावरज्ञोऽसि परावरस्त्वम् ।
धर्मस्य कामस्य परस्य चैव
त्वत्तेजसा कृत्स्नमिदं महात्मन् । [55]
व्याप्तं जगत्सर्वसुरप्रवीर
शक्त्या मया संस्तुत लोकनाथ ।
नमोऽस्तु ते द्वादशनेत्रबाहो
अतः परं वेद्मि गतिं न तेऽहम् ।
स्कन्दस्य य इदं विप्रः पठेज्जन्म समाहितः । [60]
श्रावयेद्ब्राह्मणेभ्यो यः शृणुयाद्वा द्विजेरितम् ।
धनमायुर्यशो दीप्तं पुत्राञ्शत्रुजयं तथा ।
स पुष्टितुष्टी संप्राप्य स्कन्दसालोक्यमाप्नुयात् ।

Colophon.

☞ G2. 4 ins. (with v.l.) lines 61–62 only of the above passage after 80ab of the same adhy. (221), which is a very clear proof of the contamination of these two Grantha MSS. from the Northern Recension.

## 23

T2 G M ins. after 3. 232. 10 (G1, after 3. 232. 9):

एवमुक्तस्तु कौन्तेयः पुनर्वाक्यमभाषत ।
कोपसंरक्तनयनं पूर्ववैरमनुस्मरन् ।
पुरा जतुगृहेऽनेन दग्धुमस्मान्युधिष्ठिर ।
दुर्बुद्धिर्हि कृता वीर तदा दैवेन रक्षिताः ।
द्यूतकालेऽपि कौन्तेय वृजिनानि कृतानि वै । [5]
द्रौपद्याश्च परामर्शः केशग्रहणमेव च ।
वस्त्रापहरणं चैव सभामध्ये कृतानि वै ।
पुरा कृतानां पापानां फलं भुङ्क्ते सुयोधनः ।
अस्माभिरेव कर्तव्यो धार्तराष्ट्रस्य निग्रहः ।
अन्येन तु कृतं तद्वै मैत्रमस्माकमिच्छता । [10]
उपकारी तु गन्धर्वो मा राजन्विमना भव ।
एतस्मिन्नन्तरे राजंश्चित्रसेनेन वै हृतः ।
विललाप सुदुःखार्तो ह्रियमाणः सुयोधनः ।
युधिष्ठिर महाबाहो सर्वधर्मभृतां वर ।
सपुत्रान्सहदारांश्च गन्धर्वेण हृतान्बलात् । [15]
पाण्डुपुत्र महाबाहो कौरवाणां यशस्कर ।
सर्वधर्मभृतां श्रेष्ठ गन्धर्वेण हृतं बलात् ।
रक्षस्व पुरुषव्याघ्र युधिष्ठिर महायशः ।
भ्रातरं ते महाबाहो बद्ध्वा नयति मामयम् ।
दुःशासनं दुर्विषहं दुर्मुखं दुर्जयं तथा । [20]
बद्ध्वा हरन्ति गन्धर्वा अस्मद्दारांश्च सर्वशः ।
अनुधावत मां क्षिप्रं रक्षध्वं पुरुषोत्तमाः ।
यमौ मामनुधावेतां रक्षार्थं मम सायुधौ ।

---

K2 स्वाहाग्रही; B1 Dc2 °त्मजः; Dc1 °मयी-; D5 °मती- (for °मही-). — (L. 44) Dc यस्त्वथ (for षण्मुख). — (L. 45) B3 °रूपधारी (for °कामरूपी). — (L. 46) B1–3 D3 मरुतां; Dc यजतां (for मरुतः). — (L. 47) B1. 3 वचनेंद्र; D3 अखिलेंद्र (for अचलेन्द्र). D5 धर्मो वायूरसनेंद्रस्त्वमिंद्र वः. — (L. 50) K2 D3. 4. 6 [अ]मृतस्य; B2–4 मूढस्य; Dc मृडस्य (for ऋतस्य). D5 अमृत्युकर्ता दिवि जातस्ततस्त्वं. — (L. 51) D5 [अ]रीणां (for रिपूणां). — (L. 59) After line 59, B1 ins.: लोकाश्रय सुहृदामप्रमेय. — (L. 60) D5 transp. विप्रः and जन्म. — K2 om. line 61. — (L. 62) B1 Dc धर्मम्; B2 D3 बलम् (for धनम्). G2. 4 दीप्तिं (for दीप्तं). — (L. 63) K2 om. line 63. B1Dc स पुष्टिमिह; B2. 3 D5 सुपुष्टि( B3 °ष्टिं )तुष्टिं; D3 स तुष्टिपुष्टी; D4 स पुष्टिं तुष्टिं. D5 रुद्र° (for स्कन्द°). — Colophon. — *Adhy. no.:* Dn 231 (Dn2 230).

## 23

(L. 1) G1 धर्मराजस्य तद्वाक्यं निशम्य स वृकोदरः. — (L. 3) G1 ह्यस्मान् (for ऽनेन), and दग्धुमारब्धवांस्तदा (for the posterior half). — (L. 4) G1 दैवयुक्ता वयं वीर; M2 वंचना हि कृतानेन (for the prior half). G1 दैवेन परिरक्षिताः. — After line 4, G1 ins.:

कालकूटं विषं तीक्ष्णं भोजने मम भारत ।
उप्त्वा गङ्गां लतापाशैर्बद्ध्वा च प्राक्षिपत्प्रभो ।
रसातलं तु संप्राप्य तथा वासुकिमञ्जसा ।
तस्य प्रसादाद्राजेन्द्र पुनः प्राप्तो महीतलम् ।

— After line 7, G1 ins.:

राज्यं च छिद्य राजेन्द्र उक्तवान्परुषाणि नः ।

— G2 om. lines 9–13. — (L. 9) T2 G3. 4 M1 °रेव कर्तव्यं पाण्डुपुत्रस्य निग्रहं. — (L. 10) T2 G1. 3 कृतं तच्च; M2 कृतः सोपि. T2 G3 अस्माभिर् (for अस्माकम्). — (L. 11) G1 कृतोपकारो (for उपकारी तु). — (L. 12) T2 G3 राजा (for राजन्). — T2 G1. 3 M1 om. lines 14–15. — (L. 17) G1. 3 °विदां (for °भृतां). — (L. 18) T2 G2. 3 M2 °यशाः (for °यशः). — (L. 21) G4 M1 अस्मान्

कुरुवंशस्य सुमहद्यशः प्राप्तमीदृशम् ।
व्यपोहयध्वं गन्धर्वाञ्जित्वा वीर्येण पाण्डवाः । [25]
एवं विलपमानस्य कौरवस्यार्तया गिरा ।
श्रुत्वा विलापं संभ्रान्तो घृणयाभिपरिप्लुतः ।
युधिष्ठिरः पुनर्वाक्यं भीमसेनमथाब्रवीत् ।

☞ This passage is followed by a *repetition* of 3. 232. $9^{cd}$–$10^{cd}$ (evidently, for resuming the context disturbed by this interpolation).

## 24

After 3. 241. $15^{ab}$, $K_4$ D (except $D_4$) $G_3$ ins.:

भीष्मोऽस्मान्निन्दति सदा पाण्डवांश्च प्रशंसति ।
त्वद्द्वेषाच्च महाबाहो ममापि द्वेष्टुमर्हति ।
विगर्हते च मां नित्यं त्वत्समीपे नरेश्वर ।
सोऽहं भीष्मवचस्तद्वै न मृष्यामीह भारत ।
त्वत्समक्षं यदुक्तं च भीष्मेणामित्रकर्शन । [5]
पाण्डवानां यशो राजंस्तव निन्दां च भारत ।
अनुजानीहि मां राजन्सभृत्यबलवाहनम् ।
जेष्यामि पृथिवीं राजन्सशैलवनकाननाम् ।
जिता च पाण्डवैर्भूमिश्चतुर्भिर्बलशालिभिः ।
तामहं ते विजेष्यामि एक एव न संशयः । [10]
संपश्यतु सुदुर्बुद्धिर्भीष्मः कुरुकुलाधमः ।
अनिन्द्यं निन्दते यो हि अप्रशंस्यं प्रशंसति ।
स पश्यतु बलं मेऽद्य आत्मानं तु विगर्हतु ।
अनुजानीहि मां राजन्ध्रुवो हि विजयस्तव ।
प्रतिजानामि ते सत्यं राजन्नायुधमालभे । [15]
तच्छ्रुत्वा तु वचो राजन्कर्णस्य भरतर्षभ ।
प्रीत्या परमया युक्तः कर्णमाह नराधिपः ।
धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे त्वं महाबलः ।
हितेषु वर्तसे नित्यं सफलं जन्म चाद्य मे ।
यदा च मन्यसे वीर सर्वशत्रुनिबर्हणम् । [20]
तदा निर्गच्छ भद्रं ते ह्यनुशाधि च मामिति ।
एवमुक्तस्तदा कर्णो धार्तराष्ट्रेण धीमता ।
सर्वमाज्ञापयामास प्रायात्रिकमरिंदम ।
प्रययौ च महेष्वासो नक्षत्रे शुभदैवते ।
शुभे तिथौ मुहूर्ते च पूज्यमानो द्विजातिभिः । [25]
मङ्गलैश्च शुभैः स्नातो वाग्भिश्चापि प्रपूजितः ।
नादयन्रथघोषेण त्रैलोक्यं सचराचरम् ।

Colophon.

वैशंपायन उवाच ।
ततः कर्णो महेष्वासो बलेन महता वृतः ।
द्रुपदस्य पुरं रम्यं रुरोध भरतर्षभ ।
युद्धेन महता चैनं चक्रे वीरं वशानुगम् । [30]
सुवर्णं रजतं चापि रत्नानि विविधानि च ।
करं च दापयामास द्रुपदं नृपसत्तम ।
तं विनिर्जित्य राजेन्द्र राजानस्तस्य येऽनुगाः ।
तान्सर्वान्वशगांश्चक्रे करं चैनानदापयत् ।
अथोत्तरां दिशं गत्वा वशे चक्रे नराधिपान् । [35]
भगदत्तं च निर्जित्य राधेयो गिरिमारुहत् ।
हिमवन्तं महाशैलं युध्यमानश्च शत्रुभिः ।

---

(for अस्मद्-). — (L. 26) $T_2$ $G_3$ कौरव्यस्य (for °वस्य). — (L. 27) M सघृणो (for संभ्रान्तो). $T_2$ $G_3$ घृणयाति°; $G_2$ प्रणयाभि° (for घृणयाभि°).

## 24

(L. 1) $D_1$ भीष्मस्त्वां द्विषते नित्यं (for the prior half). — (L. 2) $K_4$ Dc मामपि (for ममापि). $D_{1.5}$ इच्छति (for अर्हति). — (L. 3) $K_4$ विगर्हे चैव (for विगर्हते च). $D_1$ त्वत्समेन (for त्वत्समीपे). — (L. 4) $D_3$ श्रुत्वा; $D_6$ तस्मै (for तद्वै). $D_2$ स्पृशामि; $D_6$ $G_3$ मृषामि (for मृष्यामि). — (L. 5) Dc वै; $D_5$ मे (for च). — (L. 6) $K_4$ Dc $D_{1.3}$ $G_3$ निंदा च. — (L. 7) $D_{2.3.6}$ °वाहनः; $D_5$ °वाहिनीं (for °वाहनम्). $D_1$ अनुजानीहि मां वीर त्वदर्थं वै नृपोत्तम. — (L. 8) $K_4$ Dc $D_{1.2}$ सर्वां (for राजन्). — (L. 9) $K_4$ Dc $D_{1.2}$ या जिता (for जिता च). — (L. 10) $D_5$ एक एव (for तामहं ते). — (L. 11) Dc स (for सं-). — (L. 12) $D_5$ निंदत्यनिंद्यं यो नित्यं (for the prior half). $K_4$ Dc $T_2$ $G_3$ अप्रशस्यं; $D_1$ °शस्यान्. $K_4$ प्रशंसते. — (L. 13) $K_4$ Dc $D_{1.2}$ च (for तु). — (L. 14) $D_1$ ध्रुवं (for ध्रुवो). — (L. 16) $K_4$ $D_{1.2}$ एतच्छ्रुत्वा (for तच्छ्रुत्वा तु). $D_5$ धृतराष्ट्रजः (for भरत°). — (L. 20) $K_4$ $Dn_1$ $D_{2.6}$ °निबर्हण; Dc $D_5$ °निबर्हणे; $D_1$ °वधाय मे; $D_3$ °निबर्हणः. — (L. 21) $K_4$ Dc $D_{1-3}$ $G_3$ अनुशाधि (om. हि). — (L. 23) Dc सर्वं निर्वापयामास. — (L. 24) $K_4$ Dc $Dn_1$. $n_3$ $D_{1.3.5.6}$ $G_3$ निर्ययौ (for प्र°). — Colophon. $D_5$ om. colophon. — *Adhy. no.*: Dn 252 ($Dn_2$ 251); $D_1$ 254. — (L. 29) $K_4$ Dc $D_1$ पुरुष° (for भरत°). — (L. 30) A few MSS. वीरो *or* वीर (for वीरं). — (L. 32) $K_4$ Dc $D_{1.2}$ राजसत्तमं (Dc °मः) (for नृपसत्तम). — (L. 33) $Dc_1$ राजेंद्रं राजानं. $D_1$ चानुगाः. — (L. 34) $D_1$ तांश्च सर्वान्वशीकृत्वा (for the prior half). Dn करं चानीय दापयत्। — (L. 35) $D_3$ om. line 35. $D_1$ कृत्वा (for चक्रे). $Dn_2$ $G_3$ नराधिप. — (L. 36) $K_4$ $D_{3.6}$ वि- (for च). — (L. 38) $Dn_3$ $D_3$ $G_3$ सर्वाः (for सर्वान्). — (L. 40) Dn om. (? hapl.) line 40! $K_4$ $D_{2.5.6}$ $G_3$ विनिर्जयत्; $D_1$ च वर्ज°; $D_3$ व्यवर्ज° (for अवाज°). — (L. 41)

प्रययौ च दिशः सर्वान्नृपतीन्वशमानयत् ।
स हैमवतिकाञ्जित्वा करं सर्वानदापयत् ।
नेपालविषये ये च राजानस्तानवाजयत् । [40]
अवतीर्य ततः शैलात्पूर्वां दिशमभिद्रुतः ।
अङ्गान्वङ्गान्कलिङ्गांश्च शुण्डिकान्मिथिलानथ ।
मागधान्कर्कखण्डांश्च निवेश्य विषयेऽऽत्मनः ।
आवशीरांश्च योध्यांश्च अहिक्षत्रं च निर्जयत् ।
पूर्वां दिशं विनिर्जित्य वत्सभूमिं तथागमत् । [45]
वत्सभूमिं विनिर्जित्य केवलां मृत्तिकावतीम् ।
मोहनं पत्तनं चैव त्रिपुरीं कोसलां तथा ।
एतान्सर्वान्विनिर्जित्य करमादाय सर्वशः ।
दक्षिणां दिशमास्थाय कर्णो जित्वा महारथान् ।
रुक्मिणं दाक्षिणात्येषु योधयामास सूतजः । [50]
स युद्धं तुमुलं कृत्वा रुक्मी प्रोवाच सूतजम् ।
प्रीतोऽस्मि तव राजेन्द्र विक्रमेण बलेन च ।
न ते विघ्नं करिष्यामि प्रतिज्ञां समपालयम् ।
प्रीत्या चाहं प्रयच्छामि हिरण्यं यावदिच्छसि ।
समेत्य रुक्मिणा कर्णः पाण्ड्यं शैलं च सोऽगमत् । [55]
स केरलं रणे चैव नीलं चापि महीपतिम् ।
वेणुदारिसुतं चैव ये चान्ये नृपसत्तमाः ।
दक्षिणस्यां दिशि नृपान्करान्सर्वानदापयत् ।
शैशुपालिं ततो गत्वा विजिग्ये सूतनन्दनः ।
पार्श्वस्थांश्चापि नृपतीन्वशे चक्रे महाबलः । [60]
आवन्त्यांश्च वशे कृत्वा साम्ना च भरतर्षभ ।
वृष्णिभिः सह संगम्य पश्चिमामपि निर्जयत् ।
वारुणीं दिशमागम्य यावनान्बर्बरांस्तथा ।
नृपान्पश्चिमभूमिस्थान्दापयामास वै करान् ।
विजित्य पृथिवीं सर्वां स पूर्वापरदक्षिणाम् । [65]
सम्लेच्छाटविकान्वीरः सपर्वतनिवासिनः ।
भद्रान्रोहितकांश्चैव आग्नेयान्मालवानपि ।
गणान्सर्वान्विनिर्जित्य नीतिकृत्प्रहसन्निव ।
शशकान्यवनांश्चैव विजिग्ये सूतनन्दनः ।
नग्नजित्प्रमुखांश्चैव गणाञ्जित्वा महारथान् । [70]
एवं स पृथिवीं सर्वां वशे कृत्वा महारथः ।
विजित्य पुरुषव्याघ्रो नागसाह्वयमागमत् ।
तमागतं महेष्वासं धार्तराष्ट्रो जनाधिपः ।
प्रत्युद्गम्य महाराज सभ्रातृपितृबान्धवः ।
अर्चयामास विधिना कर्णमाहवशोभिनम् । [75]
आश्रावयच्च तत्कर्म प्रीयमाणो जनेश्वरः ।
यच्च भीष्माच्च च द्रोणाच्च कृपाच्च च बाह्लिकात् ।

---

D1 अभिद्रवत्; D5 °श्रितः (for °द्रुतः). — (L. 42) K4 D2. 3 वंगानंगान् (by transp.). D1 वंगान्कलिंगान्गौडांश्च. Dn1 मंडिकान्; Dn2. n3 D1 G3 मुंडिकान्; D2. 3 चंडिकान्; D5 पुंड्रकान् (for शुण्डिकान्). K4 D1 अपि (for अथ). — (L. 43) K4 कर्षखंडांश्च; D1 अर्ककंडांश्च (for कर्कखं°). K4 D6 G3 विषयात्मनः; Dc विषयांस्ततः. — (L. 44) K4 D1-3 श्रावस्तीं चाप्यं(D2 चाभ्य; D3 वांश्च)योधांश्च; Dc D5 अवंती चाप्ययो° (for the prior half). K4 Dc D1-3. 5 अहिच्छत्रांश्च सोजयत्. — G3 om. the posterior half of line 44 and the prior half of line 45. — (L. 45) K4 Dc D2. 3 अथा°; D1 उपा° (for तथा°). — (L. 46) K4 मेखलां; Dc D1-3 मेकलां (for केवलां). — (L. 47) K4 सोदनं; Dc D1-3 मोदनं; D5 नोदनं (for मोहनं). Dc त्रिपुरं; D5 त्रिपुरां. K4 Dc कौशलं; Dn1 कोशलीं; Dn3 D1-3 कोशलान्; D5 कोसलं. — (L. 48) D1 करानादाय; D5 करादानाय. — (L. 49) K4 Dc D1-3. 5 आसाद्य (for आस्थाय). K4 Dc D2. 3 °नृपान् (for °रथान्). — (L. 51) A few MSS. तुमलं. — (L. 52) K4 Dc D1-3 राधेय (for राजेन्द्र). — (L. 53) K4 D2. 3. 5 °कल्पय; Dc °कल्पयन्; D1 °कंपयन्; G3 °पालय (for °पालयम्). — (L. 54) Dc सुवर्णं (for हिरण्यं). — (L. 55) K4 सोध्यगात्; Dc D1-3 सोभ्यगात्; D5 सोत्यगात् (for सोऽगमत्). — (L. 56) D5 चापि; D1 जित्वा (for चैव). Dc चैव (for चापि). — (L. 57) D5 °दार° (for °दारि°). G3 पंचान्ये (for ये चान्ये). — (L. 58) D5 नृपसुतान् (for दिशि नृपान्). — D3 om. lines 59-60. — (L. 59) K4 Dc Dn2. n3 D1 G3 °पालं (for °पालिं). — (L. 60) D1 पार्श्वस्थांश्चैव; D3 सुपार्श्वस्थांश्च. Dc नराधिपः (for महाबलः). — (L. 61) D1 पुरुष° (for भरत°). Dn1 om. from साम्ना up to संगम्य (in line 62). — (L. 62) D3. 6 निर्जयन्. — (L. 63) D1 आक्रम्य (for आगम्य). K4 D1-3. 5 यवनान्बर्बरां°; Dc बर्बरान्यवनां°. — (L. 64) D1 करं (for करान्). — (L. 66) K4 Dc सम्लेच्छाटविकां; D1. 2 सम्लेच्छाटविकान् (D1 °कां). — D1 om. from सपर्वत (in line 66) up to पुरुषव्याघ्रो (in line 72). — (L. 66) K4 D2. 3. 5 G3 °निवासिनीं; Dc °निवासिनां. — (L. 67) Dc Dn3 D3. 6 G3 मद्रान्; D5 महान् (for भद्रान्). K4 सामुद्रांल्लोहितांश्चैव. K4 D5 om. (hapl.) from आग्नेयान् up to °श्चैव (in line 69). — (L. 68) Dc तंगणान्परतंगणान्; D3 नातिकृच्छ्राद्धसन्निव. — (L. 69) Dc सशकान् (for शशकान्). — (L. 70) K4 Dc D2. 3 मंहारथः. — (L. 71) K4 Dc D5 ससमुद्रनगद्रुमां; D2. 3 समुद्रनगरद्रुमां (for the posterior half). — (L. 72) D2 समागच्छत्स्वकं पुरं (for the posterior half). — (L. 73) Dc धनाधिपं (for जनाधिपः). — (L. 75) Dc विधिवत् (for °ना). D5 °शालिनं (for °शोभिनम्). — (L. 76) K4 Dc D1-3. 5 आराधयच्च (D1 °त) (for आश्रावयच्च). — (L. 78) D5

प्राप्तवानसि भद्रं ते त्वत्तः प्राप्तं मया हि तत् ।
बहुना च किमुक्तेन शृणु कर्ण वचो मम ।
सनाथोऽस्मि महाबाहो त्वया नाथेन सत्तम । [80]
न हि ते पाण्डवाः सर्वे कलामर्हन्ति षोडशीम् ।
अन्ये वा पुरुषव्याघ्र राजानोऽभ्युदितोदिताः ।
स भवान्धृतराष्ट्रं तं गान्धारीं च यशस्विनीम् ।
पश्य कर्ण महेष्वास अदितिं वज्रभृद्यथा ।
ततो हलहलाशब्दः प्रादुरासीद्दिशां पते । [85]
हाहाकाराश्च बहवो नगरे नागसाह्वये ।
केचिदेनं प्रशंसन्ति निन्दन्ति स्म तथापरे ।
तूष्णीमासंस्तथा चान्ये नृपास्तत्र जनाधिप ।
एवं विजित्य राजेन्द्र कर्णः शस्त्रभृतां वरः ।
सपर्वतवनाकाशां ससमुद्रां सनिष्कुटाम् । [90]
देशैरुच्चावचैः पूर्णां पत्तनैर्नगरैरपि ।
द्वीपैश्चानूपसंपूर्णैः पृथिवीं पृथिवीपते ।
कालेन नातिदीर्घेण वशे कृत्वा तु पार्थिवान् ।
अक्षयं धनमादाय सूतजो नृपमभ्ययात् ।
प्रविश्य च गृहं राजन्नभ्यन्तरमरिंदम । [95]
गान्धारीसहितं वीरो धृतराष्ट्रं ददर्श सः ।
पुत्रवच्च नरव्याघ्र पादौ जग्राह धर्मवित् ।
धृतराष्ट्रेण चाश्लिष्य प्रेम्णा चापि विसर्जितः ।
तदा प्रभृति राजा च शकुनिश्चापि सौबलः ।
जानते निर्जितान्पार्थान्कर्णेन युधि भारत । [100]

Colophon.

वैशंपायन उवाच ।
जित्वा तु पृथिवीं राजन्सूतपुत्रो जनाधिप ।
अब्रवीत्परवीरघ्नो दुर्योधनमिदं वचः ।

☞ This is followed in the above MSS. by a *repetition* of 3. 241. $15^{ab}$ (v.l. त्वां for त्वा) with the ref. (कर्ण उवाच ।), which is a clear indication of the passage being an interpolation Cf. note at the end of passage No. 23.

## 25

After adhy. 247, Dc1 Dn D1. 2. 6 G3 ins. the foll. two adhy.:

जनमेजय उवाच ।
वसत्स्वेवं वने तेषु पाण्डवेषु महात्मसु ।
रममाणेषु चित्राभिः कथाभिर्मुनिभिः सह ।
सूर्यदत्ताक्षयान्नेन कृष्णाया भोजनावधि ।
ब्राह्मणांस्तर्पमाणेषु ये चान्नार्थमुपागताः ।
आरण्यानां मृगाणां च मांसैर्नानाविधैरपि । [5]
धार्तराष्ट्रा दुरात्मानः सर्वे दुर्योधनादयः ।
कथं तेष्वन्ववर्तन्त पापाचारा महामुने ।
दुःशासनस्य कर्णस्य शकुनेश्च मते स्थिताः ।
एतदाचक्ष्व भगवन्वैशंपायन पृच्छतः ।
वैशंपायन उवाच ।
श्रुत्वा तेषां तथा वृत्तिं नगरे वसतामिव । [10]

---

[अ]थ (for हि). — (L. 79) K4 Dc D1. 3 [अ]त्र (for च). — (L. 80) D1 समर्थो (for सनाथो). — (L. 82) Dc च (for वा). K4 Dc D3 पुरुषव्याघ्रा. Dc2 [ऽ]भ्युदितो दिशः; D5 [ऽ]प्युदितोदिताः. — (L. 83) K4 Dc D1-3. 5 च (for तं). — Dc2 om. lines 84-86. — (L. 86) Dc1 Dn3 हाहाकारश्च. Dc1 बहुशो; D2. 3 बहुलो (for बहवो). — (L. 87) D1 [अ]परे जनाः (for तथापरे). — (L. 88) Dn2 भूतास् (for आसन्). D1 तथैवान्ये; D3 नृपाश्चास्य. D5 प्राप्ते कर्णे नरेश्वर (for the posterior half). For line 88, Dc subst.:

नन्दन्ति स्म तथा चान्ये तूष्णीमासंस्तथापरे ।
नृपाश्च तुष्टुवुश्चान्ये द्विजास्तत्र जनाधिप ।

— (L. 89) Dc निर्जित्य (for विजित्य). — (L. 90) Dc ससमुद्रवनोद्देशं; D3 सपर्वतवनोद्देशां; D5 सपर्वताकरवनां. — (L. 92) K4 D3 च रूप°; Dc D1. 3 च रत्न° (for चानूप°). — (L. 93) K4 Dc1 D1-3 च; Dc2 [अ]थ (for तु). — (L. 94) D3 गृहम् (for नृपम्). — (L. 95) D5 [अ]भ्यंतरं (for च गृहं). D1 सूतपुत्रः प्रतापवान्; D5 गृहस्य रिपुमर्दनः (for the posterior half). — (L. 96) Dc ह (for सः). — (L. 97) K4 Dc1 D3 G3 नरव्याघ्रः. — (L. 98) K4 वाचा (for चापि). — (L. 100) D2 reads line 100 after line 102. K4 Dc D1. 3. 5 मेनाते; Dn3 (by corr.) जानंति (for जानते). D1 विजितान् (for निर्जि°). K4 ते सर्वे (for कर्णेन). — Colophon. *Adhy. no.:* Dn 253 (Dn2 252); D1 255. — (L. 101) D5 स (for तु). Dc सर्वां (for राजन्). K4 Dc D1-3. 5 महाबलः (for जनाधिप). — (L. 102) D1 उवाच श्लक्ष्णया वाचा धृतराष्ट्रसुतं नृपं.

## 25

(L. 2) Dc1 D1. 2. 6 G3 मुनिसत्तम (for °भिः सह). — (L. 4) D1. 2. 6 G3 तर्प्य° (for तर्प°). Dc1 वनेषूपवनेषु च (for the posterior half). — (L. 5) Dc1 भक्ष्यैर्भोज्यैरनेकैश्च (for the prior half). — D2 om. from पायन (line 9) up to तेषु (line 11). — (L. 10) Dc1 पत्तने (for नगरे). — (L. 11) Dc1 °मानी (for °राज). — (L. 12) Dc1 D2 निकृतप्रज्ञैः. — (L. 14) Dc1 ऋषिः परमकोपनः (for the posterior half). — (L. 15) Dc1 दुर्वासा शंकरस्यांशो

दुर्योधनो महाराज तेषु पापमरोचयत् ।
तथा तैर्निकृतिप्रज्ञैः कर्णदुःशासनादिभिः ।
नानोपायैरघं तेषु चिन्तयत्सु दुरात्मसु ।
अभ्यागच्छत्स धर्मात्मा तपस्वी सुमहायशाः ।
शिष्यायुतसमोपेतो दुर्वासा नाम कामतः । [15]
तमागतमभिप्रेक्ष्य मुनिं परमकोपनम् ।
दुर्योधनो विनीतात्मा प्रश्रयेण दमेन च ।
सहितो भ्रातृभिः श्रीमानातिथ्येन न्यमन्त्रयत् ।
विधिवत्पूजयामास स्वयं किंकरवत्स्थितः ।
अहानि कतिचित्तत्र तस्थौ स मुनिसत्तमः । [20]
तं च पर्यचरद्राजा दिवारात्रमतन्द्रितः ।
दुर्योधनो महाराज शापात्तस्य विशङ्कितः ।
क्षुधितोऽस्मि ददस्वान्नं शीघ्रं मम नराधिप ।
इत्युक्त्वा गच्छति स्नातुं प्रत्यागच्छति वै चिरात् ।
न भोक्ष्याम्यद्य मे नास्ति क्षुधेत्युक्त्वैत्यदर्शनम् । [25]
अकस्मादेत्य च ब्रूते भोजयास्मांस्त्वरान्वितः ।
कदाचिच्च निशीथे स उत्थाय निकृतौ स्थितः ।
पूर्ववत्कारयित्वान्नं न भुङ्क्ते गर्हयन्स्म सः ।
वर्तमाने तथा तस्मिन्यदा दुर्योधनो नृपः ।
विकृतिं नैति न क्रोधं तदा तुष्टोऽभवन्मुनिः । [30]
आह चैनं दुराधर्षो वरदोऽस्मीति भारत ।
वरं वरय भद्रं ते यत्ते मनसि वर्तते ।

मयि प्रीते तु यद्धर्म्यं नालभ्यं विद्यते तव ।
एतच्छ्रुत्वा वचस्तस्य महर्षेर्भावितात्मनः ।
अमन्यत पुनर्जातमात्मानं स सुयोधनः । [35]
प्रागेव मन्त्रितं चासीत्कर्णदुःशासनादिभिः ।
याचनीयं मुनेस्तुष्टादिति निश्चित्य दुर्मतिः ।
अतिहर्षान्वितो राजा वरमेनमयाचत ।
शिष्यैः सह मम ब्रह्मन्यथा जातोऽतिथिर्भवान् ।
अस्मत्कुले महाराजो ज्येष्ठः श्रेष्ठो युधिष्ठिरः । [40]
वने वसति धर्मात्मा भ्रातृभिः परिवारितः ।
गुणवाञ्शीलसंपन्नस्तस्य त्वमतिथिर्भव ।
यदा च राजपुत्री सा सुकुमारी यशस्विनी ।
भोजयित्वा द्विजान्सर्वान्पतींश्च वरवर्णिनी ।
विश्रान्ता च स्वयं भुक्त्वा सुखासीना भवेद्यदा । [45]
तदा त्वं तत्र गच्छेथा यद्यनुग्राह्यता मयि ।
तथा करिष्ये त्वत्प्रीत्येत्येवमुक्त्वा सुयोधनम् ।
दुर्वासा अपि विप्रेन्द्रो यथागतमगात्ततः ।
कृतार्थमिव चात्मानं तदा मेने सुयोधनः ।
करेण च करं गृह्य कर्णस्य मुदितो भृशम् । [50]
कर्णोऽपि भ्रातृसहितमित्युवाच नृपं मुदा ।
दिष्ट्या कामः सुसंवृत्तो दिष्ट्या कौरव वर्धसे ।
दिष्ट्या ते शत्रवो मग्ना दुस्तरे व्यसनार्णवे ।
दुर्वासःक्रोधजे वह्नौ पतिताः पाण्डुनन्दनाः ।

---

शिष्यायुतसमन्वितः. — (L. 16) Dc1 ऋषिं परमतेजसं (for the posterior half). — (L. 17) Dc1 न नाम देव तत् मुदा (sic) (for the posterior half). — Dc1 (which om. lines 18–19) ins. after line 17:

पादौ प्रक्षाल्य विधिवदासने चोपवेश्य च ।
पूजयित्वा यथान्यायमातिथ्येन न्यमन्त्रयत् ।
तथेति स मुनिर्भुक्त्वा ययौ पादधिको (?) द्विजः ।
पुनः प्रत्यागमत्प्रातःकाले स नृपसत्तम ।
तथैव भोजयामास परमान्नेन तं मुदा ।
गतः स पुनरेवाथ भोक्तुकामः समभ्ययात् ।
तथैव भोजयामास राजा शापविशङ्कितः ।
मध्यंदिने कदाचित्स्युः (?) कदाचिन्निशिथेऽपि च ।
गोरजे प्रत्युषे चापि कदाचित्प्रहरार्धके ।
घापिना (?) याति तद्वेश्म शिष्यायुतसमन्वितः ।
कदाचिद्बहुभिः सार्धं कदाचिदयुतेन च ।
उषाकाले कदाचित्स स समपात्याण्मासिकः (?) ।
दुर्योधनं भ्रंशयितुं राज्याच्छापेन निष्टराम् (?) ।
क्रियया पाण्डुपुत्राणां क्रोधेन कलुषीकृतः ।
यदि मत्सेवनाद्भ्रंशेत्सकुलं नाशमेति च ।
एवं स मुनिराज्ञाय षण्मासावधि प्रत्यहम् ।
दुर्योधनगृहं प्रायाद्यदिच्छति तथैव तत् ।

ततः परमसंतुष्टो राजानं धृतराष्ट्रजम् ।

— (L. 23) Dc1 जनपदेश्वर (for मम नराधिप). — (L. 28) D1 तन् (for [अ]न्नं). Dn3 गर्हते (for °यन्). Dc1 सदा (for स्म सः). — (L. 30) Dc1 D2 नैव (for नैति). — Before line 32, most MSS. ins. दुर्वासा उवाच. — After line 33, Dc1 ins.:

प्रसन्नोऽस्मि तथातिथ्यात्तेनाह वरदोऽस्म्यहम् ।

— Before line 34, most MSS. ins. वैशं° उ°. — (L. 37) Dc1 मुनौ तुष्टे (for मुनेस्तुष्टाद्), and तैः समेत्य स दुर्मतिः (for the posterior half). — (L. 38) Dn1 राजन् (for राजा). — (L. 39) Dc1 भ्रातृभिः सहितः सर्वैः कर्णशकुनिसाधनैः. (L. 40) D1 °राज (for °राजो). — (L. 41) Dc1 कांतया सह (for परिवारितः). — (L. 44) Dc1 भ्रातॄंश्च द्रुपदात्मजा (for the posterior half). — (L. 47) Dc1 D1. 2 त्वत्प्रीत्यै एवमुक्त्वा (om. इति). — (L. 48) Dc1 तपतां श्रेष्ठो (for अपि विप्रेन्द्रो). — (L. 49) Dc1 Dn1 G3 अपि (for इव). — (L. 51) Dn1 D1 तदा (for मुदा). — Before line 52, most. MSS. ins. कर्ण उ°. — (L. 54) Dc1 D2 पातिताः (for प°). — (L. 55) Dn2 स्वैरं बत; Dn3 स्वैरमेते (for स्वैरेव ते). — Before line 56, most MSS. ins. वैशं° उ°. — Colophon. Dc1 om. the colophon.

स्वैरेव ते महापापैर्गता वै दुस्तरं तमः। [55]
इत्थं ते निकृतिप्रज्ञा राजन्दुर्योधनादयः।
हसन्तः प्रीतमनसो जग्मुः स्वं स्वं निकेतनम्।

Colophon.

वैशंपायन उवाच।

ततः कदाचिद्दुर्वासाः सुखासीनांस्तु पाण्डवान्।
भुक्त्वा चावस्थितां कृष्णां ज्ञात्वा तस्मिन्वने मुनिः।
अभ्यागच्छत्परिवृतः शिष्यैरयुतसंमितैः। [60]
दृष्ट्वायान्तं तमतिथिं स च राजा युधिष्ठिरः।
जगामाभिमुखः श्रीमान्सह भ्रातृभिरच्युतः।
तस्मै बद्ध्वाञ्जलिं सम्यगुपवेश्य वरासने।
विधिवत्पूजयित्वा तमातिथ्येन न्यमन्त्रयत्।
आह्निकं भगवन्कृत्वा शीघ्रमेहीति चाब्रवीत्। [65]
जगाम च मुनिः सोऽपि स्नातुं शिष्यैः सहानघः।
भोजयेत्सहशिष्यं मां कथमित्यविचिन्तयन्।
न्यमज्जत्सलिले चापि मुनिसंघः समाहितः।
एतस्मिन्नन्तरे राजन्द्रौपदी योषितां वरा।
चिन्तामवाप परमामन्नहेतोः पतिव्रता। [70]
सा चिन्तयन्ती च यदा नान्नहेतुमविन्दत।
मनसा चिन्तयामास कृष्णं कंसनिषूदनम्।
कृष्ण कृष्ण महाबाहो देवकीनन्दनाव्यय।
वासुदेव जगन्नाथ प्रणतार्तिविनाशन।
विश्वात्मन्विश्वजनक विश्वहर्तः प्रभोऽव्यय। [75]
प्रपन्नपाल गोपाल प्रजापाल परात्पर।
आकूतीनां च चित्तीनां प्रवर्तक नतास्मि ते।
वरेण्य वरदानन्त अगतीनां गतिर्भव।
पुराणपुरुष प्राणमनोवृत्त्याद्यगोचर।
सर्वाध्यक्ष पराध्यक्ष त्वामहं शरणं गता। [80]
पाहि मां कृपया देव शरणागतवत्सल।
नीलोत्पलदलश्याम पद्मगर्भारुणेक्षण।
पीताम्बरपरीधान लसत्कौस्तुभभूषण।
त्वमादिरन्तो भूतानां त्वमेव च परायणम्।
परात्परतरं ज्योतिर्विश्वात्मा सर्वतोमुखः। [85]
त्वामेवाहुः परं बीजं निधानं सर्वसंपदाम्।
त्वया नाथेन देवेश सर्वापद्भ्यो भयं न हि।
दुःशासनादहं पूर्वं सभायां मोचिता यथा।
तथैव संकटादस्मान्मामुद्धर्तुमिहार्हसि।
एवं स्तुतस्तदा देवः कृष्णया भक्तवत्सलः। [90]
द्रौपद्याः संकटं ज्ञात्वा देवदेवो जगत्पतिः।
पार्श्वस्थां शयने त्यक्त्वा रुक्मिणीं केशवः प्रभुः।
तत्राजगाम त्वरितो ह्यचिन्त्यगतिरीश्वरः।
ततस्तं द्रौपदी दृष्ट्वा प्रणम्य परया मुदा।

---

*Adhy. no.:* Dn 260 ($Dn_2$ 261); $D_1$ 263. — (L. 59) $D_1$ महा- (for वने). — (L. 61) $Dc_1$ आत्रेयं सशिष्यं च (for अतिथिं स च राजा). — (L. 62) $Dc_1$ भ्रातृभिः परमद्युतिः (for the posterior half). — (L. 63) $Dc_1$ $D_2$ $G_3$ उपविश्य; $D_1$ प्रवेश्य च (for उपवेश्य). $D_2$ च कानने (for वरासने). — (L. 64) $Dc_1$ पूजयित्वाथ; $D_1$ पूजयामास. $Dc_1$ निमंत्रयत्; $D_1$ न्यवेदयत्. — After line 64, $Dc_1$ $Dn_2$ ins.:

दुर्वासा उवाच।
राजंस्तवाश्रमे भोक्तुं सत्वरं समुपागतः।
क्षुधा मां बाधतेऽत्यर्थं तस्मान्मां भोजयाधुना।
भोज्यैर्नानाविधैश्चान्नैर्व्यञ्जनैः परमाद्भुतैः।,

followed in $Dc_1$ by राजोवाच, in $Dn_2$ by युधिष्ठिर उ°. — (L. 65) $Dc_1$ स्नात्वा शीघ्रं समेहीति (for the posterior half). — (L. 66) $D_1$ जगामैवं. $Dn_3$ महानदीं (for सहानघः). $Dc_1$ जगाम सह शिष्यैश्च स्नातुं स मुनिपुंगवः. — (L. 67) $D_{1.2.6}$ °त्यचिंतयन्. — (L. 68) $Dc_1$ मुनिः शिष्यायुतेन च; $D_1$ मुनिः सद्यः समाहितः; $D_{2.6}$ $G_3$ मुनिः शिष्यैः समन्वितः (for the posterior half). — After line 68, $Dc_1$ $Dn_2$ ins.:

अथ युधिष्ठिरो राजा भ्रातृभिरन्वतप्यत।
भीम भीम महाबाहो काष्ठान्यानीय मां दह।
वैशंपायन उवाच।
भ्रातुर्वचनमाकर्ण्य हृदि शल्यमिवार्पितम्।
त्राहि त्राहीति गोविन्देत्युक्त्वा दारूणि चानयत्।

— (L. 69) $D_{2.6}$ $G_3$ चापि (for राजन्). $Dc_1$ द्रौपदी व्यसनं वीक्ष्य पांडवानां महात्मनां. — (L. 71) $Dn_2$ $D_1$ तदा (for यदा). — (L. 72) $Dc_1$ सस्मार मनसा कृष्णं कृपालुं दीनवत्सलं. — (L. 73) $D_1$ °नंदनंदन (for °नन्दनाव्यय). — (L. 74) $Dc_1$ प्रपन्नार्ति° (for प्रणतार्ति°). — (L. 75) $Dc_1$ विश्वहृत्प्रभुरीश्वरः (for the posterior half). — (L. 76) $Dc_1$ विश्वनाथ; $Dn_3$ विश्वपाल (for प्रजा°). — $D_2$ om. from परात्पर up to °परीधान (in line 83). — (L. 77) $Dc_1$ $D_1$ आकूतीनां च वृत्तीनां ($D_1$ वित्तानां) (for the prior half). — (L. 78) $D_6$ $G_3$ ह्यगतीनां (for अग°). Dc $D_6$ गतिप्रद (for गतिर्भव). — (L. 80) $Dc_1$ परानंद; $D_1$ सुराध्यक्ष. — (L. 83) $Dc_1$ चतुर्बाहो (for -परीधान). — (L. 84) $Dc_1$ °भूतो (for °रन्तो). — (L. 85) $Dn_3$ $D_{1.2}$ परं (for °तरं). $Dc_1$ $D_{2.6}$ विश्वतो° (for सर्वतो°). — (L. 87) $Dc_1$ त्वं नाथ कृपयेशान (for the prior half). — (L. 92) $Dc_1$ रुक्मिणीं (for पार्श्वस्थां), and सुप्तां केशिनिषूदनः (for the posterior half). — (L. 95) $D_{2.6}$ $G_3$ अवदद् (for अब्रवीद्). $Dc_1$ उवाचाश्रुमुखी कृष्णा कृष्णं कमललोचनं. — For line 96, $Dc_1$ subst.:

अब्रवीद्वासुदेवाय मुनेरागमनादिकम् । [95]
ततस्तामब्रवीत्कृष्णः क्षुधितोऽस्मि भृशातुरः ।
शीघ्रं भोजय मां कृष्णे पश्चात्सर्वं करिष्यसि ।
निशम्य तद्वचः कृष्णा लज्जिता वाक्यमब्रवीत् ।
स्थाल्यां भास्करदत्तायामन्नं मद्भोजनावधि ।
भुक्तवत्यस्म्यहं देव तस्मादन्नं न विद्यते । [100]
ततः प्रोवाच भगवान्कृष्णां कमललोचनः ।
कृष्णे न नर्मकालोऽयं क्षुच्छ्रमेणातुरे मयि ।
शीघ्रं गच्छ मम स्थालीमानयित्वा प्रदर्शय ।
इति निर्बन्धतः स्थालीमानाय्य स यदूद्वहः ।
स्थाल्याः कण्ठेऽथ संलग्नं शाकान्नं वीक्ष्य केशवः । [105]
उपयुज्याब्रवीदेनामनेन हरिरीश्वरः ।
विश्वात्मा प्रीयतां देवस्तुष्टश्चास्त्विति यज्ञभुक् ।
आकारय मुनीञ्शीघ्रं भोजनायेति चाब्रवीत् ।
ततो जगाम त्वरितः सहदेवो महायशाः ।
स्नातुं गतान्देवनद्यां दुर्वासःप्रभृतीन्मुनीन् । [110]
ते चावतीर्णाः सलिले कृतवन्तोऽघमर्षणम् ।
दृष्ट्वोद्गारान्सान्नरसांस्तृप्त्या परमया युताः ।
उत्तीर्य सलिलात्तस्माद्दृष्टवन्तः परस्परम् ।
दुर्वाससमभिप्रेक्ष्य सर्वे ते मुनयोऽब्रुवन् ।
राज्ञा हि कारयित्वान्नं वयं स्नातुं समागताः । [115]
आकण्ठतृप्ता विप्रर्षे किं स्विद्भुञ्जामहे वयम् ।
वृथा पाकः कृतोऽस्माभिस्तत्र किं करवामहे ।
दुर्वासा उवाच ।
वृथापाकेन राजर्षेरपराधः कृतो महान् ।
मास्मानधाक्षुर्दृष्ट्वैव पाण्डवाः क्रूरचक्षुषा ।
स्मृत्वानुभावं राजर्षेरम्बरीषस्य धीमतः । [120]
बिभेमि सुतरां विप्रा हरिपादाश्रयाज्जनात् ।
पाण्डवाश्च महात्मानः सर्वे धर्मपरायणाः ।
शूराश्च कृतविद्याश्च व्रतिनस्तपसि स्थिताः ।

---

कृष्ण कृष्णारविन्दाक्ष पुण्यश्रवणकीर्तन ।
संस्मृतो भगवानद्य तथा दृष्टिपथं गतः ।
श्रीकृष्ण उवाच ।
किमर्थं संस्मृतो देवि त्वयाहं चारुहासिनि ।
भैष्मी स्वरामन्ये सुप्तां (?) गतोऽस्मि गहनं वनम् ।
द्रौपद्युवाच ।
दुर्वासास्तपतां श्रेष्ठः शिष्यायुतसमन्वितः ।
याचयित्वा गतः स्नातुं राद्धमन्नबुभुक्षितः ।
किं कार्यं भगवन्नद्य ऋषिः परमकोपनः ।
आगमिष्यति सिद्धान्नं भोक्तुं शिष्यायुतेन च ।
श्रीकृष्ण उवाच ।
पांचालि श्रुणु मे वाक्यं क्षुधितोऽस्मि भृशं प्रिये ।

— (L. 97) D2. 6 G3 °दन्यत् (for °त्सर्वं). Dc1 प्रथमं भोजनं क्षिप्रं यद्यहं वल्लभस्तव. — After line 98, Dc1 ins.:

खेदखिन्ना च सुश्रोणी रुदन्ती कृष्णसंनिधौ ।
विभो प्राणपते विद्वञ्जानासि पुरुषोत्तम ।

— (L. 100) Dc1 देवेश (for [अ]हं देव). — After line 100, Dc1 ins.:

किं करोमि जगन्नाथ किमस्मादपरा विपत् ।

— (L. 101) D2 कृष्णः (for कृष्णां). Dc1 देवकीनंदनो हरिः (for the posterior half). — (L. 102) D1 कर्म° (for नर्म°). — (L. 103) Dc1 शीघ्रमानीयतां स्थाली दर्शयस्वेति भामिनि. — After line 103, Dc1 ins.:

नास्त्यन्नं देवकीसूनो भोज्यं मद्भोजनावधि ।

— (L. 104) Dc1 अति- (for इति), and यदूत्तमः (for °द्वहः). — (L. 105) Dc1 स्थाल्यां. Dc1 च; D1 सु- (for [ऽ]थ). Dc1 माधवः (for केशवः). — (L. 106) Dc1 Dn1 °युंज्य (for °युज्य). — For line 108, Dc1 subst.:

पाण्डवाः कृष्ण कृष्णेति ऊचुस्तं यदुनन्दनम् ।
किं भविष्यति ब्रह्मर्षेः कोपात्नो दारुणं तमे (?) ।
प्रहस्य परमानन्दः सहदेवमथाब्रवीत् ।
शीघ्रमानय तं विप्रं सशिष्यं भोजयेति च ।

— After 108, most modern (printed) ed. ins. a line:

सहदेवं महाबाहुः कृष्णः क्लेशविनाशनः ।,

which was not known even to Nilakaṇṭha and which appears to have been added to the epic corpus during the 18th or 19th century! — (L. 109) Dc1 D2. 6 G3 °मनाः (for °यशाः). — After line 109, those ed. likewise ins. a line *not* documented by our MSS.:

आकारितुं तु तान्सर्वान्भोजनार्थं नृपोत्तम ।

— (L. 111) Dc1 विमर्शनं (for ऽघमर्षणम्). — After line 111, Dc1 ins.:

राज्ञो युधिष्ठिरस्याद्य वृथा कोपो भविष्यति ।
के केचिद्धरितिकिं सुवचां निम्बुरसं परे ।
कुबेरसैन्धवं क्षारं प्रार्थयन्तः परस्परम् ।

— (L. 112) Dc1 D1 युतान् (for युताः). — (L. 113) Dn3 महामुनिं (for परस्परम्). — After line 113, Dc1 ins.:

सहदेवोऽब्रवीद्वाक्यं शीघ्रमागम्यतामिति ।
ऋषय ऊचुः ।
भवतामाश्रमे को वा परः पुंसामुपागतः ।
नानादेवो द्विजो वापि विना कृष्णं द्विजोत्तमः ।

— Dn3 om. lines 114–115. — (L. 114) Dn1. n3 ते सर्वे (by transp.). — (L. 118) Dc1 एनः संप्रति वर्तते (for the posterior half). — After line 118, Dc1 reads line 126. — (L. 123) D2. 6 च तपस्विनः (for तपसि

सदाचाररता नित्यं वासुदेवपरायणाः ।
कुद्धास्ते निर्दहेयुर्वै तूलराशिमिवानलः । [125]
तत एतानपृष्ट्वैव शिष्याः शीघ्रं पलायत ।
वैशंपायन उवाच ।
इत्युक्तास्ते द्विजाः सर्वे मुनिना गुरुणा तदा ।
पाण्डवेभ्यो भृशं भीता दुद्रुवुस्ते दिशो दश ।
सहदेवो देवनद्यामपश्यन्मुनिसत्तमान् ।
तीर्थेष्वितस्ततस्तस्या विचचार गवेषयन् । [130]
तत्रस्थेभ्यस्तापसेभ्यः श्रुत्वा तांश्चैव विद्रुतान् ।
युधिष्ठिरमथाभ्येत्य तं वृत्तान्तं न्यवेदयत् ।
ततस्ते पाण्डवाः सर्वे प्रत्यागमनकाङ्क्षिणः ।
प्रतीक्षन्तः कियत्कालं जितात्मानोऽवतस्थिरे ।
निशीथेऽभ्येत्य चाकस्मादस्मान्स छलयिष्यति । [135]
कथं च निस्तरेमास्मात्कृच्छ्राद्दैवोपसादितात् ।
इति चिन्तापरान्दृष्ट्वा निःश्वसन्तो मुहुर्मुहुः ।
उवाच वचनं श्रीमान्कृष्णः प्रत्यक्षतां गतः ।
श्रीकृष्ण उवाच ।
भवतामापदं ज्ञात्वा ऋषेः परमकोपनात् ।
द्रौपद्या चिन्तितः पार्था अहं सत्वरमागतः । [140]
न भयं विद्यते तस्मादृषेर्दुर्वाससोऽल्पकम् ।
तेजसा भवतां भीतः पूर्वमेव पलायितः ।
धर्मनित्यास्तु ये केचिन्न ते सीदन्ति कर्हिचित् ।
आपृच्छे वो गमिष्यामि नियतं भद्रमस्तु वः ।
वैशंपायन उवाच ।
श्रुत्वेरितं केशवस्य बभूवुः स्वस्थमानसाः । [145]
द्रौपद्या सहिताः पार्थास्तमूचुर्विगतज्वराः ।
त्वया नाथेन गोविन्द दुस्तरामापदं विभो ।
तीर्णाः प्लवमिवासाद्य मज्जमाना महार्णवे ।
स्वस्ति साधय भद्रं ते इत्याज्ञातो ययौ पुरीम् ।
पाण्डवाश्च महाभाग द्रौपद्या सहिताः प्रभो । [150]
ऊषुः प्रहृष्टमनसो विहरन्तो वनाद्वनम् ।
इति तेऽभिहितं राजन्यत्पृष्टोऽहमिह त्वया ।
एवंविधान्यलीकानि धार्तराष्ट्रैर्दुरात्मभिः ।
पाण्डवेषु वनस्थेषु प्रयुक्तानि वृथाभवन् ।
Colophon.

## 26

After 3. 255. 31, $T_1$ ins.:

एवं तीक्ष्णशरज्वालैर्गाण्डीवाग्निप्रचोदितैः ।
सैनेन्धनं ददाहाशु सरोषः पार्थयाजकः ।
चक्राणां पतितानां च युगानां च महीपते ।
तूणीराणां पताकानां ध्वजानां च रथैः सह ।
शराणामनुकर्षाणां त्रिवेणूनां तथैव च । [5]
अक्षाणामथ योक्त्राणां प्रतोदानां च राशयः ।
शिरसां पतितानां च कुण्डलोष्णीषधारिणाम् ।
भुजानां मकुटानां च हाराणामङ्गदैः सह ।
छत्राणां व्यजनानां च चर्मणां चैव राशयः ।
छिन्नानां कार्मुकाणां च पट्टसानां तथैव च । [10]
शक्तीनामथ खड्गानां दण्डानामथ तोमरैः ।
राशयस्तत्र दृश्यन्ते तत्र तत्र विशां पते ।
पतितैश्चैव मातङ्गैः सयोधैः पर्वतोपमैः ।
हयैर्निपतितैः सार्धं सादिभिः सायुधैस्तदा ।
विप्रविष्टै रथैश्चैव निहतैश्च पदातिभिः । [15]
अगम्यरूपा पृथिवी मांसशोणितकर्दमा ।

## 27

After 3. 256. 28[d], B D (except $D_1$) $G_3$ ins.:

मया दत्तं पाशुपतं दिव्यमप्रतिमं शरम् ।
अवाप लोकपालेभ्यो वज्रादीन्स महाशरान् ।
देवदेवो ह्यनन्तात्मा विष्णुः सुरगुरुः प्रभुः ।

---

स्थिताः). — (L. 127) $Dc_1$ गुरुणा शममीप्सता (for the posterior half). — (L. 130) $Dc_1$ ह्यवेक्षयन् (for गवेषयन्). — (L. 131) $Dc_1$ तत्रत्यतापसेभ्यश्च श्रुत्वा तान्विद्रुतान्द्विजान्. — (L. 134) $Dc_1$ यततः कुलनंदनाः; $D_2$ यतमानावतस्थिरे (for the posterior half). — (L. 135) $Dc_1$ निशीथे समभ्येत्येव कदास्मांश्छलयिष्यति. — (L. 140) $Dc_1$ सत्वरं समुपागतः (for the posterior half). — (L. 141) $D_1$ ह्यलं (for ऽल्पकम्). — (L. 145) $Dc_1$ भगवतः (for केशवस्य), and कृष्णस्यामिततेजसः (for the posterior half). — After line 146, $Dc_1$ ins.:

बभूवुः पाण्डुपुत्रास्ते हृष्टपुष्टा यथामराः ।
ऊचुस्ते परमानन्दं वाचा गद्गदयाक्षरम् ।

— (L. 149) $Dc_1$ देवदेव जगत्पते (for the posterior half). — After line 149, $Dc_1$ ins.:

गोविन्द परमानन्द पाहि नो भवसागरात् ।
विपत्सु नः सदा पासि संपत्सु नस्तथा तथा ।
श्रुतवाक्यस्तदा कृष्णो ययौ द्वारवतीं पुरीम् ।

— (L. 150) $Dc_1$ °भागा (for °भाग), and द्रौपदीसहिता नृप (for the posterior half). — (L. 153) $Dc_1$ $D_{1.2.6}$ अनेकानि (for अलीकानि). — Colophon. *Adhy. no.:* Dn 261 ($Dn_3$ 262); $D_1$ 264.

## 27

(L. 2) $B_1$ Dc $D_2$ अवध्यं (for अवाप). — (L. 3) $B_1$

प्रधानपुरुषोऽव्यक्तो विश्वात्मा विश्वमूर्तिमान् ।
युगान्तकाले संप्राप्ते कालाग्निर्दहते जगत् । [5]
सपर्वतार्णवद्वीपं सशैलवनकाननम् ।
निर्दहन्नागलोकांश्च पातालतलचारिणः ।
अथान्तरिक्षे सुमहन्नानावर्णाः पयोधराः ।
घोरस्वरा विनदिनस्तडिन्मालावलम्बिनः ।
समुत्तिष्ठन्दिशः सर्वा विवर्षन्तः समन्ततः । [10]
ततोऽग्निं नाशयामासुः संवर्ताग्निनियामकाः ।
अक्षमात्रैश्च धाराभिस्तिष्ठन्त्यापूर्य सर्वशः ।
एकार्णवे तदा तस्मिन्नुपशान्तचराचरे ।
नष्टचन्द्रार्कपवने ग्रहनक्षत्रवर्जिते ।
चतुर्युगसहस्रान्ते सलिलेनाप्लुता मही । [15]
ततो नारायणाख्यस्तु सहस्राक्षः सहस्रपात् ।
सहस्रशीर्षा पुरुषः स्वप्तुकामस्त्वतीन्द्रियः ।
फटासहस्रविकटं शेषं पर्यङ्कभोगिनम् ।
सहस्रमिव तिग्मांशुसंघातममितद्युतिम् ।
कुन्देन्दुहारगोक्षीरमृणालकुमुदप्रभम् । [20]
तत्रासौ भगवान्देवः स्वपञ्जलनिधौ तदा ।
नैशेन तमसा व्याप्तां स्वां रात्रिं कुरुते विभुः ।
सत्त्वोद्रेकात्प्रबुद्धस्तु शून्यं लोकमपश्यत ।
इमं चोदाहरन्त्यत्र श्लोकं नारायणं प्रति ।
आपो नारास्तत्तनव इत्यपां नाम शुश्रुम । [25]
अयनं तेन चैवास्ते तेन नारायणः स्मृतः ।
प्रध्यानसमकालं तु प्रजाहेतोः सनातनः ।
ध्यातमात्रे तु भगवन्नाभ्यां पद्मः समुत्थितः ।
ततश्चतुर्मुखो ब्रह्मा नाभिपद्माद्विनिःसृतः ।
तत्रोपविष्टः सहसा पद्मे लोकपितामहः । [30]
शून्यं दृष्ट्वा जगत्कृत्स्नं मानसानात्मनः समान् ।
ततो मरीचिप्रमुखान्महर्षीनसृजन्नव ।
तेऽसृजन्सर्वभूतानि त्रसानि स्थावराणि च ।
यक्षराक्षसभूतानि पिशाचोरगमानुषान् ।
सृजते ब्रह्ममूर्तिस्तु रक्षते पौरुषी तनुः । [35]
रौद्रीभावेन शमयेत्तिस्रोऽवस्थाः प्रजापतेः ।
न श्रुतं ते सिन्धुपते विष्णोरद्भुतकर्मणः ।
कथ्यमानानि मुनिभिर्ब्राह्मणैर्वेदपारगैः ।
जलेन समनुप्राप्ते सर्वतः पृथिवीतले ।
तदा चैकार्णवे तस्मिन्नेकाकाशे प्रभुश्चरन् । [40]
निशायामिव खद्योतः प्रावृट्काले समन्ततः ।
प्रतिष्ठानाय पृथिवीं मार्गमाणस्तदाभवत् ।
जले निमग्नां गां दृष्ट्वा चोद्धर्तुं मनसेच्छति ।
किं नु रूपमहं कृत्वा सलिलादुद्धरे महीम् ।
एवं संचिन्त्य मनसा दृष्ट्वा दिव्येन चक्षुषा । [45]
जलक्रीडाभिरुचितं वाराहं रूपमस्मरत् ।
कृत्वा वाराहवपुषं वाङ्मयं वेदसंमितम् ।
दशयोजनविस्तीर्णमायतं शतयोजनम् ।
महापर्वतवर्ष्माभं तीक्ष्णदंष्ट्रं प्रदीप्तिमत् ।
महामेघौघनिर्घोषं नीलजीमूतसंनिभम् । [50]
भूत्वा यज्ञवराहो वै अपः संप्राविशत्प्रभुः ।

Dc $D_2$ सुरासुर° (for विष्णुः सुर°). — (L. 5) Dc $D_2$ कश्चित् (for जगत्). — (L. 6) $B_1$ सपर्वतान्वनद्वीपान् (for the prior half). — (L. 9) $B_1$ °स्वनं; $B_3$ Dc °स्वरं; $D_3$ °स्वना (for °स्वरा). $B_1$ Dc $D_2$ विनर्दंतस् (for विनादिनस्). — (L. 10) $Dc_2$ $D_2$ प्रवर्षंत:; $D_4$ विवर्षंत. — (L. 12) Dc $D_2$ °मात्राभिर् (for °मात्रैश्च). $Dc_2$ तिष्ठंते सूर्यवर्चसः (for the posterior half). — (L. 13) $B_{1-3}$ $Dc_2$ $D_{2.5}$ उपशांते (for °शान्त-). — (L. 18) $Dc_2$ Dn $D_{3.5.6}$ फणा- (for फटा-). $B_2$ Dc $D_2$ -विकचं (for -विकटं). $B_1$ स्फुटाविकटरूपं च. $B_{2-4}$ $Dc_2$ $D_2$ $G_3$ शेष- (for शेषं). $B_2$ °शायिनं; $Dn_2$ °शोभिनं (for °भोगिनम्). Some printed ed. erroneously read, °भाजनम् for °भोगिनम्. — (L. 19) $Dc_2$ $D_2$ तीक्ष्णांशुं; $D_5$ कंबूनां (for तिग्मांशु-). $D_4$ $G_3$ अतिविद्युतिं (for अमितद्युतिम्). — (L. 22) $B_1$ द्यां (for स्वां), and प्रभुः (for विभुः). — (L. 25) Dc $Dn_1$. $n_2$ $D_{2-4}$ $G_3$ तु तनव; $D_5$ इति प्रोक्ता (for तत्तनव). Dc $D_2$ शुश्रुमः. $D_5$ आपो वै नरसूनवः (for the posterior half). — (L. 26) $B_1$ अप्सु यत्तेन चैवास्ते; $D_5$ अयनं तस्य ताः पूर्वं (for the prior half). — (L. 28) A few MSS. पद्मं समुत्थितं, but Nil. as above. — (L. 29) $B_2$ समुत्थितः (for विनिःसृतः). — (L. 30) $B_1$ ततोपविष्टः; $B_{2.4}$ ततः प्रविष्टः. — (L. 31) $Dc_2$ $D_2$ सर्वं (for कृत्स्नं). Dc $D_2$ सुतान् (for समान्). $D_5$ असृजन्मानसान्सुतान् (for the posterior half). — (L. 33) $B_{1.3}$ $Dn_2$ $D_{4.6}$ $G_3$ ते दृष्ट्वा; $D_5$ तत्सृत्वा (for तेऽसृजन्). Dc $D_2$ om. the posterior half of line 33 and the prior half of line 34. $B_1$ द्रुमाणि; $D_5$ चराणि (for त्रसानि). — (L. 34) $B_3$ $Dn_2$ °राक्षसान् (for °मानुषान्). — (L. 35) $B_4$ $Dc_1$ $Dn_1$ $D_{2.5}$ सृज्यते. $B_3$ $Dn_2$ $D_5$ पौरुषीं तनुं; Dc $D_2$ पौरुषं तनुः — (L. 39) Dc $D_2$ $G_3$ समभि($G_3$ °नु)व्याप्ते. $D_5$ सलिलेन यथावृत्तं शमयत्पृथिवीतले. — (L. 40) Dc $D_2$ एकाकारे तदा स्पृशन्. — (L. 42) $D_5$ °चरन् (for °भवत्). — (L. 43) $B_1$ दृष्ट्वा तां (for गां दृष्ट्वा). — (L. 45) $Dc_2$ $D_2$ [आ]दित्येन (for दिव्येन). — (L. 46) $B_4$ Dc $D_2$ °रुचिरं (for °रुचितं). $B_1$ Dc $D_{2.5}$ वपुर् (for रूपम्). — (L. 47) Dc $D_2$ वराहस्य वपुर् (for वाराहवपुषं). Dc $D_{2.5}$ ब्रह्म° (for वेद°). — (L. 49) $B_{1.4}$ Dc $D_2$ तीक्ष्णदंष्ट्रा($B_{1.4}$ °ष्ट्रो)प्रदीधिति. — (L. 51) Dc $D_{2.4.6}$ संप्रविशद्. — (L. 52) $D_5$ दंष्ट्रैकयोद्धृत्य ततः (for the prior

दंष्ट्रैणैकेन चोद्धृत्य स्वे स्थाने न्यविशन्महीम् ।
पुनरेव महाबाहुरपूर्वां तनुमाश्रितः ।
नरस्य कृत्वार्धतनुं सिंहस्यार्धतनुं प्रभुः ।
दैत्येन्द्रस्य सभां गत्वा पाणिं संस्पृश्य पाणिना । [55]
दैत्यानामादिपुरुषः सुरारिर्दितिनन्दनः ।
दृष्ट्वा चापूर्ववपुषं क्रोधात्संरक्तलोचनः ।
शूलोद्यतकरः स्रग्वी हिरण्यकशिपुस्तदा ।
मेघस्तनितनिर्घोषो नीलाभ्रचयसंनिभः ।
देवारिर्दितिजो वीरो नृसिंहं समुपाद्रवत् । [60]
समुपेत्य ततस्तीक्ष्णैर्मृगेन्द्रेण बलीयसा ।
नारसिंहेन वपुषा दारितः करजैर्भृशम् ।
एवं निहत्य भगवान्दैत्येन्द्रं रिपुघातिनम् ।
भूयोऽन्यः पुण्डरीकाक्षः प्रभुर्लोकहिताय च ।
कश्यपस्यात्मजः श्रीमानदित्या गर्भधारितः । [65]
पूर्णे वर्षसहस्रे तु प्रसूता गर्भमुत्तमम् ।
दुर्दिनाम्भोदसदृशो दीप्ताक्षो वामनाकृतिः ।
दण्डी कमण्डलुधरः श्रीवत्सोरसिभूषितः ।
जटी यज्ञोपवीती च भगवान्बालरूपधृक् ।
यज्ञवाटं गतः श्रीमान्दानवेन्द्रस्य वै तदा । [70]
बृहस्पतिसहायोऽसौ प्रविष्टो बलिनो मखे ।
तं दृष्ट्वा वामनतनुं प्रहृष्टो बलिरब्रवीत् ।
प्रीतोऽस्मि दर्शने विप्र ब्रूहि त्वं किं ददानि ते ।
एवमुक्तस्तु बलिना वामनः प्रत्युवाच ह ।
स्वस्तीत्युक्त्वा बलिं देवः स्मयमानोऽभ्यभाषत । [75]
मेदिनीं दानवपते देहि मे विक्रमत्रयम् ।
बलिर्ददौ प्रसन्नात्मा विप्रायामिततेजसे ।
ततो दिव्याद्भुततमं रूपं विक्रमतो हरेः ।
विक्रमैस्त्रिभिरक्षोभ्यो जहाराशु स मेदिनीम् ।
ददौ शक्राय च महीं विष्णुर्देवः सनातनः । [80]
एष ते वामनो नाम प्रादुर्भावः प्रकीर्तितः ।
तेन देवाः प्रादुरासन्वैष्णवं चोच्यते जगत् ।
असतां निग्रहार्थाय धर्मसंरक्षणाय च ।
अवतीर्णो मनुष्याणामजायत यदुक्षये ।
स एवं भगवान्विष्णुः कृष्णेति परिकीर्त्यते । [85]
अनाद्यन्तमजं देवं प्रभुं लोकनमस्कृतम् ।
यं देवं विदुषो गान्ति तस्य कर्माणि सैन्धव ।

## 28

After 3. 275. 16, Dc $D_2$ ins. :

अमृष्यमाणा सा सीता वचनं राघवोदितम् ।
लक्ष्मणं प्राह मे शीघ्रं प्रज्वालय हुताशनम् ।
विश्वासार्थं हि रामस्य लोकानां प्रत्ययाय च ।
राघवस्य मतं ज्ञात्वा लक्ष्मणोऽपि तदैव हि ।
महाकाष्ठचयं कृत्वा ज्वालयित्वा हुताशनम् । [5]
रामपार्श्वमुपागम्य तस्थौ तूष्णीमरिंदमः ।
ततः सीता परिक्रम्य राघवं भक्तिसंयुता ।
पश्यतां सर्वलोकानां देवराक्षसयोषिताम् ।
प्रणम्य दैवतेभ्यश्च ब्राह्मणेभ्यश्च मैथिली ।
बद्धाञ्जलिपुटा चेदमुवाचाग्निसमीपगा । [10]
यथा मे हृदयं नित्यं नापसर्पति राघवात् ।
तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ।
एवमुक्त्वा तु सा सीता परिक्रम्य हुताशनम् ।
विवेश ज्वलनं दीप्तं निर्भयेन हृदा सती ।

Colophon.

## 29

After 3.276. 12, $K_{1.2}$ ins. the *phalaśruti* :

वैशंपायन उवाच ।

ये चेदं कथयिष्यन्ति रामस्य चरितं महत् ।
श्रोष्यन्ति चाप्यभीक्ष्णं ये नालक्ष्मीस्तान्भविष्यति ।
अर्घास्तेभ्यो भविष्यन्ति धनता च भविष्यति ।
इतिहासमिमं श्रुत्वा पुराणं शश्वदुत्तमम् ।
पुत्रान्पौत्रान्पशूंश्चैव वेत्स्यन्ते नृषु चाग्र्यताम् । [5]
अरोगाः प्रतिभांश्चैव भविष्यन्ति न संशयः ।
इदमाख्यानकं रम्यं ये स्मरन्ति नरोत्तमाः ।
पुत्रपौत्रैश्च नन्दन्ति लभन्ते विष्णुवल्लभाम् ।

---

half). A few MSS. स्व- (for स्वे). $B_{2.4}$ $Dc_2$ $D_{2.5}$ विन्यसे- ($D_5$ °स)न् (for न्यविशन्). — (L. 53) $B_3$ $Dc_2$ $D_2$ तनुमास्थितः. — (L. 54) $B_3$ नरस्यार्धतनुं कृत्वा. $B_{1.4}$ मृगेंद्रार्धतनुं प्रभुः. — (L. 57) B $Dn_1$ $D_{2.4}$ °पुरुषं (for °वपुषं). Dc $D_2$ क्रोध- (for क्रोधात्). — (L. 59) $Dc_2$ $D_5$ °संनिभं; $D_2$ °संमितः. — (L. 60) $B_1$ घोरो (for वीरो). — (L. 61) $B_2$ $Dc_2$ $D_2$ समुत्पत्य. — (L. 64) $D_5$ सर्वलोकपितामहः (for the posterior half). — (L. 65) $B_1$ दित्या गर्भेण धारितः. — Dc om. line 67. — (L. 69) $Dc_1$ $D_4$ °धृत् (for °धृक्). — (L. 70) $D_5$ तत्र (for श्रीमान्), and भगवान्वामनाकृतिः (for the posterior half). — (L. 72) $B_1$ Dc $D_{2.5}$ दृष्ट्वा तं (by transp.). — (L. 73) Dc $D_2$ ब्रूहि किं ते ददानि वै. — (L. 74) $B_1$ वामनः प्रत्यभाषत. — (L. 79) $B_1$ Dc $D_2$ °रक्षोभ्यं. — (L. 82) $D_{3.6}$ $G_3$ येन (for तेन). — (L. 83) Dc $D_2$ रक्षणार्थाय (for निग्रहा°). — (L. 84) $B_1$ $Dc_2$ $D_2$ मानुषाणाम्. $B_1$ यदोर्गृहे (for यदुक्षये). — (L. 85) $B_{1.2}$ $Dn_2$ स एव; $B_3$ एवं स; $Dc_2$ $D_{2.3}$ स एष. $B_2$ परिगीयते. — (L. 86) $B_2$ विष्णुं (for देवं). — (L. 87) $B_4$ यदेवं; Dc $D_{2-4.6}$ $G_3$ यं वेद- (for यं देवं).

शृण्वन्तीदं पुण्यशीलाः श्रावयेच्चेदमुत्तमम् ।
नरः फलमवाप्नोति राजसूयाश्वमेधयोः । [10]
काञ्चनेन विमानेन स्वर्गं याति नरोत्तमः ।
पुनर्लक्ष्मीरुपयुतो जायते पृथिवीतले ।
श्रुत्वा चेदमुपाख्यानं श्राव्यमन्यन्न रोचयेत् ।
पुंस्कोकिलरुतं श्रुत्वा क्रौञ्चीध्वाङ्क्षस्य वागिव ।
[Line 13–14=(var.) 1. 2. 236.]

## 30

After 3. 295. 7ab, D1 (irrelevantly) ins.:

आजगाम वने राजन्दुर्वासाः कोपनो द्विजः ।
दुर्योधनप्रेरितश्चा[प्य]पराह्णे बुभुक्षितः ।
द्रौपद्या सहिते भुक्ते धर्मराजे युधिष्ठिरे ।
तदा चिन्तापरीतात्मा धर्मसूनुर्जनार्दनम् ।
चिन्तयामास भगवानाजगाम त्वरान्वितः । [5]
गते दुर्वाससि तदा गङ्गायां स्नपनाय च ।
शाकपत्रं तदा राजन्बुभुजे मधुसूदनः ।
तृप्तां त्रिलोकीमित्युवाच कारुण्याद्भक्तवत्सलः ।
दुर्वासास्तुष्टिमापन्नो हृष्टस्तस्मै शिवं ददौ ।
मार्कण्डेयाश्रमासीनं धर्मराजं युधिष्ठिरम् । [10]

## 31

After 3, 297. 3ab, B Dc Dn D2. 4. 6 G3 ins:

तान्दृष्ट्वा पतितान्भ्रातॄन्सर्वांश्चिन्तासमन्वितः ।
धर्मपुत्रो महाबाहुर्विललाप सुविस्तरम् ।
ननु त्वया महाबाहो प्रतिज्ञातं वृकोदर ।
सुयोधनस्य भेत्स्यामि गदया सक्थिनी रणे ।
व्यर्थं तदद्य मे सर्वं त्वयि वीरे निपातिते । [5]
महात्मनि महाबाहो कुरूणां कीर्तिवर्धने ।
मनुष्यसंभवा वाचो विधर्मिण्यः प्रतिश्रुताः ।
भवतां दिव्यवाचस्तु ता भवन्तु कथं मृषा ।
देवाश्चापि यदावोचन्सूतके त्वां धनंजय ।
सहस्राक्षादनवरः कुन्ति पुत्रस्तवेति वै । [10]
उत्तरे पारियात्रे च जगुर्भूतानि सर्वशः ।
विप्रनष्टां श्रियं चैषामाहर्ता पुनरञ्जसा ।
नास्य जेता रणे कश्चिदजेता नैष कस्यचित् ।
सोऽयं मृत्युवशं यातः कथं जिष्णुर्महाबलः ।
अयं ममाशां संहत्य शेते भूमौ धनंजयः । [15]
आश्रित्य यं वयं नाथं दुःखान्येतानि सेहिम ।
रणेऽप्रमत्तौ वीरौ च सदा शत्रुनिबर्हणौ ।
कथं रिपुवशं यातौ कुन्तीपुत्रौ महाबलौ ।
यौ सर्वास्त्राप्रतिहतौ भीमसेनधनंजयौ ।
अश्मसारमयं नूनं हृदयं मम दुर्हृदः । [20]
यमौ यदेतौ दृष्ट्वाद्य पतितौ नावदीर्यते ।
शास्त्रज्ञा देशकालज्ञास्तपोयुक्ताः क्रियान्विताः ।
अकृत्वा सदृशं कर्म किं शेध्वं पुरुषर्षभाः ।
अविक्षतशरीराश्चाप्यप्रमृष्टशरासनाः ।
असंज्ञा भुवि संगम्य किं शेध्वमपराजिताः । [25]
सानूनिवाद्रेः संसुप्तान्दृष्ट्वा भ्रातॄन्महामतिः ।
सुखं प्रसुप्तान्प्रस्विन्नः खिन्नः कष्टां दशां गतः ।
एवमेवेदमित्युक्त्वा धर्मात्मा स नरेश्वरः ।
शोकसागरमध्यस्थो दध्यौ कारणमाकुलः ।
इतिकर्तव्यतां चेति देशकालविभागवित् । [30]
नाभिपेदे महाबाहुश्चिन्तयानो महामतिः ।
अथ संस्तभ्य धर्मात्मा तदात्मानं तपःसुतः ।
एवं विलप्य बहुधा धर्मपुत्रो युधिष्ठिरः ।

---

## 31

(L. 1) Dc °परिप्लुतः (for °समन्वितः). — (L. 5) B2 त्वं मन्यसे (for तदद्य मे). B3. 4 Dc D2 भीम; Dn G3 वीर (for वीरे). — (L. 6) Dn2. n3 D4 G3 महाबाहौ. Dc D2 कीर्तिवर्धन. — (L. 8) B4 Dc D2 भवंति (B4 °तु) दिव्या वाचस्तु. B3 Dc Dn1 D2. 4. 6 G3 भवंति (for भवन्तु). — (L. 9) Dn धनंजयं! — (L. 10) B3 तवोदये (for तवेति वै). B4 च; Dc1 D2 हि; Dc2 ह (for वै). — (L. 11) Dc2 D2 मंदरे (for उत्तरे). B3 भागशः (for सर्वशः). — (L. 12) B4 स्वेषाम्; Dc D2 तेषाम् (for चैषाम्). B4 Dc D2 °रोजसा (for °रञ्जसा). — (L. 13) B3 अश्रुता; Dc1 D2 अजिता (for अजेता). B2. 3 Dc2 नैव (for नैष). — (L. 15) B3 Dc D2 संकल्प (for संहत्य). B2 अयमसान्समाहत्य. — (L. 16) B3. 4 Dc2 D2 [इ]मानि (for [ए]तानि). — (L. 17) B3. 4 प्रगल्भौ (for ऽप्रमत्तौ). Dc D2 तौ वीरौ (for वीरौ च). — (L. 18) B1. 4 D2 शत्रु°; Dc1 चानु° (for रिपु°). B2 माद्री° (for कुन्ती°). — (L. 20) B3. 4 Dc D2 मेतिदुर्भिदं (for मम दुर्हृदः). — (L. 21) D6 G3 यत् (for [अ]द्य). — (L. 22) B4 Dc D2 तेजो° (for तपो°). — (L. 23) B2 [अ]सुकरं (for सदृशं). — (L. 24) B1. 3. 4 च अप्रमृष्ट-; B2 चाप्रमृष्ट च; Dc D2 चाप्यपकृष्ट- (for चाप्यप्रमृष्ट-). — (L. 25) B3 अकृत्वा (for असंज्ञा). B3. 4 Dc D2 संज्ञया गम्याः (for भुवि संगम्य). — (L. 27) Dc Dn3 D2 सुखप्रसुप्तान्. — (L. 30) B3. 4 Dc D2 चैव (for चेति), and कालदेश° (by transp.). — (L. 31) B3. 4 Dc D2 महाबुद्धिश्[ (for °बाहुश्). — (L. 32) B3 तपःकृतः; B4 तपोयुतः; Dc2 तपःप्लुतः (for तपःसुतः). — (L. 33) B2 om. 33. Dc D2 बहुशो (for °धा).

## 32

After 3. 297. 61, Dn D6 G3 ins.:

यक्ष उवाच।
तपः किंलक्षणं प्रोक्तं को दमश्च प्रकीर्तितः।
क्षमा च का परा प्रोक्ता का च ह्रीः परिकीर्तिता।
युधिष्ठिर उवाच।
तपः स्वधर्मवर्तित्वं मनसो दमनं दमः।
क्षमा द्वंद्वसहिष्णुत्वं ह्रीरकार्यनिवर्तनम्।
यक्ष उवाच।
किं ज्ञानं प्रोच्यते राजन्कः शमश्च प्रकीर्तितः। [5]
दया च का परा प्रोक्ता किं चार्जवमुदाहृतम्।
युधिष्ठिर उवाच।
ज्ञानं तत्त्वार्थसंबोधः शमश्चित्तप्रशान्तता।
दया सर्वसुखैषित्वमार्जवं समचित्तता।
यक्ष उवाच।
कः शत्रुर्दुर्जयः पुंसां कश्च व्याधिरनन्तकः।
कीदृशश्च स्मृतः साधुरसाधुः कीदृशः स्मृतः। [10]
युधिष्ठिर उवाच।
क्रोधः सुदुर्जयः शत्रुर्लोभो व्याधिरनन्तकः।
सर्वभूतहितः साधुरसाधुर्निर्दयः स्मृतः।
यक्ष उवाच।
को मोहः प्रोच्यते राजन्कश्च मानः प्रकीर्तितः।
किमालस्यं च विज्ञेयं कश्च शोकः प्रकीर्तितः।
युधिष्ठिर उवाच।
मोहो हि धर्ममूढत्वं मानस्त्वात्माभिमानिता। [15]
धर्मनिष्क्रियतालस्यं शोकस्त्वज्ञानमुच्यते।
यक्ष उवाच।
किं स्थैर्यमृषिभिः प्रोक्तं किं च धैर्यमुदाहृतम्।
स्नानं च किं परं प्रोक्तं दानं च किमिहोच्यते।
युधिष्ठिर उवाच।
स्वधर्मे स्थिरता स्थैर्यं धैर्यमिन्द्रियनिग्रहः।
स्नानं मनोमलत्यागो दानं वै भूतरक्षणम्। [20]
यक्ष उवाच।
कः पण्डितः पुमाञ्ज्ञेयो नास्तिकः कश्च उच्यते।
को मूर्खः कश्च कामः स्यात्को मत्सर इति स्मृतः।
युधिष्ठिर उवाच।
धर्मज्ञः पण्डितो ज्ञेयो नास्तिको मूर्ख उच्यते।
कामः संसारहेतुश्च हृत्तापो मत्सरः स्मृतः।
यक्ष उवाच।
कोऽहंकार इति प्रोक्तः कश्च दम्भः प्रकीर्तितः। [25]
किं तद्दैवं परं प्रोक्तं किं तत्पैशुन्यमुच्यते।
युधिष्ठिर उवाच।
महाज्ञानमहंकारो दम्भो धर्मध्वजोच्छ्रयः।
दैवं दानफलं प्रोक्तं पैशुन्यं परदूषणम्।
यक्ष उवाच।
धर्मश्चार्थश्च कामश्च परस्परविरोधिनः।
एषां नित्यविरुद्धानां कथमेकत्र संगमः। [30]
युधिष्ठिर उवाच।
यदा धर्मश्च भार्या च परस्परवशानुगौ।
तदा धर्मार्थकामानां त्रयाणामपि संगमः।
यक्ष उवाच।
अक्षयो नरकः केन प्राप्यते भरतर्षभ।
एतन्मे पृच्छतः प्रश्नं तच्छीघ्रं वक्तुमर्हसि।
युधिष्ठिर उवाच।
ब्राह्मणं स्वयमाहूय याचमानमकिंचनम्। [35]
पश्चान्नास्तीति यो ब्रूयात्सोऽक्षयं नरकं व्रजेत्।
वेदेषु धर्मशास्त्रेषु मिथ्या यो वै द्विजातिषु।
देवेषु पितृधर्मेषु सोऽक्षयं नरकं व्रजेत्।
विद्यमाने धने लोभाद्दानभोगविवर्जितः।
पश्चान्नास्तीति यो ब्रूयात्सोऽक्षयं नरकं व्रजेत्। [40]
यक्ष उवाच।
राजन्कुलेन वृत्तेन स्वाध्यायेन श्रुतेन वा।
ब्राह्मण्यं केन भवति प्रब्रूह्येतत्सुनिश्चितम्।
युधिष्ठिर उवाच।
शृणु यक्ष कुलं तात न स्वाध्यायो न च श्रुतम्।
कारणं हि द्विजत्वे च वृत्तमेव न संशयः।
वृत्तं यत्नेन संरक्ष्यं ब्राह्मणेन विशेषतः। [45]
अक्षीणवृत्तो न क्षीणो वृत्ततस्तु हतो हतः।
पठकाः पाठकाश्चैव ये चान्ये शास्त्रचिन्तकाः।
सर्वे व्यसनिनो मूर्खा यः क्रियावान्स पण्डितः।
चतुर्वेदोऽपि दुर्वृत्तः स शूद्रादतिरिच्यते।
योऽग्निहोत्रपरो दान्तः स ब्राह्मण इति स्मृतः। [50]
यक्ष उवाच।
प्रियवचनवादी किं लभते
विमृशितकार्यकरः किं लभते।
बहुमित्रकरः किं लभते
धर्मे रतः किं लभते कथय।

---

32

(L. 27) Dn3 (by corr.) यदज्ञानम् (for महा°). Dn3 D6 धर्मो (for धर्म-). — (L. 33) Dn अक्षय्यो. — (L. 36) Dn2. n3 सोक्षय्यं. — (L. 38 and 40) Dn2 सोक्षय्यं. — (L. 52) Dn3 °करोधिकं (for °करः).

युधिष्ठिर उवाच।

प्रियवचनवादी प्रियो भवति [55]

विमृशितकार्यकरोऽधिकं जयति।

बहुमित्रकरः सुखं वसते

यश्च धर्मरतः स गतिं लभते।

Dn alone cont. (!):

यक्ष उवाच।

को मोदते किमाश्चर्यं कः पन्थाः का च वार्तिका।

वद मे चतुरः प्रश्नान्मृता जीवन्तु बान्धवाः। [60]

युधिष्ठिर उवाच।

पञ्चमेऽहनि षष्ठे वा शाकं पचति स्वे गृहे।

अनृणी चाप्रवासी च स वारिचर मोदते।

अहन्यहनि भूतानि गच्छन्तीह यमालयम्।

शेषाः स्थावरमिच्छन्ति किमाश्चर्यमतः परम्।

तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना [65]

नैको ऋषिर्यस्य मतं प्रमाणम्।

धर्मस्य तत्त्वं निहितं गुहायां

महाजनो येन गतः स पन्थाः।

अस्मिन्महामोहमये कटाहे

सूर्याग्निना रात्रिदिवेन्धनेन। [70]

मासर्तुदर्वीपरिघट्टनेन

भूतानि कालः पचतीति वार्ता।

---

